१०] ततश् चेन्द्रजितो वेश्म, जगाम हरि-यूथपः । [२०
विद्युन्मालेः सुमालेश् च, भवनानि ययौ कपिः[4] ॥१२॥
११] रश्मि-केतोश् च भवनं, सूर्य-शत्रोस्तथैव च । [२१
धूम्राऽक्षस्य च संपातो, भवनं मारुताऽऽत्मजः ॥१३॥
१२] विरूपाऽक्षस्य भीमस्य, घनस्य मघसस्य च । [२३
शुक-नासस्य वक्रस्य, शठस्य विकटस्य च [12] ॥१४॥
१३] ह्रस्व-कर्णस्य दंष्ट्रस्य, भीमाऽक्षस्य च धन्विनः ।[14] [२४
युद्धोन्मत्तस्य मत्तस्य, वज्र-ग्रीवस्य नादिनः [17] ॥१५॥
[१४ विद्युदुल्केन्दु-जिह्वानां, तथा हस्ति-मुखस्य च । [२५
करालस्य विशालस्य, शोणिताऽक्षस्य शङ्किनः ।
१५] क्रममाणः क्रमेणैव, हनुमान् व्यचरद् गृहान् ॥१६॥ [२६
तेषु तेष्व् अपतद् वीरो, भवनेषु महा-कपिः ।
१६] गृहे गृहे ऋद्धि-मतां, ऋद्धिं पश्यन्ननुत्तमाम् [27] ॥१७॥ [२७

---

१. अ–०श्चेन्द्रदुतो । २. ब ल$_2$ प्र–नास्ति । ३. य–मया । अ–यथा । ४. प्र–नास्ति ॥

५. ब रा ल$_1$,ल$_2$ प्र च–बहु-शालेश्च । ६. ल$_2$–सूक्ष्म० । ७. आ–०क्षस्याथ । रा ल$_2$ च–०क्षस्यापि । ८. आ फ ल$_2$ प्र अ च–संपातेर् ॥

९. प्र–प्रसूघस्य । १०. आ–शुकनाभस्य । अ–शंकुनाभस्य । ११ च–च महाकपेः । १२. ब रा ल$_1$ ल$_2$ प्र–नास्ति ॥

१३. आ फ–ह्रस्ववर्णस्य । १४. फ–रक्षसः । १५. ब रा ल$_1$ ल$_2$ प्र–नास्ति । १६. अ–वाजिनः । च–वादिनः । १७. ब रा ल$_1$ ल$_2$ प्र–नास्ति ॥

१८. ब रा ल$_1$ ल$_2$ प्र च–०न्दुजिह्वस्य । १९. आ रा ल$_1$ ल$_2$ प्र अ च–विशाचस्य । २०. ब ल$_1$–शोभिताक्षस्य । रा ल$_2$ प्र–शोभिता० । ल$_2$–शोभिक्षस्य च । २१. आ रा ल$_1$ ल$_2$ अ च–शंकुनः । प्र–चांकुनः । २२ ल$_2$–०व्यचरद् । २३. फ–गृहम् । अ–तदा ॥

२४. ब फ रा ल$_1$ ल$_2$ प्र अ च–०त्त्वपतन् । २५. ब फ–ऋद्धिमतां वृद्धिं । च–०श्वात्मवतामृद्धिं । २६. फ–कपि· । २७. ब रा ल$_1$ ल$_2$ प्र–नास्ति ॥

स सर्वेषाम् अति-क्रम्य, भवनानि महा-कपिः ।[1] [२८पू.
१७] आससादाऽथ लक्ष्मीवान्, रावणस्य[2] निवेशनम् ॥१८॥
१८पू] प्राकारेणाऽर्क-वर्णेन, महता सु-समा-वृतम् । [२
२५उ] रक्षितं[3] राक्षसैर् भीमैः, सिंहैरिव महा-वनम् ।
समीक्षमाणो नगरी, परिचक्राम वानरः ॥१९॥ [३
१९] मणि-रत्नौघ-सम्पन्नैस्, तोरणैर् हेम-भूषितैः ।
राजताभिश्च कक्षाभिः, स्तम्भैर् हेममयैः शुभैः ॥२०॥ [४
२०] महा-सत्त्वैर् महामात्रैः, शूरैश्चैव कृत-निश्चयैः ।
उपस्थितम् असंहार्यैर्, हय-स्यन्दन-यायिभिः ॥२१॥ [५
२१] सिंह-व्याघ्र-तनुत्राणैर्, दान्तै-काञ्चन-राजतैः ।
२२पू] घोषवद्भिर् विचित्रैश्च, सदाऽनुचरितं रथैः ॥२२॥ [६
३९उ] बहु-रत्न-महा-कक्षं, परार्ध्याऽऽसन-भाजनम् ।
N] महा-रथ-समावासं, महाऽऽसव-वराऽमृतम् ॥२३॥ [७
प्रेष्यैश्च परमोदारैस्, तैस्तैश्च मृग-पक्षिभिः ।

---

१. ख रा ल१ ल२ प्र—नास्ति । २. आ—राक्षसस्य ॥

३. ल१ प्र—रक्षितं । ४. ख फ रा ल१ ल२ म च—॰सैर्घोरैः । ५. ख रा प्र—समीक्ष्यमा॰ ॥

६. आ—मणेरत्नौघ॰ । ख—॰घसंपन्नस्तो॰ । ७. रा ल२ अ—॰हेमभूषणैः । ८. फ—राजतीभिश्च । ९. ख रा ल१ प्र—कक्ष्याभिः । १०. ख ल१ प्र—तैस्तैर्दे॰ । फ—तैस्तु हेमपरिष्कृतैः ॥

११. फ—०मैहामात्रैः ।१२. फ—शुभैः प्रकृतिनि॰ । १३. ख रा—॰यैः स्यन्दनैरनपायिभिः ॥

१४. रा प्र—दैन्त । १५. सदा॰नुरावितं ॥

१६. ल२—॰हाकक्ष्यं । ख रा ल१ ल२ म प्र च—वज्ररत्नम॰ । १७. ख रा ल२ म प्र च—महाहर्रत्न सं॰ । ल१—महार्धरत्न सं॰ । अ—महारथसंवासं । फ—महद्धर्मसंवासं । १८. फ—॰सवपरा॰ । ख रा ल१ ल२ म प्र अ च—॰सनवरा॰ ॥

४०] विविधैर् बहु-साहस्रैः, परि-पूर्णं समन्ततः ॥२४॥ [८
N] विनीतै रक्ष-पालैश्च, राक्षिभिश्च समा-वृतम् ।
४१पू] मुख्याभिश्च वरस्त्रीभिः, समन्तात् परिवारितम् ॥२५॥ [९
मुदित-प्रमदं रम्यं, राक्षसेन्द्र-निवेशनम् ।
N] सर्वाऽऽभरण-निर्ह्रादैः, समुद्रमिव स-स्वनम् ॥२६॥ [१०
N] दिव्येनाऽगुरुणा युक्तं, दिव्यैश्च वर-चन्दनैः ।
२२३] स्वाहाकार-वषट्कारैर्, ब्रह्मघोषैर्निनादितम् ॥२७॥ [N
भेरी-मृदङ्गाऽभिरुतं, शङ्ख-घोषाऽभिनादितम् ।[11]
२३] नित्यार्चित-महापूजं, सदा पर्वसु राक्षसैः [15]॥२८॥ [१२
२४पू]समुद्रमिव गम्भीरं, पर्जन्यमिव स-स्वनम् । [१३पू
यातुधान-शतैर् गुप्तं, नागैर् भोग-वतीमिव [18]॥२९॥ [N
N] महाऽऽत्मनो महा-वेश्म, महा-सत्त्वैः सु-रक्षितम् ।
महाजन-समाकीर्णं, हंसैः सर इवाऽऽकुलम् ॥३०॥ [१३

---

१. घ रा ल$_1$ ल$_2$ म प्र च-विहितैर्व॰ । २. ल$_1$-परिपूर्णा ॥

३. आ फ अ-रक्षप॰ । ४. आ-मापिभि॰ । ५. व क रा ल$_1$ म प्र-सुसंवृ॰ । ल$_2$-सुसंस्कृ॰ । अ-समावृ॰ । ६. रा-परस्त्रीभिः ॥

७. घ रा ल$_1$ ल$_2$ म प्र च-मुदितं सर्वतो रम्यं । ८. घ रा ल$_1$ ल$_2$ म प्र अ च-वराभरण॰ । फ-॰णसंहृदैः । ९. आ रा-निस्वनं । फ-सुस्वनम् ॥

१०. घ ल$_1$ ल$_2$ प्र च-सिक्तं । रा म-सक्तं । ११. घ रा ल$_1$ म प्र-घैश्च नादि॰ । फ म-॰पनिना॰ । च-॰पैर्वि॰ ॥

१२. घ रा ल$_1$ ल$_2$ म प्र-॰ह्राभियुतं । १३. घ रा ल$_1$ ल$_2$ म प्र अ-॰पनिनादि॰ । १४. फ च-नास्ति । १५. ल$_1$ अ-नित्योपघ॰ । ल$_2$-॰महापूज्यं । १६. फ-नास्ति ॥

१७ रा-गुप्तं । १८ फ-नागैश्च सुमहामात्यैः सदा पर्वसु पूजितम् ॥

१९ फ-महासत्त्वं जनाकीर्णं । अ-महासत्त्वजनाकीर्णं । ल$_1$-महाजनैः समा॰ ॥

२८] वि-राजमानं वपुषा, रथाऽश्व-गज-संकुलम् ।

२९उ] लंकाऽऽभरणमित्येवं, सोऽमन्यत महा-बलः ॥३१॥ [१४

रावणस्य समीप-स्थां(ऽस्था)म्, ततः स समुदैक्षत ।

N] विचरन् हरि-शार्दूलो, राक्षसीर् विकृतेक्षणाः ॥३२॥ [२९पू

शूल-तोमर-हस्तानां, शक्ति-मुद्गर-पाणिनाम् । [२९उ

३०] ददर्श विविधान् गुल्मांस्, तस्य रक्षःपतेर् गृहे ॥३३॥

३४उ] रक्त-श्वेत-सिताश्चाऽपि, हरीन् अथ महा-जवान् । [३०पू

N] कुलीनान् रूप-संपन्नान्, ददर्श हरि-यूथपः ॥३४॥

ऋक्षकांस् ताल-वर्णाश् च, शोण-पाटल-रोमकान् । [N

३५] मीलकाऽक्षीन् प्रमाणोऽऽढ्यान्, ह्रस्व-कर्णोष्ठ-नासिकान् ॥३५॥

आरट्टजान् वाह्लिकांश्च, काम्बोजान् शुभ-लक्षणान् । [N

---

१. घ रा ल$_{2}$ म प्र-गृह विराजद्वपुषा । ल$_{1}$-गृहं विराजद्वपुष । च-विराजमानं गृह वपुषा । २ घ फ ल$_{2}$ रा म प्र च-गजाश्वरथ सङ्कु० ॥

३ घ फ रा ल$_{1}$, ल$_{2}$ म प्र अ च-०णमित्येव । ४ आ-शोभतेति । अ-सोवमन्यत् ॥

५ आ घ रा ल$_{1}$, ल$_{2}$ म प्र च-०स्यांस्तथासौ । ६ आ घ ल$_{1}$, ल$_{2}$ म अ च-समवैक्षत । प्र-समचक्षत । ७ घ रा ल$_{1}$, ल$_{2}$ म प्र च-विचित्रां । ८ आ-राक्षसैर्विकृते-क्षणै । घ रा ल$_{1}$, ल$_{2}$ म प्र च-राक्षसान्विकृतेक्षणान् ॥

९ घ रा ल$_{1}$, ल$_{2}$ म प्र च-शूलमुद्गरहस्तांश्च । फ च-शूलमुद्गर-हस्तानां । १०. घ रा ल$_{1}$ म प्र च-गदातोमरधारिण. । ल$_{2}$ च-गदातोमरपाणिनः । फ-शक्तितोमरपाणिनाम् ॥

११ य रा ल$_{1}$ म च-रक्तश्वेता सिता० । ल$_{2}$-रक्तश्वेतास्तथा चापि । फ अ-रक्तश्वेतान् सितान् पीतान् । ध-रक्तान्पीतान्सितान् नीलान् । १२ घ रा ल$_{1}$,ल$_{2}$ म प्र च-हरींश्चापि । घ-हरींश्च स ॥

१३ घ-०टललोम० । अ-०टलि-रोम० । प्र-०टलरूप० । १४ च-मल्लि कक्ष्यान् । १५. घ रा ल$_{1}$, ल$_{2}$ म प्र च-प्रवालाढ्यान् । १६ आ-ह्रसवर्णा-ष्ठनासिकान् ॥

१७ ल$_{2}$-आरट्टकान् । १८ फ-वाह्लिजांश्च । १९. च ल$_{2}$-कामोजान् । २०. ल$_{2}$-शुभलक्षणान् ॥

३६] गृहाण्यन्यानि मुख्यानि ददर्श कपिकुञ्जरः ॥३६॥
ततः सुविहितान् हृष्टान् शौण्डीर्यान् सुपुष्टितान् । [N
३७] कुर्वीतान् नर्म-भैरवान्, गजान् वैरगजान्(रि)जातान् ॥३७॥[३१उ
३२पू] निविष्टान् गज-निष्ठानान्, ऐरावण-समान् युधि ।
३४पू] हन्तुं च पर-सैन्यानां, गृहे तस्मिन् ददर्श सः ॥३८॥ [३२
N] क्षरतश्च महा-मेघान्, स्रवतश्च यथा गिरीन् ।
३२उ] मेघ-स्तनित-निर्घोषान्, दुर्धर्षान् समरे परैः ॥३९॥ [३३
सहस्रं वाजिनश्चात्र, जाम्बूनद-परिष्कृतान् ।
३३] सं हेमजालैर् विततान्, तरुणाऽऽदित्य-संनिभान् । [३४पू
३७पू] ददर्श राक्षसेन्द्रस्य, रावणस्य निवेशने[13] ॥४०॥ [३४उ
शिबिका विविधाऽऽकाराः, स कपिर् मारुताऽऽत्मजः ।
N] लता-गृहाणि रम्याणि, चित्रशाला-गृहाणि च ॥४१॥ [३५
क्रीडा-गृहाणि दिव्यानि, तथा मणि-गृहाणि च ।
N] कामस्य च गृहं रम्यं, निशा-गृहमनुत्तमम् ।[19] [३६पू०

---

१. रा प्र–प विहि० । ल१ ल२ स च–सुविहितान् । २. फ–निषाद-न्वान् स्वधिष्ठितान् । अ–निषादन्तान् सुधिष्ठितान् । च–निषादैलाश्च संयु० । म व प्र रा ल१ ल२–विषादेन च संयुतान् । ३. रा–जनान् । ४. व रा ल२ म प्र परगजारुजान् । अ च–परगजारुजः ॥

५. रा म प्र–हन्तुंश्च ॥

६. य रा ल१ ल२ म प्र च–गर्जतश्च । फ–क्षरन्तश्च । ७ व रा ल१ ल२ म प्र अ च–यथा मेघान् ॥

८. आ ल१ प्र–द्रवतश्च । फ स-स्रवतश्च । ९. फ–दुर्धर्षान् सुरैरपि ॥

१०. फ–सहस्रवाहि० । ११. प रा ल१ ल२ म प्र अ च–हेमजालैरवत० । फ–०जालैरवचिता० । १२ य ल२ म प्र च–०त्यसमभान् । ल१–त्यसुप० । १३. आ–निवेशनम् ॥

१४. ल२–पत्रशा० ॥

१५. च–चन्द्रयानि । १६. व रा ल१ ल२ म प्र अ–नास्ति । १७. ल२ च–कामस्य तु । फ–कामगन्तु । १८. फ–दिव्यं । १९. अ–नास्ति ।

दद‍र्श राक्षसेन्द्रस्य, रावणस्य नि-वेशने ॥४२॥ [३६उ

३७] स मन्दर-तेल-प्रख्यं, मयूर-शत-संकुलम् ।

ध्वज-यष्टिभिर् आ-कीर्णं, ददर्श भवनोत्तमम् ॥४३॥ [३७

३८] अनेक-रथ-संपूर्ण, निधि-जालाऽवतंसकम् ।

३९पू] वीर-निष्ठित-कर्मान्तं, गृहं भूत-पतेरिव ॥४४॥ [३८

४१उ] अर्चिर्भि चैव रत्नानां, तेजसा रावणस्य च ।

४२पू] विरराज च तद्वेश्म, रश्मिवानिव रश्मिभिः ॥४५॥ [३९

जाम्बूनद-मयान्य् एव, भाजनान्य् आसनानि च ।

४७पू] भूषणानि च शुभ्राणि, ददर्श कपि-कुञ्जरः ॥४६॥ [४०.

४७पू] मध्वाऽऽसवं-कृत-क्लेदं, मणि-भाजन-सं-कुलम् ।

४३पू] मनो-रमम् अ-सं-बाधं, कुबेर-भवनोपमम् । [४१

४८पू] शोभयन्ति स्म तद्वेश्म, शोभमाना वर-स्त्रियः ॥४७॥ [N

---

य प्र-अतः परमधिकः पाठः

शिबिका विविधाकाराः, स कपिर्मारुतात्मजः ।
लतागृहाणि रम्याणि, चित्रशालागृहाणि च ॥

१. आ-मंदरगृहप्रख्यं । २. य रा $ल_1$, $ल_2$ म प्र च-मयूरस्थान० ३. रा-नास्ति ॥

४. य $ल_1$, $ल_2$ म प्र च-०रथ-संकीर्ण । अ-०रथसंपूर्ण रा-नास्ति । ५. य रा $ल_1$, $ल_2$ म च-धीरनिष्ठित० फ-धीरप्रतिष्ठितकर्मान्तं ॥

६-आ-अभिपेदे म । फ-प्रभया चैव । अ-प्रभया च० । ७. य रा $ल_1$, $ल_2$ म प्र च-विराजाय । ८. य रा $ल_1$, $ल_2$ म प्र च-रश्मिभी रश्मि-मालिनः । अ-रश्मिभिः सुमनाहितम् ॥

९. य रा $ल_1$, $ल_2$ म च अ-राजतान्यास० । १०. फ अ-भोजनानि । ११. य रा $ल_1$, $ल_2$ म प्र अ च-विचित्राणि । फ-च सुखानि । १२. य रा $ल_1$, $ल_2$ म प्र अ च-कपियूथपः फ-हरियूथपः ॥

१३. आ-०वकूलपदं । १४. य रा $ल_1$, $ल_2$ म प्र अ-०सदनप्रभम् । अ फ-०भवनप्रभम् । १५. फ अ-यथा स्वर्ग ॥

४४उ] नूपुराणां च घोषेण, काञ्चीनां निनदेन च । 
४५पू] मृदङ्ग-ताल-घोषैश्च, घोषवद्भिर् निनादितम् ॥४८॥ [४२
N] प्रासाद-संघात-युतं, क्रौञ्च-सारस-नादितम् । [४३पू
४५उ] कृताऽऽगार-शतैर् युक्तं, गन्धर्व-नगरोपमम् ॥४९॥ [N
चन्दनाऽगुरु-कर्पूरैर्, दिव्य-धूपैः प्र-धूपितम् ।
N] माल्य-दामभिराकीर्णं, पुष्प-भक्ति-विचित्रितम् ॥५०॥ [N
दिव्य-गन्धाऽवसिक्ताभिर्, दीपिकाभिर् विदीपितम् ।
N] लोकपालान् पराजित्य, तत्प्रभाभिरिवोज्ज्वलम् ॥५१॥ [N
N] तुंगानि सौध-वेश्मानि, घोषयन्ति वराऽङ्गनाः ।
४८उ] यथा कैलास-शृंगाणि, शतशः किन्नरी-गणाः ॥५२॥ [N
४६पू] स्त्री-वेषैः स्त्री-समाचारैर्, वनितोऽङ्ग-पयोधरैः ।[15]
N] उत्कृष्ट-नूपुर-रवैः, सरो हंसैरिवाऽऽवृतम् [17] ॥५३॥ [N

---

१. घ रा ळ१ ळ२ म प च–०तालघोषेण । २. रा ळ२ प्र–घोषव० । ळ१–किंकिणीभिश्च ना० ॥

३. प्र–०वसंयतायुक्तं । ४. फ अ–०संकुलम् ॥

५. व रा ळ१ म प्र–द्विव्यैर्धूपैश्च धू० । ळ२–दिव्यधूपैश्च० ॥

६. अ–०पिकाभिः प्रकाशितम् ॥

७. व रा ळ१ ळ२ म प्र च–परित्यज्य ।

८. रा–०भिरिवोज्ज्वलत् ॥

९. आ–घोषैर्वेश्मानि । १०. फ–शोभयन्ति स्म तद्वेश्म शोभमाना वरस्त्रियः । ११. फ अ–कैलाश ।

१२. आ–किंनरीगणः ॥

१३. व रा ळ१ ळ२ म प्र–स्त्रीवेशैः स्त्री० । १४. अ–०चौरश्रविता०)

१५. अतः परमधिकः पाठः—

म–इतश्चेनश्च धावद्भिर्वृतं वर्षशतैरपि ।
अ–इतश्चेतश्च धावद्भिर्वृतं वर्षवरैरपि ॥

१६. ळ२–स रत्नशतसंकुलम् । १७. अ आ–नास्ति ॥

N] इतश् चेतश् च धावद्भिर्, द्वैतं चर्म-धरैर् अपि ।
विनीत-जन-संबाधं, स्त्री-रत्न-समाकुलम् ॥२४॥[5] [N
४९] स व्यूढ-कक्षं हनुमान्, प्रविवेश महद् गृहम् । [४३३
N] रशना-नूपुर-स्वनैर्, मनो हंसैरिवाऽऽकुलम् ॥२५॥ [N

इत्यार्षे रामायणे सुन्दरकाण्डे लङ्का-विषयो
नाम चतुर्थः सर्गः ॥४॥

१. ग घ–०त्रिंशैः । २. ध रा ग ङ घ–विरताविव । ३ ध रा ग ङ–र्थ [illegible] । ४ [illegible] ध–[illegible] ॥

५. ध रा–व्यूहकक्ष । [illegible] ग ङ घ–व्यूढकक्षं । ६. [illegible] [illegible] । ७ [illegible] ग ङ घ घ–[illegible] ॥

८. [illegible] । [illegible] विषयो ॥

तस्यैतेन मे(?चि)को(?ष्ट)ष्ठस्य, मध्ये विपुलमायतम् ।
६] ददर्श भवनं श्रेष्ठं, हनूमान् हरि-यूथपः ॥१॥ [१
स मार्गमाणो वैदेहीं, सीतां कमल-लोचनाम् ।
N] वानरः परि-चक्राम, हनूमाञ् छत्रु-सूदनः ॥२॥ [२
३पू] अर्ध-योजन-विस्तीर्णं, सार्ध-योजनम् आयतम् ।
N] तद् गृहं राक्षसेन्द्रस्य, बहु-प्रासाद-संकुलम् ॥३॥ [२
चतुर्-विषाणैश्च गजैर्, द्वि-विषाणैस् तथैव च ।
N] परि-क्षिप्तम् असंबाधं, रक्ष्यमाणम् उदाऽऽयुधैः ॥४॥ [५
राक्षसीभिश् च पत्नीभी, रावणस्य निवेशनम् ।
आहृताभिश् च विक्रम्य, राजकन्याभिरावृतम् ॥५॥ [६
तं नक्र-मकराऽऽकीर्णं, तिमिंगिल-झषाऽऽकुलम् ।
N] वायु-वेग-समुद्धूतं, पन्नगैर् इव सागरम् ॥६॥[१३] [७

---

१. फ-तस्यालयं । च अ-तस्या-लय० । २. फ अ च-वरिष्ठस्य । ३. फ रा च य म प्र ङ$_1$ ङ$_2$ अ-मवलग्ने० । ४. अ-मारुतात्मज. ॥
५. रा य म प्र ङ$_1$ ङ$_2$-नास्ति॥
६. आ अ-सार्धयो० । च-सार्धयोजनमायताम् ॥
७. आ ङ$_1$ ङ$_2$-रक्षमा० य-वध्य० ॥

८. च य म प्र ङ$_1$ ङ$_2$-राक्षसीभिः । ९. फ-स पहुमी । च य म प्र ङ$_1$ $_2$-पपत्नीभी । अ-स बह्वीभी । १ म-नास्ति । हरिता-श्रित इव ॥
११. फ-उत्कर्मक्रा० । रा प्र ङ$_1$ ङ$_2$-उत्कर्षमकरा० । १२. रा च य म प्र ङ$_1$ ङ$_2$-०गसमश्रयं । १३. म-नास्ति ॥

या च वैश्रवणे लक्ष्मीर्, या चेन्द्रे हरि-वाहने ।
N] सा रावण-गृहे पश्चौ, नित्यमेवाऽनपायिनी ॥७॥ [८
यादृशं हि कुवेरस्य, यमस्य वरुणस्य च ।
N] तादृशं तद्विशिष्टं वा, तस्य रक्षः-पतेर् गृहम् ॥८॥ [९

[वं–N] ततो ददर्शाऽद्भुत–हेम–जालं, [ दा–७ ]
व्यासक्त-वैडूर्य-सुहेम-जालम् । [१पू
विद्युद्विनद्धं स-विहंग-जालं, [१४
तडिद्विनद्धं स विहंग-जालम् ॥९॥ [N
ददर्श नानाविध-वाजि-शालाः, [N
प्रधान-शालाश् च शशांक-शालाः ।
मनोहराश् चाऽपि पुनर् विशाला,
ददर्श वेश्मादिषु चित्र-शालाः ॥१०॥ [२
गृहाणि नानावसु-राजितानि,
देवाऽसुरैश् चाऽपि सु-पूजितानि ।

१. प्र–यथा । २. फ ल१ ल२–हरिवाहणे । घ प्र–हरिवाहिनी । ३. फ–या सा । रा घ म प्र ल१ ल२–लक्ष्मीर् । ४. च प्र–॰वानुयायिनी । घ–॰मेवावपा॰ ॥
५. फ–नाकस्पतेर्गृ॰ ॥

१. च प्र ल१ ल२–॰हूर्यसहेम॰ ॥ २. ल२–विद्युत्पिनद्धं । ३. म–हरिवालित इव पादः । ल२–नास्ति । ४. ल२–तडिद्विरुद्धं । ५. ल१ ल२–नास्ति पादः । ६. आ फ–अतः श्लोकादारभ्य यावदुपजातिवृत्तं पाठो न दृश्यते । अ–'गृहोत्तमं सुमतिपरूपमित्यन्तः पाठो नास्ति ॥
७. प्र–नाना विविधा विशालाः । ल१–नानाविधवाजिशालं । ८. रा म–विहगशालाः । ९. अतः परमधिकः पाठः—
ल१—कपिप्रधीरो धृतहस्ततालाः (?) ।

सर्वैश्च दोषैः परि-वर्जितानि,
कपिर्ददर्शाऽति-बलाऽर्जितानि ॥११॥ [३

तानि प्रसन्नानि समाहितानि,
मयेन तत्राऽपि विनिर्-मितानि ।
महीतले सर्व-गुणाऽन्वितानि,
ददर्श लंकाधिपतेर् गृहाणि ॥१२॥ [४

ततो ददर्शोन्छ्रित-शैल-रूपं,
मनोहरं काञ्चन-चारु-रूपम् ।
रक्षोऽधिपस्याऽऽत्म-बलाऽनुरूपं,
गृहोत्तमं सुं-प्रतिपन्न-रूपम् ॥१३॥ [५

नाना-तरूणां कुसुमाऽवकीर्णं,
गिरेरिवाऽग्रं रजताऽवकीर्णम् । [६उ
नारी-प्रवेकैर् अपि दीप्यमानं,
तडिद्भिर् अंभोदमिवेध्यमानम् ॥१४॥ [७पू

---

१. प्र-०तिबलार्जितानि ॥ | २. ब रा च म प्र-स प्रतिपन्न०।

३. अत्र परमधिकः पाठः—
च—महीतले स्वर्ग इव प्रकीर्णम् । †
च—प्रक्रीडितैः सूर्यसमानरूपम् ॥ ‡

४. प्र-कुसुमावकीर्णम् । ५ अ-धि० । ६ प्र ल१ ल२ य-०द्रामि-वेदमानं । रा-०म्भोदधिमेध्य० ।
७. अत्र परमधिकः पाठ —
म च—हंसप्रवेकैरतिवर्धमान वेश्मान्तमेवाभिसमुह्यमानं ।
च—महाकपिस्तत्र महाविमानं ।
म—मनः प्रवेकैरिव वाह्यमानं ।
श्रियावृतं तं सुकृतं विमानं ।
पुष्पाह्वय नाम विराजमानं ॥
रत्नप्रवेकैरभिवर्द्धमानम् ॥

---

† घ म—महीतले स्वर्गमिव प्रकीर्णम् ।
‡ म—प्रक्रीडितैस्तूप(र्यै) शतानुकीर्णम् ।

यथा नगाऽग्रं बहु-धातु-पूर्णं, [८

महीभृतं[1] काञ्चन-राजि-पूर्णम्[2] ।

अलंकृतं वृक्ष-वितान-पूर्णं, [९पू

पुष्पैर् वृतं[3] केसर-रत्न-पूर्णम् ॥ १५ ॥

कृतानि वेश्मानि सु-पुष्कलानि,

पुनश् च पद्मोत्पल-केसराणि[4] ।

वनानि चित्राणि मनो-हराणि, [१०

पश्यन् विचित्राणि[5] चचार मारुतिः ॥१६॥[6] [N

कृताश्च वैडूर्य-मया विहंगाः,

रूप्य-प्रवालैश्च[7] पुनश् चिताऽगाः[8] ।

चित्राश् च नाना-वसुभिर् विहंगाः,[9]

पुष्पाऽऽह्वये[10] भक्ति-चिताः कुरंगाः[11] ॥१७॥[१२

---

१. प्र अ—महीभृतां। २. च म—शैलं कृतं। ३. अ—पुष्पैः वृतं ॥

४. च ल२—सुपुष्कराणि। अतः परमधिकः पाठः—

ल१ च म—यथा प्रफुल्लानि च पुष्कराणि।

५. अ—नाना विचित्राणि। ६. अधिकः पाठः—

ल१—मृगाकुलान्यत्र घनावराणि।

७. घ रा ल१ ल२ म प्र अ—नास्ति पादः ॥

८. रा—रूपप्रवा०। अ—रत्नप्रवा०।

९. अ—॰सुभिर्भुजंगाः। म प्र ल१—नास्ति पादः। १०. अ—पुष्पाक्षये। ११. अतः परमधिकः पाठः—

रा—द्विजाश्च पक्षार्चितरक्ततुण्डाः। *

च—रक्ताश्च चामीकररक्ततुण्डाः ॥†

रा अ च—प्रवालजाम्बूनदरक्तपक्षाः ।

च—सनीलमावृत्य विजित्य पक्षाः।‡

---

* च—द्विजाश्च पक्षार्चितनक्रतुण्डाः।

अ—शिताश्च पक्षाः शितरक्ततुण्डाः।

† अ—द्विजाश्च चामीकररक्ततुण्डाः।

‡ अ—सनीलमाश्रित्य विहंगपक्षाः। रा-

नियुध्यमानाश्च गजाः सु-हस्ताः, [१४
　　　तथैव पद्मोत्पल-दाम-हस्ताः । [N
लक्ष्मीस्तथा पद्म-वितान-हस्ता, [१४
　　　गृहाऽन्तरे राजति तस्य संस्था ॥१८॥ [N
इत्थं स तद् गृहम् अभिवीक्ष्य सुन्दरं,
　　　सु-विस्मयं नगमिव चारु-कंदरम् ।
पुरं च तत् परम-सुगंधि-मंदिरं,
　　　हिमाऽत्यये नगमिव चारु-सुंदरम् ॥१९॥ [१९
ततः स तां कपिर् अवीक्ष्य पूजितां,
　　　वरां पुरीं तदधिप-बाहु-निर्जिताम् ।
ददर्श नो जनक-सुतां गुणाऽन्विताम्,
　　　सु-दुःखितां पति-गुण-वेग (?) वर्जिताम् ॥२०॥ [१

रा अ च—कामस्य साक्षादिव भान्ति पक्षाः ।
　रा अ—कृता विहंगा सुमुखाः सुपक्षाः ।

१. ल१ ल२—संयुध्य० । २ अ—। पादः । ३. च अ—लक्ष्मीस्तदा । व ल१ ल२ अ—पद्मानिमप्रहस्ता । व अ—गृहांगणे । ६. अ ल१— ।
७. य—शंयः? । ८. ल१ ल. सविस्मयं । ९. च—नागमिव । १०. अ—नास्ति पादः । ११. च अ ल२—चारुमन्दिरं । अ ल१—चारुमन्दरं । अ—अतः परमधिकः पाठः—

ददर्श नानाविध-वेश्म-सुन्दरम् ॥

१२. ल१—०पबाहुवर्जितां । ल२—०हुपालितां १३ च—गुणार्चितां ।
अ—गुणान्वितां? । १४. म—०गुणेवेदाव० । अ—हरिर्भुवाधिकदुःखदुःखितः ।

ततस्तदा बहुविध-भाविताऽऽत्मनो,
महात्मनः स्वयम् उचिताऽऽर्य-वर्त्मनः ।
अपश्यतोऽभवद् अति-दुःखितं मनो,
वपुष्मतः प्रवि-चरतो महात्मनः ॥२१॥ [१७

इत्यार्षे रामायणे सुन्दर-काण्डे रावणै-भवन-वर्णनं
नाम सर्गः ॥

१. च–स्वयमनुविचार्यैव० । ल₁–स्वयमुद्दिवार्यव० । अ–रघुसंचिरार्यव० ॥ २. रा–श्रीरामायणे । ३. रा म प्र ल₁ ल₂–भवनवर्णनं । अ–भवनवर्णनो ॥

[घं-N]　　　*२२वा-पुष्पक उपरि मुख्यपाठः।*　　　[दा-२]

वेश्मनस्तस्य मध्यस्थम्, अन्यद् वेश्म विनिर्मितम् ।
दिव्य-निर्यूहे-संकीर्णं, ददर्श हनुमान् कपिः ॥२२॥ [१०
ब्रह्माऽर्थं हि² कृतं दिव्यं, दिवि यद् विश्व-कर्मणा ।
विमानं पुष्पकं नाम, सर्व-कोम-पमं शुभम् ॥२३॥ [११पू
परेण तपसा लेभे, यैव कुबेरः पितामहात् । [११उ
कुबेराद् ओजसा लेभे, रावणस्तद् गृहोत्तमम् ॥२४॥ [१२
ईहामृग-समा-युक्तं, कार्तस्वर-हिरण्-मयम् ः ।
सुकृतैर् आवृतं स्तंभैः, प्रदीप्तमिव च श्रिया ॥२५॥ [१३
मेरु-मंदर-संकाशैर्, उल्-लिखद्भिर् इवांऽम्बरम् ।
कूटाऽऽगारैः शुभांऽऽकारैः,सर्वतः समलंकृतम्॥२६॥ [१४
ज्वलनाऽर्क-प्रतीकाशैः, सु-कृतैर् विश्वकर्मणा ।
हेम-जाल-प्रतिच्छन्नं, रत्न-वैडूर्य-वेदिकम् ॥२७॥ [१५

---

१. घ म-मध्यांतरन्यद् । प्र-वेशांतर० । छ₁-मध्यांतर० । २. फ-दिव्यनिगूढ० । रा च म प्र छ₁ छ₂-दिव्यं निगूढं स । घ-दिव्यं निर्गूढं स० अ-दिव्यं निर्व्यूह० ॥

३. रा-विकृतं । अ-विहित । ४. च-मं शुभम् । अ-सर्वकामफलप्रदं ॥

५. म-यः । ६. घ च फ म प्र छ₁-कुबेरात्तेजसा ॥

७. फ अ-ईहामृगगणाकीर्णं । रा च घ म प्र छ₁ छ₂-चित्रैर्मृगै. समायुक्तं । ८. फ रा च घ म प्र छ₁ छ₂ अ-कार्तस्वरहिरण्मयैः । ९. च घ म फ छ₂ अ-सुकृतैरा० । प्र-सुकृतमा० । सुकृतं चावृ० ॥

१०. रा च म प्र छ₁ छ₂-शुभाचारैः । आ-शुभागारैः । घ-शुभागारैः । ११. फ-सर्वतः ॥

१२. च घ म प्र छ₁ छ₂-सुकृतं वि० । रा-स्वकृतं वि० । १३ फ रा च घ म प्र छ₁ छ₂-समवै० ॥

सर्व-रत्न-समा-कीर्णं, तपनीय-विचित्रितम् । [N

जाल-वातायनैर्युक्तं, काञ्चन-स्फाटिकैरपि ॥२८॥ [१६पू

हैमैर् आभरणैः श्लक्ष्णैः, प्रसृतैः सु-समाहितैः ।

इन्द्रनील-महानील-मणि-प्रवर-वेदिकम् ॥२९॥ [१६उ

---

[बृं-N]प्रतप्त-जांबूनद-जाल-चित्रितं, [वा-८]

दर्दर्श वीरः पर-वीर-हा कपिः । [१उ

तदप्रमेय-प्रतिकार-कृत्रिमं,

स्वयं कृतं साध्विति विश्वकर्मणा ॥३०॥[2]

दिवं-गमं वायु-पथे प्रतिष्ठितं,

व्यरोचताऽऽदित्य-पथस्य लक्ष्मवत् । [२उ

यद् यत् पृथिव्यामभिराम-रूपं,

तत् तत् कृतं भूमि-तलेऽपि तस्य ॥३१॥ [N

नाऽस्फाटिकं नाऽमणिरत्न-पूर्णं,

नाऽराजतं किञ्चिद् अकाञ्चनं वा ।

वनानि शैलौ नगराणि नद्यः,

सरांसि चित्राणि च काञ्चनानि ॥३२॥ [N

तले बभूवुः स्फटिकांऽतराणि,

तस्मिन् विमाने तपसो निधाने ।

---

१. घ–०रत्नसमुत्कीर्णं । २. फ रा च व, म प्र $ल_1$ $ल_2$ य–कांचनैः स्फा० ॥

३. रा च य म–हैमैरारोहणैः । प्र–हेमैरारोहणैः । ४. प्र–तीक्ष्णैः । ५ फ–सुसमाहृतैः । ६. इन्द्रनीलसम नील० । रा–इन्द्रनीलमयानील० ॥

---

१. साधिते । $ल_2$–स्वधिति । २ आ फ अ–अत आरभ्य सर्गसमाप्तिं यावत्पाठो नास्ति ॥

३. च–शैलो । ४. प्र–कंवलानि ५. घ म प्र $ल_2$–स्फटिकेतराणि

भूस्तत्र रक्तोत्पल-पत्र-चित्रैः,
        कीर्णा स-हेमोत्पल-पत्र-रेणुः ॥३३॥[1] [N

यथा-विधा राज-वरोचैर्मांऽगे,
        चूडासु चूडा-मणयो वि-भान्ति ।
तथा-विधास्तत्र कृता विमाने,
        स्तंभांश्च जालानि च वेदिकाश् च ॥३४॥[N

स्तंभ-प्रमाणान्य् अविलम्बितानि,
        स्तंभानि(?) चित्राण्य् अपि चोत्तमानि ।[6]
तत्रांऽपि वैडूर्य-कृतं विशालं,
        यथा स-तारा-गणम् अन्तरिक्षम् ॥३७॥[8] [N

न तत्र किञ्चिन् न कृतं मयवाचे,
        न तत्र किञ्चिन् न महाऽर्ह-रत्नम् ।
न तत्र किञ्चिन् न महा-विशेषं,
        न ते विशेषा नियताः सुरेष्वपि ॥३८॥ [3

---

१ प्र-कृष्णे । ल१-कृष्णः । २ धा भ फ च-अधिक. पाद । रथोत्तमर्णश्च सुवर्णरेणु ॥ ३. ल२-०वरोत्तमागके । ४. घ रा म प्र ल१ ल२-विमान० । ५ च-स्तनश्च ॥

६ अतः परमधिकः पाठ —

च—द्रुमानि पद्मोत्पलचपकानां ।
प्रसक्तमुक्तोचकृतं सुरम्यं ॥

७ च-तत्रेद । ल२-तत्रास्य । ८. स्तादिपप्रामाण्यमेतत् पद्यम् । तथाहि स्तम्भादिपदक्लीवत्वमुपेक्ष्यम् ॥ ९. घ भ प्र ल१ ल२-मयत्न ॥

तपः-समाधान-पराक्रमाऽर्जितं,
मनः–समाधान-विचार-चारितम् ।
अनेक-संस्थान-विशेष-निर्मितं,
ततस्ततः श्लक्ष्ण–विशेष–दर्शनम् ॥३७॥ [४

सुराऽसुराणामपि दुष्प्रधर्षणं,
दुरा-सदं मारुत–वेग–दर्शनम् । [५
महात्मनाम् उग्रतपः कृताऽऽत्मनां,
यशस्विनां पुण्यकृतां यथाऽऽलयम् ॥३८॥ [५६

विशेषितोच्चासन–संप्रति–ष्ठितं,
वि-चित्र-कूटं बहु-कूट-मण्डितम् ।
मनोभिरामं शरदे (दि) व(न्दु) निर्मलं,
महाऽभ्रकूटं विविधाऽभ्र-मण्डितम् ॥३९॥ [७

वहन्ति यत् कुण्डल-शोभिताऽऽनना,
मनो–जवा भूत–गणाः सहस्रशः । [७पू
वसन्त–पुष्पोत्कर–चित्र–दर्शनं,
वसन्त–मासाद् अपि कांत-दर्शनम् ।
स पुष्पकं नाम विमानम् उत्तमं,
दद‍र्श तद् वानर-वीर-सत्तमः ॥४०॥ [८

इत्यार्षे रामायणे सुन्दर-काण्डे पुष्पकवर्णनं
नाम सर्गः ॥

---

१. रा ल$_2$–वतः स० । २. ल$_1$ ०धानपैः समा० ॥
३. म–दुष्प्रदर्शनं । ४. घ–जरा-सदं । च ल$_2$–दुराधरं । ५. च–घपालयम् ॥
६. च–विशालतोच्चासनं । प्र–विशेषतो० । ७. रा च प्र ल$_1$ ल$_2$–शारदीव । ८. प्र–निर्मितम् ॥
९. रा– ०न्तपुष्पोद्गमचारुद० । १०. प्र–बाह्यवि० । ल$_1$–चैव । ११. घ म प्र ल$_1$–०समुत्तमः ॥

[वं-१३]   ( ४८अ-पृष्ठत उपरि मुख्यपाठः )   [दा-९]

५उ] आरुरोह हरि-श्रेष्ठो, विमानं पुष्पकं शुभम् ॥२१॥[1] [१९उ

N] स[2] तत्र[3] गन्ध(?न्धं)-संयु(?स)क्तं,पान-माल्याऽनुमक्षजम्।[5]

८उ] दिव्यं संमूर्च्छितं जिघ्रन्, रूपवन्तम् इवाऽनिलम्॥४१॥ [२०

स गन्धस्तं महा-सत्त्वं, बन्धुर् बन्धुमिवोत्तमम् ।

९] इत एहीत्युवाचैनं, तत्र यत्र स रावणः ॥४२॥ [२१

ततस्तां प्रस्थितः शालां, ददर्श महतीं शुभाम् ।

१०] रावणेन परांऽऽक्रांतां, कान्ताम् इव वर-स्त्रियम्॥४३॥ [२२

मणि-सोपान-विकृतां, हेम-जाल विराजिताम् ।

११] स्फाटिक-प्रावृत-तलां, दन्तान्तरित-रूपिकाम् ॥४४॥ [२३

मुक्ता-मणि-प्रवालैश्च, रूप्य-चामीकरैर् अपि ।

---

१. फ-मद्दव् । २. दा च घ म प्र ल$_1$ ल$_2$-नास्ति । ३. च घ म ल$_2$ अ-तत्र प्रसक्तो । प्र ल$_1$-तत्र प्रसक्तं । ४. फ-गंधसंसक्तं । च घ म ल$_2$ अ-गंधं सं । प्र ल$_1$-सौगंध्यं । ५. च-पानमन्योन्यभूषणम् । घ म प्र ल$_1$ ल$_2$-पानमन्योन्यभूषणं । अ-पानमाल्यान्तरिक्षजम् । ६. दा-नास्ति ॥

७. आ-दिव्यसंमूर्च्छनं । ८. च घ प्र ल$_1$-जघ्रौ । ९. फ-उत्थित-न्तमिवा० । आ प्र अ-०न्तमिवा-नलं । दा-नास्ति ॥

१०. आ-०हीत्युवाचेमं । ११. फ थ अ-रावणम् । १२. थ-शैलां ॥

१३. फ-रावणस्य मनःकान्तां । १४. थ-वनस्त्रि० । १५. दा घ म प्र ल$_1$ ल$_2$-०पानसुकृतां । १६. अ-०छविभूषितां ॥

१७. च-दान्तान्त० । घ म प्र ल$_1$, ल$_2$-घास्वन्तरित० । १८. फ दा च म प्र ल$_1$ ल$_2$-०रितरूपकां । १९. फ-मुक्ताफलप्र० ॥

१२] विभूषित-मणि-स्तंभां, सुवर्ण-स्तंभ-भूषिताम् ॥४५॥ [२४
समैर् ऋजुभिरत्युच्चैः,समन्तात् सु-विभूषितैः(?ताम्) ।

१३] स्तंभैः पक्षैर् इवाऽत्युच्चैः, दिवं संप्रस्थितैरिव ॥४६॥[२५
महत्यां कुथयाँऽऽस्तीर्णां, पृथिवीलक्षणांऽकया ।

१४] पृथिवीम् इव विस्तीर्णां, स-राष्ट्रां हेम-मालया ॥४७॥ [२६
नादितां मत्त-विहगैर्, दिव्य-गन्धाऽधि-वासिताम् ।

१५] परार्घ्याऽऽस्तरणैर्जुष्टां, रक्षोऽधि-पति-सेविताम् ॥४८॥ [२७
धूमैर्नोऽगुरु-धूपानां, विमलां हंस-पांडुराम् ।

१६] चित्रां पुष्पोपहारेण, कल्मापीमिव सु-प्रभाम् ॥४९॥ [२८
मनः-प्रह्लाद-जननीं, कामस्याऽपि प्रमोदिनीम् ।

---

१. फ–सुपहुरस्तम्भमंडितां । अ–सुवत्स्तंभमंडितां । २. आ–०भिरत्युच्चैः । ३. रा य म प्र ल$_1$ ल$_2$–समेतां च विभूषितां ॥

४. रा च म प्र ल$_1$,ल$_2$–दिवः। य–दिवि ।अ–गिरि । ५. रा च म प्र ल$_1$, ल$_2$–०वेरपि । ६. च–महत् पर० । ७. आ–कुथयास्तीर्णां । अ–कथयाऽकीर्णां । ८. च–सराष्ट्रगृहमालया॥

९. फ–सराभ्रगृहमालया । अ–सुवरगृहमालया । रा म प्र–शाला-नूपुरमालिनीं । च–शालां नूपुरमालिनीं। ल$_1$–शालं नूपुरशालिनीं । ल$_2$–शाल्नूपुरशालिनीं । १० आ अ–मादितं । ११. आ फ–मत्त वि० । अ–पुष्पवि०। १२. अ–०धिवासितं ॥

१३. आ–०स्त्यभिरणै० । १४. आ–धूपेना०। १५. रा च य म प्र ल$_1$–देवपांडुरां । १६. ल$_2$–नास्ति ॥

१७. रा य प्र ल$_1$–पूर्णां । म–पूर्गपु०। अ–चित्रपु० । १८. रा च य म–कल्मापामि०। प्र–कल्मापां सुप्रभामिव । ल$_1$–कलुषां सुप्रभामिव । आ–कल्मासामि० । १९. आ रा प्र म ल$_1$, ल$_2$ च अ–मनःसंह्लाद० । २०. आ–शाल्रस्यापि प्रमोदिनीं । रा ल$_1$–दर्पस्यापि प्रसादिनीं । अ–चित्तस्यापि प्रसा० । य–वामस्यापि प्रसा० ॥

१७] हृच्छोक-नाशिनीं दिव्यां, श्रियः संजननीमिव॥५०॥[२९
इन्द्रियाणीन्द्रियार्थैश्च, समं पंचभिर् उत्तमैः ।
१८] तर्पयन्ती च सततं, सदा रावण-सेवितम्॥५१॥[३०
स्वर्गोऽयं देवलोकोऽयम्, इयं सिद्धिः परा भवेत् । [३१
२०] इति संचिंत्य स तदा, बहुधा बहु-चिंतया ॥५२॥[N
प्र-ध्यायत इवोऽपश्यत्, प्रदीपांस् तत्र काश्चनान् ।
२१] धूर्तानिव महा-धूर्तैर्, देवनेन परा-जितान् ॥५३॥[३२
दीपानां च प्रकाशेन, श्रिया चाऽतुलया तथा ।
१९] अर्चिभिर् भूषणानां च, तां प्र-दीप्ताम् अमन्यत॥५४॥[३३
N] काश्चनैर् उद्यतैर् दीपैः, समन्ताद् अवभासिताम् । [N
कपाट-जालैर् विततैर्, उद्भमन्ती प्रभाम् इव ॥५५॥
N] तां तदा प्राविशद् हृष्टो, हनुमान् पवनोऽऽत्मजः । [N

---

१. आ रा च य म प्र ल$_{1}$-श्रेयः सं॰ २. रा च य म प्र ल$_{1}$-समैः । ३. ल$_{2}$-नास्ति ॥

४. आ च अ-तर्पयामास । प्र-तर्पयन्तीव । ५. फ अ-सदा । ६. फ अ-रावणसेवितं । आ-रावणसेविनी । ७. रा य म प्र ल$_{1}$ ल$_{2}$-स्वर्गोयं । ८. फ-महालोकोयमि॰ । रा य म प्र ल$_{1}$ ल$_{2}$-देवलोकायमि॰ । ९. फ-सिद्धिः परमभा इति । रा य म प्र ल$_{1}$ ल$_{2}$-सिद्धिमदा भ॰ । अ-सिद्धिः परा मता ॥

१०. फ-संचिंतयामास बहु । ११. फ-इति चिंतया । रा च म प्र ल$_{1}$ ल$_{2}$-बहु चिन्तयन् । १२. रा य म प्र ल$_{1}$ ल$_{2}$-प्रध्यायन्नेव चापश्यत् । अ-प्रध्यायंत इवा॰ ॥

१३. रा च य प्र ल$_{1}$ ल$_{2}$-॰देवनैर्न । १४. म फ-तु । १५. फ-धातु॰ । प्र-आत्मदप॰ । १६. रा य म प्र ल$_{1}$ ल$_{2}$-तथा ॥

१७ फ-संप्रदीप्तोपमन्यते । रा य म ल$_{2}$-दीप्तदीप्ताम॰ । प्र ल$_{1}$-दीपदीप्ताम॰ । १८. फ-कांचनकज्र-लैर्दी॰ । १९. रा च य म प्र ल$_{1}$ ल$_{2}$-सूरात्पाणीहितेक्षणः ॥

२०. ल$_{2}$-कपाटमालैर्॰ । २१. रा-प्रजामिव । २२. ल$_{2}$-प्राविशद्वो । २३. फ-मारुतात्मजः ॥

N] निश्शब्द-पदे-विक्षेपो, दूरात् प्रणि-हितेक्षणः॥५६॥ [N
ततोऽपश्यत् कुथाऽऽसीनं, नानावर्णाऽम्बर-स्रजम् ।
२२] सहस्रमेव नारीणां, नानावेषं चयं स्त्रियाम् ॥५७॥ [३४
परावृत्तेऽर्ध-रात्रे तु, पान-निद्रा-वशं गतम् ।
२३] क्रीडितात् विरतं सर्वं, सुषुपे बहुलं ततः ॥५८॥ [३५
तत् प्रसुप्तं वि-रुरुचे, निश्शब्दाऽम्बर-भूषणम् ।
२४] निश्शब्द-हंस-भ्रमरं, यथा पद्म-वनं महत् ॥५९॥ [३६
तासां संवृत-दन्ताणि, मीलिताऽक्षाणि मारुतिः ।
२५] अपश्यत् पद्म-गन्धीनि, वदनानि स योषिताम्॥६०॥ [३७
२६पू] प्रबुद्धानीव पद्मानि, तासां बुद्ध्वा क्षपाऽऽसये ।
N] पुनः संवृत-पत्राणि, रात्राविव बभुस् तदा ॥६१॥ [३८
इमानि वेवेत्र-पद्मानि, नारीणां नेत्रं-षट्पदाः ।

---

१. फ रा च प्र म ल$_{1}$ ल$_{2}$ अ–॰पदनिक्षेपैः । २. रा च प्र म ल$_{1}$ ल$_{2}$–दूरम॰ । ३. आ अ–॰श्यदथासीनं । रा–॰श्यत्कचाकीर्णं । च–॰श्यत्वयाकीर्णं । घ म प्र ल$_{1}$ ल$_{2}$–॰श्यत्कपाकीर्णं ॥

४. आ फ च घ–॰वेपचयस्त्रि॰ म–॰घेपचय स्त्रि॰ । प्र–मानावेषं चय-स्त्रिय॰ । ल$_{1}$–॰वेशावयस्त्रि॰ । ल$_{2}$–॰वेशं चपरिष॰ । अ–नानावर्णमपारेव॰ ॥

५. अ आ–क्रीडिता । फ रा घ म प्र ल$_{1}$ ल$_{2}$–क्रीडनाद् । ६. अ–उपरते । ७. आ–तन्नु । ८. आ–हनुमानित्यमन्यत । घ ल$_{2}$–सुषुपे बहु॰ । रा म प्र ल$_{2}$–प्रसुप्तं बहु॰ । अ–सुष्वाप ब॰ । ९. फ–ततः प्रसुप्त । रा च घ म प्र ल$_{1}$ ल$_{2}$–तत्र सुप्तं । १०. फ–विरुचिरे । ११. रा ल$_{2}$–निश्शब्द वर॰ । ल$_{1}$–॰ब्द वरभूषितम् ॥

१२. फ–॰वदन्तानि । रा–संवृतदं । अ–॰तदंतानां । १३. फ रा च घ म प्र ल$_{1}$ ल$_{2}$–मीलिताक्षीणि ॥

१४. रा म प्र ल$_{1}$ ल$_{2}$–पद्म॰ गंधानि । १५. रा–यद्वान् ॥

१६. फ रा घ म प्र ल$_{1}$ ल$_{2}$ अ–संहृतप॰ । १७. रा–राजाविव । ल$_{2}$–रात्रावेव । घ–मीलिताक्षीणि । १८. रा म प्र–यथ तथा । ल$_{1}$ ल$_{2}$–घ–मारुतिः । १९. फ–पद्मवत्प्राणि । २०. फ च घ म प्र ल$_{1}$ ल$_{2}$–मत्त-षट्पदाः । रा ल$_{2}$–म ॥ षट्प॰ ॥

२७] अम्बुजानीति मन्वानः(?नाः), प्रार्थयन्ते पुनः पुनः॥६२॥ [३९
इतीऽवाऽमन्यत श्रीमान्, उपेत्य स महा कपिः ।
२८] मेने हि गुणतम् तानि, समानि सलिलोद्भवैः ॥६३॥ [४०
सा तस्य शुशुभे शाला, ताभिः स्त्रीभिर् विराजिता ।
२९] शरदीऽव प्रसन्ना द्यौस्, ताराभिरभिशोभिता॥६४॥[10] [४१
ताभिः परिवृतः शूरः, शुशुभे राक्षसेश्वरः ।
३०] यथा ह्युडुपतिः श्रीमांस्, ताराभिराभि-संवृतः ॥६५॥[13] [४२
याश्च्यवन्त्यम्बराचारास्, तेऽत्र मन्ये निराकृताः ।[16]
३१] इमास्ताः सङ्गताः कृत्स्नास्, तत्रामन्यत वै हरिः॥६६॥[४३
ताराणामिव हि व्यक्तं, महतीनां महाऽर्चिषाम् ।[19]
३२] प्रभा वर्णः प्रसादश्च, विरेजुस् तत्र योषिताम् ॥६७॥ [४४
व्यावृत्त-वसनास् तत्र, प्रकीर्ण-वर-भूषणाः ।[23]

---

१. फ रा च अ-अंबुजानीव । २. रा-मन्वानः । म प्र ल$_1$-मन्वनः । ३. आ-प्रार्थयन्ति । ४. आ-इति चामन्यत । ५. फ-मासीनास्तानुपेत्य । रा ल$_2$-श्री मानुत्प्लुत्य । घ म प्र ल$_1$-श्रीमानुपेत्य च । ६. च-सहसा कपिः ॥
७ फ-ऽऽय । ८. च-०भिरिवद्यो०, ९. अ-नास्ति । १०. अ च-नास्ति ॥

११. फ-ह्युडु० । १२. रा घ म प्र ल$_1$ ल$_2$-०स्ताराभिः परिवारितः । १३. च अ-नास्ति । १४. फ म-य इव संस्थाम्बरे ताराः । च-याश्च्यवन्त्यवराश्चाराः । १५. फ रा म-०चाराः काले काले निराकुला । च अ-०चाराः काले काले निराकृताः । १६. रा घ प्र ल$_1$ ल$_2$-नास्ति ॥

१७. आ-संवृताः । १८. अ फ सर्वास्त० । रा च घ म प्र ल$_1$ ल$_2$-सर्वाः प्रकीर्णाम्बरभूषणाः । १९. रा च घ म प्र ल$_1$ ल$_2$ अ-नास्ति ॥

२०. फ अ-प्रभावर्णप्रसादाश्च । २१. फ-योषितः । २२. अ-व्यावृत्तिः शिरसस्तत्र । २३ रा च घ म प्र ल$_1$ ल$_2$-नास्ति ॥

३३] पान-व्यायामे-काले च, निद्राऽपहृत-चेतसः ॥६८॥ [४५
प्रभ्रष्ट-तिलकाः काश्चित्, काश्चिद् उत्कटनूपुराः ।[४]
३४] पार्श्वे-गलित-हाराश्च, काश्चित् परम-योषितः ॥६९॥ [४६
संमुक्त-रसनाः काश्चित्, काश्चित् प्रस्रस्त-वाससः ।
३५] व्याविद्ध-रसना-दामाः, किशोर्य इव वाहिताः ॥७०॥ [४७
सुकुण्डल-धराश्चाऽन्या, विच्छिन्न-मृदित-स्रजः ।
३६] गजेन्द्र-मृदिताः फुल्ला, लता इव महावने ॥७१॥[४८
चन्द्रांऽशु-निकराऽऽभाश्च, हाराः कासांचिदुत्कटाः[११]।
३७] स्तन-मध्ये प्र-सुप्तानां, विरेजुर् हंसे-संनिभाः । [४९
अपरासां च वैडूर्याः, कादम्बा इव पक्षिणः[१२] ॥७२॥

३८] हेमसूत्राणि चाऽन्यासां, चक्रवाका इवाऽभवन् ।[५०
हंसकारण्डवाऽऽकीर्णाश्, चक्रवाकोप-शोभिताः ॥७३॥
N] आपगा इव ता रेजुर्, जघनैः पुलिनैरिव ।[५१

१ रा य च म प्र ल$_1$, ल$_2$–•व्यामकालैश्च । २. रा च य म प्र ल$_1$–निवृत्तति• । ३. य–काश्चिदुद्वहन्• । ४. फ नास्ति ॥

५. रा य म ल$_1$ ल$_2$–पार्श्वे गलित• । च–पार्श्वेद्• ? भ–पार्श्वो-गति• ॥ ६ रा च य म प्र ल$_1$–मुक्तमाररसनाः । ल$_2$–मुक्तमारासना. । भ–मुक्तपंरसनाः । ७ आ–प्रभ्रष्ट•॥

८. च–व्यवृद• । आ–भ विद•। फ–•द्वरसनामोदाः । रा य म प्र ल$_1$–निवृद्धर• । ल$_2$–विवद्ध• । ९ फ–•लघया• । १० च य म प्र ल$_1$ ल$_2$–विभिन्न ॥

११. रा य म प्र ल$_1$–•न्द्रम• थिवा । १२ ल$_2$–नास्ति ॥

१३. फ–नु सुप्तानां । भ–तु सुप्ताया । च–सुपुप्तानां । १४. प्र–•तुर्हेमसं• । १५. फ–नास्ति । १६. ल$_2$–नास्ति ॥

१७ फ–• चाकेन वृ जिताः । सर्गसमाप्तिं यावत् पाठो नास्ति ॥
१८. ल$_2$–नास्ति । भा–भत्र भारभ्य

किंकिणी-जाल-नादिन्यस् ता हेम-तिलकाऽन्विताः ।
[N भाव-ग्राहाः सुं-गंभीराः सुप्ता नद्य इवाऽभवन् ॥७४॥[५२
मृदुष्व् अंगेषु कासां-चित् प्रति-रूपं समुच्छ्रितः(ताः) ।
३९] तासां वपुर् भूषितानां शुभा भूषण-राजयः ॥७५॥[५३
अंशुकाऽन्ताश्च कासां-चित् मुख-मारुत-कंपिताः ।
४०] उपर्य् उपरि वक्त्राणां व्या-धूयन्ते पुनः पुनः ॥७६॥[५४
ताः पताका इवोद्धूता रत्नानां रुचिर-प्रभाः ।
N] नाना-वर्णाः सु-वर्णानां वक्त्र-मूलेषु रेजिरे॥७७॥[५५
ववल्गुश्चाऽत्र कासां-चित् कुण्डलानि महाऽर्चिषाम् ।
४१] मुख-मारुत-कंपैश् च मन्द-मन्दैः सुं-योषिताम्॥७८॥[५६
शर्कराऽऽसव-गंधैश् च प्रकृत्या सुरभिः शुभैः ।

---

१. अ—०मादिन्यः। २. फ—हेमकनकांकिताः । अ—सहेमकनकांकिताः ॥

३. घ रा च अ—भावग्राहोपगंभीराः । अ—हारग्राहापयस्विरा । प्र—भावग्रैवेय० । छ१—भावग्रावेप० ।
४. प—समुच्छ्रयम् । रा म प्र छ१ छ२ रा—समुच्छ्रतं । च—समुच्छ्रितम् । अ—समुत्थितम् ॥

५. फ च—वपुषुर्भूषणानीव । अ—रा वपुर्भूषणानीव । छ१ प्र—तासां महुर्भूषितानां । ६. रा च—अंशुकान्ताश्च । प्र—अंशुकाश्चैव । ७. फ च अ—०तघट्टिताः । छ१—उत्कम्पिताः ॥

८ च व—इवोद्धृताः ।

९. य रा च म प्र छ१ छ२—नानावर्णासु० फ—नानावर्णैश्च व० । १०. फ—भेजिरे । ११. फ—शुभार्चिषां अ—महार्चिषां ॥

१२. फ अ—०कंपैस्तु । १३. फ—०मन्दैस्तु । प्र—०मन्दैश्च । १४. फ—०रावशगन्धेन । रा—रासवैग० । च—०रासवगंधैश्च । प्र—रासवगंधैश्च । अ—कर्करासवगंधीवि । १५. फ—सुखः । च—सुखा । अ—सुखं ।

N] तासां वदन-निश्वासैः सिंषेवे रावणं तदा ॥७९॥ [५७
रावणाऽऽननं-शंकाश्च काश्चिद् रावण-योषितः ।
N] मुख-वातं स-पत्नीनाम् उपाऽजिघ्रन् पुनःपुनः॥८०॥ [५८
अत्यर्थाऽऽसक्त-मनसो रावणे काश्चन स्त्रियः ।
N] सु-स्थिरत्वात् स-पत्नीनां प्रीयमाणा बभुस् तदा ॥८१॥[५९
बाहून् उपनिधायांऽन्याः परिहारो (र्यो) पशोभिताः।[12]
N] अंशुकान्येव मूर्ध्नाणि प्रमदास् तत्र शिश्रियुः ॥८२॥[६०
अन्या वक्षसि चाऽन्यस्याःतस्याः काचित् पुनर् भुजम्।
N] अपरा त्वंकमन्यस्यास् तस्याश् चापि परा कुचौ॥८३॥[६१
ऊरु-पार्श्व-कटी-पृष्ठम् अन्योन्यस्याः समाश्रिताः ।
N] परस्पर-निविष्टांऽग्यो मद-स्नेह-वशाऽनुगाः॥८४॥[६२
एकीभूताश् च ताः सर्वाः सुषुपुस् तत्र योषितः।[६३उ

---

१. य रा म प्र ल१-सुरभिनि० २. फ-शिशिरे। अ-निषेवे । ३. फ म अ-रावणस्तदा । ४. रा-०णाननंदर्श। फ-०णाननिश्वासः। ल१-०णाननसक्ताश्च । अ-०णादर्श-संकाशाः ॥

५. फ-मुखान्मुखं। ६. फ-अत्यर्थं शक्त०। [illegible]१ अ-अत्यंताम०। ७. रा च म प्र ल१ ल२-रावणं।

८. य-स्थरिय० । ९. य-उपाजिघ्रन् पुनः पुनः। फ-०प्रीयमाणा मुमुदुस्तदा। १०. फ-बाहून्युपनि० । अ फ-भिन्नाः-बाहूपरिनिधायान्याः। ११. फ अ च-परिहासोप० । १२ ल२-नास्ति।

१३. रा-०वानीव । १४. फ-वस्त्राणि। १५ अ-काश्चित् पुनर्ययौ।

१६. फ रा म प्र ल१,ल२-०श्चाप्य-परा। च-०श्चाप्यपरा। १७. फ-भुजम्। अ-ययौ । १८. रा-पार्श्वं । म-ऊरुपार्श्वं ॥

१९ य म प्र ल१ ल२-०निवि-ष्टांगा। अ-०निविष्टास्ता। २०. य फ रा म प्र ल१ ल२-एकीभूता स्म ॥

N] अन्योन्य-गात्रसंस्पर्शात् प्रीयमाणाः सु-मध्यमाः ॥८५॥ [६३पू

अन्योऽन्य-भुज-सूत्रैस् ताः स्त्री-माला ग्रथिता यथा ।

N] मालेव ग्रथिता तत्र शुशुभे मत्त-षट्पदा ॥८६॥ [६४

लतानां माधवे मासि फुल्लानाम् इव योषिताम् ।

N] अन्योऽन्य-बाहु-ग्रथितं संपन्न-कुसुमोच्चयम् ॥८७॥ [६५

व्यतिवेष्टित-सु-स्कंधं तथाऽसि-भ्रमराऽऽकुलम् ।

N] आसीद् वनमिवोद्धूतं स्त्री-वनं रावणस्य तत्र ॥८८॥ [६६

न चिरेणाऽपि सु-व्यक्तं न(?)तासां योषितां तदा ।

N] विवेकं(?कः)शक्यमा(?आ)रब्धु भूषणाग्र्यांऽम्बर-स्त्रजाम्८९[६७

रावण सुख-संसुप्ते ताः स्त्रियो विविध-प्रभाः ।

N] ज्वलिताः काञ्चनाऽऽदीपाः प्रेक्षन्ताऽनिमिषा इव॥९०॥[६८

रक्षसां चाऽभवन् कन्यास् तस्य काम-गमास्तदा ।

N] राजर्षि-नृप-दैत्यानां गन्धर्वाणां च योषितः ॥९१॥ [६९

---

१. ल१-नास्ति। २. य रा म प्र ल१ ल२-०भुजसंवासाः । अ-अन्योन्यं सु० । ३. फ-ग्रथिता । ४. अ-इव ॥

५. फ-ग्रंथिता । ६ अ-सूत्रैः । ७ ल१-स तु प० । य च म प्र-०षट्पदाः । रा-०पदः । ८. फ-फुल्लानां वायुसेवनात् । अ-फुल्लानां वायुसेवितात् ॥

९. य रा म प्र ल१ ल२-सप-त्नीकु० । च-म्पसकु० । अ-संपूर्ण-कुसु०। १० रा य म प्र ल१-व्यपचेष्टन। ल२-व्यपचेष्टन । च-व्यतिवेष्टत । ११. य म प्र ल१-तथा सुष्ठु । रा-यथा सुष्ठु । ल२-वसर्वं । १२ फ अ-अन्योन्यभ्रम० । च-भ्रमरक्षिप्र० ॥

१३. य-खोरसो । रा च म प्र ल१ ल२-स्वीरसं । अ-स्त्रीपुरं । १४ रा च म प्र ल१,ल२ अ-तु । १५. फ रा च म प्र ल१ ल२-ह्यचिरे० । अ-अचिरे० ॥

१६. फ-विवेकाशक्यमारब्धं । १७. फ अ च-रावणे सुखसंविष्टे । १८. य रा च ल१ ल२ म-विबुधाप्रियाः । प्र-विबुधप्रियः ॥

१९. फ अ-ज्वलंत । २०. फ च अ-काञ्चना दीपाः । २१. फ-प्रेक्षन्ते निमिषा । रा-प्रेक्ष० । अ-प्रेक्षंते निमि० । २२. फ-राक्षसी । २३. य रा च प्र म ल१-तत्र । २४. फ-कामशर० । च ल२ अ-काम-गता० ॥

न तत्र काश्चित् प्रमदाः प्रसह्य
प्रधाने-वीर्येण बलेन लब्धाः ।
न चाऽन्य-कामा न तथाऽन्य-पूर्वा
N] विना वराया जनकाऽऽत्मजायाः ॥२२॥ [७१

न चाऽकुलीना न च हीन-रूपाः
सदाऽन्न-पीना उपचार-युक्ताः ।
भार्या बभूवुस् तस्य न हीन-सत्त्वा
N] न चाऽपि कामस्य न कामनीयाः ॥२३॥ [७२

बभूव बुद्धिश् च कपीऽश्वरस्य
यद् ईदृशी राघव-धर्म-पत्नी ।
इमा- यथा राक्षस-राज-भार्याः
N] सुजातम् अस्या इव साधु-बुद्धेः ॥२४॥ [७३

पुनश् च सोऽचिन्तयद् अर्थरूपं
ध्रुवं विशिष्टा गुणतो हि सीता ।
अर्थाय यस्याः कृतवान् दुरात्मा
N] लंकेश्वरः कष्टम् अकार्यम् एतत् ॥२५॥ [७४

इत्यार्षे रामायणे सुन्दर-काण्डे रावणोऽवरोध-दर्शनं
नामै सर्गः ॥

---

१. अ–प्रसाद० ॥

२. फ–न । ३. फ अ–नाद्-क्षिणा । ल₂–सदालमाना० । ल₁–सदान्नपानै० । च–नाद्‌नपाना० । ४. फ अ–नानुपवीरयु० । च–० यु प० । प्र–०वपचार० । ल₁–०रपचार । ल₂–उपचार० ५. फ अ–भार्या–भवन्तरय । च प्र ल₁ ल₂–भार्या-भवंस्तरय । ६. प्र–च । ७. अ–त्रुटितः पाठः ॥

८. ब प्र म रा ल₁ ल₂–पत्ने-दृशी । ९. फ–०तमस्या इति ॥

१०. अ–०न्तयदन्धरूपं । ११. अ–अन्यायमस्याः । १२. घ रा ल₁ ल₂ च म प्र–महात्मा ॥

१३ फ अ–अन्तःपुरवर्णनं । च–रावणान्तःपुरविषयो । प्र–रावण-वरयोपिद्दर्शनं ॥

१४. म–नाम सप्तमः । ल₁–नाम षष्ठः ॥

तत्र दिव्योपमं शुभ्रं स्फाटिकं रत्नं-भूषितम् ।
१] अवेक्षमाणो हनुमान् ददर्श परमाऽऽसनम् ॥९६॥[3][१
७उ] गन्धैश् च परमैर् जुष्टं वर-धूपेन धूपितम् ।
२उ] तस्य चैक-तमे देशे सोऽग्र्य-मालौं-निभूषितम् ॥९७॥[4]
३पू] ददर्श पांडुरं छत्रं ताराऽधिपति-संनिभम् । [३
२पू] परमाऽऽस्तरणाऽऽस्तीर्णं रांकवाऽजिन-संवृतम् ॥९८॥
३उ] दामभिर् वर-माल्यानां समंताद् उपशोभितम् । [६
N] वाल-व्यजन-हस्ताभिर् वीज्यमानं समंततः ॥९९॥ [५पू
तस्मिन् जीमूत-संकाशं प्र-तप्तोत्तम-कुंडलम् ।
४] लोहिताऽक्षं महा-बाहुं महा-रंजन-वाससम् ॥१००॥ [७
लोहितेनाऽनुलिप्तांऽगं चन्दनेन सु-गंधिना ।
५] संध्या-रक्तम् इवाऽऽकाशे तोयदं स-तडिद्गुणम् ॥१०१॥[८
वृतम् आभरणैर् दिव्यैः सु-दंष्ट्रं काम-रूपिणम् ।
६] स-वृक्ष-वन-गुल्माऽऽढ्यं प्रसुप्तम् इव मन्दरम् ॥१०२॥ [९

---

१. फ-तत्र । २. फ रा च प्र-अवेक्ष्यमाणो । म-क्षमाणो । ३. $ल_2$-नास्ति ॥

४. घ-भक्तिभिर्विविधैर्० । ५. फ-सोऽग्रमाल्यं वि० । अ-साग्र० । ६. $ल_2$-नास्ति ॥

७. $ल_1$-पाण्डरच्छत्रं ।

८. घ रा च म प $ल_1$ $ल_2$-०मास्तरणं चैव ॥

९. अ-वीक्ष्य० ॥

१०. प्र-महाराजत० । अ-महाराजत । फ $ल_2$-महारंज० ॥

११. प्र-वतोद्गुतं ॥

१२. फ-०रूपितम् । १३. प्र $ल_2$-मन्दिरम् ।

७पृ] क्रीडितादू विरतं रात्रौ वराऽऽभरण-भूषितम् ।  
८उ] प्रियं नैर्ऋत-कन्यानां राक्षसीनां सुखाऽऽवहम् ॥१०३॥ [१०  
पानादु उप-रतं चैव ददर्श स महा-कपिः ।  
९] भास्वरे शयने वीरं प्रसुप्तं राक्षसाऽधिपम् ॥१०४॥ [११  
निःश्वसन्तं यथा नागं रावणं राक्षसोत्तमम् ।  
१०] आसाद्य परमोद्विग्नः सोऽपसर्प्य विनीतवत् ॥१०५॥ [१२  
अथाऽऽरोहणम् आसाद्य वेदिकाऽन्तरम् आश्रितं(?तः)।  
१४] सुप्तं राक्षस-शार्दूलं प्रेक्षते स्म महा-कपिः ॥१०६॥ [१३  
शुशुभे राक्षसेन्द्रस्य स्वपतः शयनोत्तमम् ।  
१३] गन्ध-हस्तिनि संविष्टे यथा प्रस्नवणं महत् ॥१०७॥ [१४  
काञ्चनाऽङ्गद-बद्धौ च ददर्श स महाऽऽत्मनः ।  
१५] विक्षिप्तौ राक्षसेन्द्रस्य भुजाविन्द्र-भुजोपमौ ॥१०८॥ [१५  
ऐरावण-विषाणाऽग्रैर् आपीडित-कृत-व्रणौ ।  
१६] वज्रोल्लिखित-पीनाऽसौ नाना-युद्ध-परिक्षतौ ॥१०९॥ [१६

---

१. घ म प्र ल$_1$ ल$_2$–क्रीडना द्विरतं । २. फ रा च म प्र ल$_1$ल$_2$–राक्षसानां ॥

३. प्र–०दुपपदं । ४. म ल$_1$–भासुरे । ५. अ–राक्षसेश्वरं ॥

६. घ–वानरोत्तम' । ७ फ–सोपसर्पं । रा–सोपस (पं) द् । अ–सोपसर्पेद् ॥

८. घ–०वरमाश्रितः । ९. घ–सु मे । १०. प्र ल$_1$ अ–प ॥

११. रा–भुजाविन्द्रध्वजोपमा । १२. अ–संश्लिष्टे । १३. रा–मारित॥

१४. फ अ–महाकपिः । च–०हसात्मनः । १५. फ–भिन्नाः–०विन्द्रध्वजो० । १६ रा–मारित ॥

१७. रा च म प्र ल$_1$–०तनुचयगौ । १८.अ–ऐरावतविषाणाग्रैरापीडन० १९ घ–०वपीनांसौ । २०. घ–राज्ञे युद्धपराक्षतौ । रा–राज्ञो यु० । प्र–राज्ञो० युद्धपराज० ।

१.७पृ] पीनौ समनु-जातौ तौ संहतौ चलिताऽऽयतौ ।
सु-लक्षण-कृताऽङ्गुष्ठौ स्वंगुलीर्य-विभूषितौ ॥११०॥ [१७
N] सं-हतौ परिघाऽऽकारौ करौ करि-करोपमौ ।
१.७उ] विक्षिप्तौ शयने शुभ्रे पञ्च-शीर्षाव् इवोरगौ ॥१११॥ [१८
शश-क्षतज-कल्पेन चन्दनेन सु-गंधिना ।
१८] शीतेन च परार्घ्येन स्वनु-लिप्तौ सु-तेजसौ ॥११२॥ [१९
उत्तम-स्त्री-विमृदितौ गन्धोत्तम-निषेवितौ ।
N] यक्ष-पन्नग-गन्धर्व-देव-दानव-भीषणौ ॥११३॥ [२०
स ददर्श कपिस् तस्य बाहू शयन-संस्थितौ ।
N] मन्दरस्याऽन्तरे सुप्तौ महाऽही रुषिताव् इव ॥११४॥ [२१
ताभ्यां स परि-पूर्णाभ्यां भुजाभ्यां राक्षसाऽधिपः ।
N] शुशुभेऽचल-संकाशः शृंगाभ्याम् इव मन्दरः ॥११५॥ [२२
चूत-पुन्नाग-सुरभिर् वकुलोत्तम-सं-युतः ।
N] मिष्टाऽन्न-रस-संपन्नो नाना-गंध-पुरःसरः ॥११६॥ [२३

---

१. रा–सुम॰ । अ–संबंध-जावासौ । फ–॰नुजावासौ । २. फ–हंसतौ । अ–संहितौ । ३. फ अ–लघितायतौ । ल$_{2}$–प्रलंतायतौ । ४. य रा च म प्र ल$_{1}$ ल$_{2}$–अंगुलीभिर्विभू॰ ॥

५. अ–संयतौ । ६. अ–पीनौ । ७ य रा च म प्र ल$_{1}$ल$_{2}$–विस्तीर्णौ ॥

८. फ–सम । रा च म प्र ल$_{1}$ ल$_{2}$–शशि॰ । ९ फ–शीतलेन । च अ–शीतेन च । १०. अ च फ–चन्दनेन । ल$_{2}$–पीतेन च । ११. च–पार्द्धेन । १२. रा च म प्र ल$_{1}$ ल$_{2}$–स्वतेजसा ॥

१३. य–उत्तमै । १४. य रा प्र ल$_{1}$–गान्धोत्तमनिषेवितौ । म–॰मनिषेवितौ । १५. य प्र–॰वभूषितौ । ल$_{2}$–वपूजितौ ॥

१६. रा च य म प्र ल$_{1}$ ल$_{2}$–ददर्श स । १७ य म रा च प्र ल$_{1}$ ल$_{2}$–शयनसंगतौ । १८. य–सुप्तौ ॥

१९. रा–सु॰ । २०. फ अ–राक्षसेश्वरः । २१. प्र–च स लंकेशः । २२. अ–मंदिर ॥

२३. फ–वृतपु॰ । २४. अ–इष्टानां र॰ । य ल$_{2}$–॰रससंपन्नौ ॥

तस्य राक्षस-सिंहस्य निश्चक्राम मुखान् महान् ।
N] शयानस्य विनि-श्वासः पूरयन्निव तद् गृहम् ॥११७॥ [२४
मुक्ता-मणि-विचित्रेण काञ्चनेन वि-राजितौः ।
N] मुकुटेनाऽर्क-वर्णेन कुण्डलोज्ज्वलिताऽऽननाः॥११८॥ [२५
रक्त-चन्दन-दिग्धेन हार-भारेण शोभितौः ।
N] पीनाऽऽयत-विशालेन वक्षसाऽतिवि-राजिताः॥११९॥ [२६
पांडुरेणाऽऽतप-त्रेर्ण क्षौमेण क्षतजेक्षणाः ।
N] महांऽर्हेण मु-संवीतौः पीतेनोत्तम-वाससा ॥१२०॥ [२७
चतुर्भिः कौञ्चनैर् दीपैर् दीप्यमानैश् चतुर्-दिशम् ।
N] प्रकाशी-कृत-सर्वाऽगा मेघां विद्युद्-गणैरिव ॥१२१॥ [२९
पाद-मूल-गताश् चाऽपि ददर्श सं महा-कपिः ।
N] पत्नीस् ताः प्रिय-भार्यस्य तस्य रक्षः-पतेर् गृहे॥१२२॥[३०

---

१. अ–मदान् मुखात् । २. फ अ–च निश्वासः ॥

३. च–विराजिता ॥

४. थ रा च म प्र ल$_{1}$ ल$_{2}$–०न दिग्धेन । ५. थ प्र ल$_{1}$–सितहारेण । रा–तारभारेण । च ल$_{2}$–तारहारोप० । च–तारहारे पा० । ६. थ प्र ल$_{1}$–दीपिताः । अ–शोभिता । ७. च ०तिविराजता ॥

८. फ–०णापविद्धेन । अ–ग परिविद्धेन । ९. फ–क्षौमेन । १०. फ–०तभेक्षण. । म–०तजेशु ? ११. फ–सुधीरेण । च–सुसंवीतं ॥

१२. फ–०नैर्दीप्तैः । १३. च–०प्यमानं । अ च–भिन्ना–०प्यमानाश्च० । १४. फ च अ–०तसर्वांगं । १५. फ च–मेघं । अ–मेघे० । १६. फ ल$_{2}$–विद्युल्लते० । च–०ल्लतैरपि ।

१७. अत: परमधिक: पाठ:—

अ—ददर्श स महावीरो मातङ्गमिव केसरिः ।
मारुतिर्बलशाली तु पुरस्कृत्य विक्रमम् ॥

१८. रा म ल$_{1}$ ल$_{2}$ अ–स महात्मनः । प्र–सुमहात्मनः । च–सहसात्मनः । १९. फ–राक्षस्य वै गृहे ॥

शशि-प्रकाश-वदना वर-कुण्डल-भूषणाः ।
२१] आम्लान-माल्याऽऽभरणाः प्रसुप्ता हरि-यूथपः॥१२३॥ [३१

नृत्त-वादित्र-कुशला राक्षसेन्द्र-भुजांऽक-गाः ।
२२] वराऽऽभरण-संयुक्ताः स ददर्श वर-स्त्रियः ॥१२४॥ [३२

१९उ] वज्र-वैडूर्य-गर्भाणि श्रवणाऽन्तेषु योषिताम् ।
२०पू] ददर्श तापनीयानि कुण्डलान्य् अंगदानि च ॥१२५॥ [३३

तासां चन्द्रोपमैर् वक्त्रैः शुभैर् ज्वलित-कुण्डलैः ।
N] व्यरोचत विमानं तन् नभस् तारा-गणैर् इव ॥१२६॥ [३४

[वं-१३] (५६ अ-पृष्ठ उपरि मुख्यपाठः ॥)

अन्यो कक्ष-गतेनैव मृदङ्गेनाऽसितेक्षणा ।
४३] प्र-सुप्ता भामिनी भाति बाल-पुत्रेव वत्सला ॥१२७॥ [३८

---

१. य फ रा म प्र $छ_1$ $छ_2$-प्रम्लान॰ । २. अ फ-ददर्श । ३. फ-हरिपुंगवः ॥

४. फ प्र अ-नृत्यवा॰ । ५. $छ_1$-भुजंग॰ । अ-भुजंगमाः । ६. फ च अ-निषण्णास्तत्र ताः स्त्रियः । $छ_1$-वर-माल्याः वरस्त्रियः ॥

७. अ-॰र्यगर्भाभिः । ८. $छ_1$-॰गदान्यपि ॥

९. य रा $छ_1$ $छ_2$-शुभैर्वलितकु॰ ।

१०. अतः परमाधिकः पाठः—

अ च-त्रिपञ्चाशीं च परित्यज्य प्रसुप्ताऽन्या प्रकाशते ।
महानदी प्रतीर्णेव नारीप्लवसमाश्रिता ॥

११. च रा म प्र $छ_1$ $छ_2$ अ-पुष्ठा । १२. आ फ रा च प्र $छ_2$-कक्षाग॰ । म-कक्ष्यग॰ । $छ_1$-वक्ष॰ । १३. आ-मड्डके॰ । फ-मेण्डुकेनाय॰ । घ रा च म प्र $छ_1$ $छ_2$-॰केनायते॰ । म-कटकेनायते॰ । १४. रा च म प्र $छ_1$ $छ_2$-सुप्रभा । १५. फ-माविनी । अ-भाषिणी ॥

पटहं चारु-सर्वाङ्गी शेते सं-पीड्य भामिनी ।
४४] चिरेण रमणं लब्ध्वा परि-ष्वज्येव कामिनी ॥१२८॥ [३९

अन्या वीणां समा-लिंग्य प्रमदा प्रिय-दर्शना । [४० पू
N] निद्रा-वशम् अनु-प्राप्ता स-कान्ता प्रमदा यथा॥१२९॥ [४१उ

वेणुं काचित् परि-ष्वज्य प्र-सुप्ता तनु-मध्यमा । [N
N] चिरस्येव समासाद्य पत्नी मावासिकं पतिम् ॥१३०॥ [४०उ

N] अन्या कनक-संकाशा मृदु-पीन-पयोधरा ।
४८उ] मृदङ्गं हि प्रपीड्यांऽशे(?मे)सुप्ता कमल-लोचना॥१३१॥ [४२

आलिंगेषु पतिं कृत्वा स-मदाः परम-स्त्रियः ।
४७] प्र-विद्ध-वेणु-सङ्गाशं च प्र-सुप्ताः पान-खेदिताः॥१३२॥ [N

भुज-पार्श्वाऽन्तरे-स्थेन सु-कक्षेण कृशोदरी ।
४८] पणवेन समा-सक्ता सुप्ता मद-कृत-श्रमा ॥१३३॥ [४३

---

१. आ–पटेन । २. फ–भाविनी । अ–भाषिणी । ३ फ रा च य म प्र ङ$_2$ ङ$_1$–॰ण कामिनं । अ–विदेश-कामिनं । ४. आ–॰रिष्वज्य च । ५. फ–कामुकी ॥

६. आ–परिष्वज्य । ७. फ–सकामा । ८. फ अ च–इव ॥

९ आ–वेणुं चापि । प्र ङ$_1$–काचिद्वेणुं । १०. फ–चिरादेव । ११. आ–कामिनी कामिन प्रियम् ॥

१२. फ अ–मिश्राः—कनकसंकाशैर्मृदुपीनपयोधरैः । १३. आ–मृदंगानि प्रपीड्योच्चैः । १४. रा य म प्र ङ$_1$–मृदंगांश्च प्रपीड्यांगैः ॥

१५. च–आलिंग्य । १६. फ–वसुं कृत्वा । च–सुवलं कृत्वा । १७. फ च–मिश्राः—॰वेणुमन्याश्च । च–वेणुं संप्राप्य । १८. च–काश्च स्व सुप्ताः ।

१९. रा य म प्र ङ$_1$–अपरास्वपरस्यं च । ङ$_2$–स्वान्तरस्यं च । २०. फ–सुकचेन । रा य–सुकक्षेण । २१. फ–पानेवेनसमासक्ता । रा प्र–पणवं काचिदालिंग्य । आ–॰वेन समालिंग्य । च य प्र–पणवं काचिदालिंग्य । २२. फ–कृतमद॰ । रा च य म प्र ङ$_1$ ङ$_2$–मदविमोहिता ॥

डिण्डिमं परि-गृह्याऽन्यांस् तथैवाऽऽसक्त-डिण्डिमाः ।[3]

४९] प्रसुप्तास् तरुणी(ीन्)वत्सान् उपगूह्येव योषितः॥१३४॥[4] [४४

रसनाम् अप-विध्याऽन्या प्र-सुप्ता सुवि भामिनी ।[6क]

५०] वसन्ते पुष्प-संयुक्ता माले‍व परि-मार्जिता ॥१३५॥ [४६

काचिद् आ-लिङ्गनं नारी भुज-संयोग-पीडितम् ।

५१] कृत्वा कमल-पत्राऽक्षी प्र-सुप्ता मद-मोहिता[11]॥१३६॥ [४५

पाणी तथाऽन्यौ पाणिभ्यां स्तनाऽन्तरम् उपाऽऽश्रितौ ।

५२] उप-गूह्याऽपरा सुप्ता निद्रा-वशम् उपा-गता ॥१३७॥ [४७

अन्या कमल-पत्राऽक्षी पूर्णेन्दु-सदृशाऽऽनना ।

५३] अन्याम् आलिङ्ग्य सु-श्रोणी प्र-सुप्ता मद-विह्वला॥१३८॥[४८

---

१. रा च य म प्र ळ$_1$ ळ$_2$—प्रविगृह्यान्या । आ—परिगृह्यान्या । अ—च परिष्वज्य । २. आ—०डिंडिमा । रा च य म प्र ळ$_1$,ळ$_2$—प्रसुप्ता सुवि भामिनी । ३. अतः परमधिकः पाठः—

च—दृष्ट्वा च कपिशार्दूलः तयान्यासक्तडिंडिमा ।

४. आ—०सी तरुणीर्विसमु० । च—०सौ तरुणवत्ससमुप० । अ—०तांस्तरुणा । ५. य म प्र ळ$_1$ ळ$_2$—नास्ति ॥

६. आ फ—माविनी । अ—मानिनी । ६क य म प्र ळ$_1$,ळ$_2$—नास्ति । ७ अ—पुष्पसकला । ८. रा च य म प्र ळ$_2$—परमार्जिता ॥

९. आ—काश्चिदा० । च ळ$_1$—काश्चिदा० । १० रा च म प्र ळ$_1$ ळ$_2$—भुजसंभोग० । अ—भुजसंयोग० । ११. फ च ळ$_1$—पानमो० । १२ रा य म प्र ळ$_1$—नास्ति ॥

१३. प्र ळ$_1$,ळ$_2$ अ—तयो सु० । १४ आ—०स्तुपरिघट्टौ । अ—०रसमाश्रितौ ।१५ आ प्र ळ$_1$—उपगृह्य० । १६ ळ$_2$—सद्दा । १७ आ—०शपराजिता ॥

१८. फ—कृत्वा । १९. रा च य म प्र ळ$_1$ ळ$_2$—सुप्तोणी ॥

मुरजेषु मृदङ्गेषु पीठिकासु तथैव च ।

५४] शुभाऽऽस्तरणमुख्येषु तथा ता(?ना)लीव(?कै)केषु च॥१३९[N

तूर्याणि च वि-चित्राणि रावणस्य वर-स्त्रियः ।

N] उप-गृह्य प्र-सुप्तास् ताः पान-निद्रा-वशं गताः ॥१४०॥ [N

नूपुरैश् चाऽपविद्धैश् च वलयैश् चाऽपि शोभितैः ।

N] हारैश् च हरिणाऽक्षीणां प्र-कीर्णैः शोभिता मही । [N

N] स-फेन-बिन्दु-निकरैर् वन-राजी जलैर् इव ॥१४१॥ [N

[स१४]तासाम् एकान्त-संन्यस्ते शयानां शयने शुभे ।

२९] ददर्श रूप-संपन्नां सु-श्रोणीं स कपिः स्त्रियम् ॥१४२॥ [५०

गौरीं कनक-वर्णाऽऽभां इष्टाम् अन्तःपुरेश्वरीम् ।

३०] कपिर् मन्दोदरीं तत्र यौवनोत्तम-शालिनीम् । [५२

ददर्श नील-जलदे ज्वलन्तीम् इव विद्युतम् ॥१४३॥ [N

---

१. आ-वीथिकासु सुमध्यमा । फ-पीठिकासु छ० । रा य म प्र ल$_1$ ल$_1$-तथा तालान्तरेषु च । च-तथा ताएान्बकेषु च । २. आ-शुभान्तरेण-मु० । फ-०रणमुरेषु । ३ |क प्र-तालीशकेषु । ४. रा च य म प्र ल$_1$ ल$_2$-नास्ति ॥

५. अ-रूपाणि । ६. च म-उपगुह्य । ल$_1$-उपगृह्य ॥

७. रा-नूपुरैश्चापरास्तैश्च । च-०श्चाविद्धैरन्यैः । ८. फ रा य च म प्र ल$_1$ ल$_2$ अ-शोभते ॥

९. च ल$_2$-०तलैरिव । १०. च ल$_2$-०संन्यस्तैः । ११. च ल$_2$-शयनैः शुभैः ॥

१२. आ-श्रियम् । फ-स्थिताम् । १३. रा-०मिष्टां भर्तुः परेश्वरीम् । ल$_2$ य-०मिष्टां भर्तुः पुरे० । म प्र ल$_1$-०मिष्टां भर्तुः पुरीश्व० ॥

१४. अ आ फ-शयानां शयने शुभे । १५. रा-शोभते । च-शोभती । य म प्र ल$_1$ ल$_2$-शोभंती । १६. रा च य म प्र ल$_1$ ल$_2$-जलदे नीले । १७. आ-दीप्यतीमिव । रा-ज्वलन्तमिव ॥

३१] मुक्ता-मणि-समायुक्तैर् भूषणैस् तप्त-काञ्चनैः ।
भूषितां भूषयन्तीं तत् स्व-श्रिया भवनोत्तमम् ॥१४४॥ [५१
३२] तां समीक्ष्य महा-बाहुर् हनूमान् पवनाऽऽत्मजः ।
तर्कयामास सीतेति रूप-यौवन-संपदा । [५३
३३] हर्षेण महताऽऽविष्टो ननन्द कपि-यूथपः ॥१४५॥ [५४पू
आ-स्फोटयामास चुचुम्ब पुच्छं
ननर्त चिक्रीड जगौ ववल्ग । [५५पू
स वानराणाम् ऋषभः मतीऽतो
ज्ञात्वा नरेन्द्राऽनुगतां च सीताम् ॥१४६॥ [N

इत्यार्षे रामायणे सुन्दर-काण्डे अन्तःपुर-वर्णनं
नाम पंचमः सर्गः ॥५॥

---

१. अ—ऊखवां । २. आ—भूषयन्तीव । रा च य म प्र ड$_1$ ड$_2$—भूषयंती तां । ३. रा च य म प्र ड$_1$ ड$_2$—सुश्रिया । ४. ड$_1$—भूषणोत्तमं (? मैः) ॥

५. फ—समीक्ष्य स । ड$_1$—तां स वीक्ष्य । ६. फ रा च य म प्र ड$_1$ ड$_2$—मारुतात्मजः । ७. आ—सीतेति ॥

८. आ—ननद । ९. फ—हरि-यूथपः ॥

१०. आ—चेच्छद् । अ—चेच्छम् । च य म प्र ड$_1$ ड$_2$—पुच्छम् । ११. य अ—ननर्द । १२. अ फ—च वल्गुन्नो । च—माप्लवः । य म प्र ड$_1$ ड$_2$—च भूरि । १३ आ ड$_1$—नरेन्द्रस्य । रा म—नरेन्द्रसु० । च प्र ड$_2$—नरेन्द्रेन्द्र० । १४. आ—सीताम् ॥

१५. आ—सीतान्वेषणे रावणान्तःपुरनिचयो । रा—अन्तःपुरस्त्रीवर्णनं । य—सुन्दरस्त्रीचये स्त्रीवर्णनं । च म ड$_2$—अन्तःपुरविचये स्त्रीवर्णनं । प्र—स्त्रीवर्णनं । अ—न: पुरे स्त्रीवर्णनं । १६. म— अष्टमः । [illegible]$_1$—सप्तमः । आ फ रा च व प्र ड$_2$ अ—नास्ति ॥

ततस् तु हनुमांश् चिंतां व्यव-धूय व्यव-स्थितः ।
३४] जगाम चिन्ताम् अपरां सीतां प्रति महा-कपिः ॥१॥ [१

अन्वेयम् इति संचिन्त्य भूयस् ततः स वानरः । [N
३२] पान-भूमौ हरि-श्रेष्ठः सीता-सं-दर्शनोत्सुकः ॥२॥ [N

न रामेण वि-युक्ता सा स्वप्तुम् अर्हति मैथिली ।
३५] न भोक्तुं नाऽप्यलंकर्तुं कुतः पानं निषेवितुम् ॥३॥ [२५

नाऽन्यं नरम् उप-स्थातुं वासव-प्रतिमोऽपि यः । [२३
३६] न हि राम-समः कश्चिद् विद्यते त्रिदशेष्व् अपि ॥४॥ N

इति संचिन्त्य हनुमान् बुद्ध्यां स कपि-कुञ्जरः ।
N] रावणाऽन्तःपुरं भूयो विचेतुम् उप-चक्रमे ॥५॥ [N

---

१. रा घ य म ल$_1$ ल$_2$ अ–वतस्थौ । २. रा च य म प्र ल$_1$ ल$_2$ अ–अवधूय । ३. रा व म प्र ल$_1$ ल$_2$–च बुद्धिमान् । च–॰मुपस्थितः ? । अ–समुपस्थितान् ।

४. अतः परमधिकः पाठः —

आ—न प्राप्तं पद्मगन्धं च मुग्धे तस्याः पुनः पुनः ।

५. फ–चापरां चिन्तां ॥

६. घ फ अ–निश्चित्य । ७. घ फ अ–तु । ८. रा च अ–॰भूमि ॥

९. अ–न्विरस्य । १०. फ अ–॰प्युविव्दति ॥

११. फ रा य म प्र च ल$_1$ ल$_2$ अ–॰तिमो हि सः । १२ अ–॰द्दैरपि ॥

१३. रा–मुसुप्सा । च य म प्र ल$_1$ ल$_2$ अ–स्वप्तुप्सा ।

१४. अतः परमधिकः पाठः–

य म प्र ल$_1$ ल$_2$ अ—अन्वेयमिति निश्चित्य भूयस्तत्र तु वानरः ।
पानभूमिं हरिश्रेष्ठः सीतासंदर्शनोत्सुकः ॥

क्रीडितेनाऽपराः क्रांताः क्रांता गीतेन चाऽपराः ।
N] नृत्येन चाऽपराः क्रांताः पान-निद्राऽऽहताः पराः ॥६॥ [४
अंगनानां सहस्रेण भूषितेन वि-भूषणैः ।
N] उप-संलाप-शीलेन स्मित-युक्ताऽभि-भाषिणा ॥७॥ [६
देश-काल-वि-भक्तेन युक्त-वाक्याऽभि-भाषिनां ।
N] रतोप-रत-संयुक्तं राक्षसेन्द्रं ददर्श सः ॥८॥ [७
तासां मध्ये महा-बाहुः शुशुभे राक्षसेश्वरः ।
३७] गोष्ठे महति मुख्यानां गवां मध्ये यथा वृषः ॥९॥ [८
स राक्षसेन्द्रः शुशुभे ताभिः परि-वृतस् तदा ।
३८] करेणुभिर् यथाऽरण्ये परि-कीर्णो महा-द्विपः ॥१०॥ [९
सर्व-कामैर् उपेतां च पान-भूमिं महाऽऽत्मनः ।
४०] ददर्श कपि-शार्दूलस् तस्य रक्षः-पतेर् गृहे ॥११॥ [१०
मृगाणां महिषाणां च वराहाणां च भाग-शः ।
४१] तत्र न्यस्तानि मांसानि पान-भूमौ ददर्श सः ॥१२॥ [११

---

१. च–०तेन पराक्रान्ता । २ फ–क्रान्ता शीतेन चा० । आ च–पानेन नि हिता परा । ३ फ–स्वयेन ॥

४ रा च घ म ङ$_1$, ङ$_2$ अ–विभूषित । प्र–विभूषिता । ५ अ–उपशीलेन सतत । ६ आ–युक्ता गीतार्थभाषिणा । फ–युक्तगीताभि० । रा च घ म ङ$_1$ ङ$_2$–युक्तगीताभि-भाषिणा । प्र–युक्त गीताभि० ॥

७ आ–०भिधायिनी । रा घ म ङ$_1$–०भिभाषिणा । ८ आ–वतो विरविसं० । रा च घ म प्र–रता-वरतस० । ङ$_1$ ङ$_2$–रतावरतसंयु० । ९ आ–ददर्श हरियूथप ॥

१० फ–परिवृत. स्वयम् । अ–परिवृत स्वपन् । ११ च–०येया रम्य । १२ म–शरिपूर्णो । १३. फ–महागज । अ–यथा द्विप० ॥

१४ च–०मै कृपेतश्च ? । १५ फ अ–०वेर्गृहम् ॥

१६. रा घ म प्र ङ$_2$–महिषीणां । च–महिषणी ? । १७. ङ$_1$–हस्त नि ॥

रौक्मेषु च विशालेषु भाजनेष्व् अर्ध-भक्षितान् ।
४२] ददर्श कपि-शार्दूलो मयूरान् कुक्कुटांस् तथा ॥१३॥ [१२
वराह-वाध्रान् सु-कृतान् दध्नो सौवर्चलोऽन्वितान् ।
N] अन्यान् मृग-मयूरांश् च हनूमान् अन्व्-अवैक्षत ॥१४॥ [१३
मकरान् विविधान् सिद्धांश् चकोरान् अर्ध-भक्षितान् ।
N] माहिष्यांश्चैव शैल्यांश्च छागांश्च कृतनिष्ठि (?ष्ठ) तान् १५ [१४पू
४३उ] लेह्यम् उच्चाऽवचं पेयं फलानि विविधानि च । [१४उ
४४पू] राग-खाण्डव-संयुक्तान् अव-लेह्यान् ददर्श सः ॥१६॥ [N
हार-नूपुर-केयूरैर् अप-विद्धैर् महा-धनैः । [१५उ
N] पान-भोजन-विक्षिप्तैः फलैश् च वि-विधैर् अपि ॥१७॥
कृत-पुष्पोपहारा भूर् अधिकं पुष्यति श्रियम् । [१६
N] दीप्तैश्च कलधौतैश् च विन्यस्तैः शयनाऽऽसनैः ॥१८॥

---

१. फ रा य म प्र ल१ ल२ अ-तु । २. च-र्धलक्षितान् । प्र-•नेषु तुभुक्षि• । ल१-नेष्वथम• ॥
३. फ-वराहे दध्ना सु• । रा य म प्र ल१ ल२-•हमृगसंयुक्तान् । च-वराहमृगान् सु• । अ-वाराहवृषान् सु• । ४. रा य म प्र ल१ ल२-दधिमौष• । म आ-•चंलयुतान् । ५. फ-स्थूलान् । रा म ल२ अ-शून्यान् । च य ल१-स्थूल्यान् । ६. रा म च-हनुमान् प्लवगर्षभः । व प्र-ददर्श कपिकुञ्जरः ॥
७. फ-कुरान् । रा य म प्र ल१ ल२-रसान् । च-रसान् । ८ प-•रानथमक्षि• । ९. फ-•पनेकधान्याश्च । आ-•पानेकशू• । च-•पांश्चैकशू• । प्र-•पांश्चैव कू• । अ-•व सुलांश्च । १०. फ आ-कृत-निश्चितान् । रा य च म प्र ल१ ल२ अ-•निश्चयः ॥
११. आ फ अ-रागखाण्डवयुतांश्च विलीढान् स । च-•नवलेह्यं । १२. मा-द ।
१३. रा-•यूरैरवि• । अ-•पूरै वि• । १४. रा च य म ल२ अ-पानभाजन• ॥
१५. आ-•राभूत् सुचिरं । रा म ल२ अ-च्युतपु• । १६. फ च-श्रिया । रा य-श्रियम् । प्र-त्वियम् । ल१-श्रिया । १७. अ-प्रदीप्तैः । १८. रा च य म-विन्यस्त• । १९. अ फ रा-शयनासनैः । ल२-•नासने । अ-शय-नादिभिः ॥

पान-भूमिर् विना वह्निं मन्दीसेवोप-लक्ष्यते । [१७
N] वहु-प्रकारैर् वि-विधैर् वर-संस्कार-संस्कृतैः ॥१९॥
मांसैः कुशलं-संसिद्धैः पान-भूमि-गतैः पृथक् । [१८
४५] तथाऽम्ल-लवणोपेतैर् वि-विधै राग-खाण्डवैः ॥२०॥ [१५पू
वासैश् च स्वर्ण-माल्यैश् च विविधैस् तैः पृथक् पृथक् ।
४६] समंतात् शुशुभे भूमिर् माल्यैश् च वहु-सर्जितैः ॥२१॥ [२०
N] राजतेषु च कुंभेषु जांबूनद-मयेषु च ।
४२पू] पान-श्रेष्ठं तथा भूरि ददर्श कपि-यूथपः ॥२२॥ [२२,
N] दिव्याः प्रसन्ना वि-विधाः सुरास् तत्र तथाऽऽसवान् ।
४४उ] शर्कराऽऽसव-माध्वीकान् पुष्पाऽऽसव-फलाऽऽसवान् २३[१९
सोऽपश्यच् छातं-कोंभानि शीधोर् मणि-मयानि च ।
४७] राजतानि च मुख्यानि भाजनानि महा-कविः ॥२४॥ [२३
हिरण्मयैश् च करकैर् भाजनैः स्फाटिकैर् अपि ।
४८] जांबूनद-मयैश् चाऽन्यैः कलशैर् अपि सं-वृतान्॥२५॥ [२१

---

१. अ–पानभूमिं ॥

२. रा च थ म प्र ल१ ल२–मत्स्यैः कुशलिभिः सिद्धैः । अ–मांसैः कुशलिभिः सिद्धैः । ३. फ–०गतै- रपि । ल१–०भिगतः पृ० । ४. फ–०णोपेतैः । ५ फ–रागषाडवैः । रा थ म प्र ल२–०रासवैस्तथा । ल२–०राक्षसैस्तथा ॥

६. फ रा च थ म प्र ल१ ल२ अ–वासैश्चूर्णैश्च मा० । ७. आ रा च थ म प्र ल१ ल२–संवृता शुशुभे । ८. रा थ म प्र ल१ ल२–भूमिः पुष्पमाल्यैश्च संजितैः । च–भूमिर्बहु- माल्यैश्च सजितैः । अ–भूमिं पुष्प० ॥ ९. अ–राजेषु । १०. अ–पानं श्रेष्ठं । ११. फ–स्वं । १२. फ रा च थ म प्र ल१ ल२–हरियूथपः ॥

१३. च–०च्छातकुंभानि । अ–०च्छीतकुंभानि । १४. फ–श्रीमन्म- णिम० । रा थ म प्र ल१–कपिमं- णिम० । ल२–साधुमणि० । अ–दिव्य- सीधुमृतानि । १५. ल२–स । १६. रा थ म प्र ल१–रम्याणि । च ल२– पुण्याणि ॥

१७. रा च थ म प्र ल१ ल२– विविधैर्० । १८. रा थ ल१–राज- तैर् । प्र–विविधैर् । १९. फ रा च थ म प्र ल१ ल२–करकैरपि । अ–करकैरपि । २०. फ–संवृतैः । प्र– संवृतान् ॥

४९उ] क्वचिद् अर्धाऽवशेषाणि क्वचित् पीतानि सर्वशः[1] ।
५०पू] क्वचिन् नैवं[2] प्र-पीतानि पानानि[3] प्रेक्षते स्म सः ॥२६॥[4] [२४
५२पू] क्वचित् संपृक्त-माल्यानि भोजनान्य् अचलानि[5] च। [२६उ
शयनान्य्[6] अत्र[7] नारीणां शून्यानि वि-विधानि च ॥२७॥[8]
N] परस्परं समा-श्लिष्य काश्चित् सुप्ता वरांऽगनाः[9] । [२७
काश्चिद्[10] अन्योऽन्य-वस्त्राऽन्तम् अप-कृष्योप-गृह्य[11] च ।
N] अभि-सृत्यो[12]ऽबलाः सुप्ता निद्रा-बलैः[13]-परा-जिताः ॥२८॥ [२८

---

१. आ—पश्यन्वै कपिकुञ्जरः । अ—क्वचित्पूर्णा० । २. आ—क्वचित्प्र-भिन्नैः करकैः। फ—क्वचित्प्रभग्नैः करकैः । रा—क्वचित्रैव प्रदीपानि । ३. आ—क्वचिदारोपितैर्घटैः । च अ—पानानि स विलोकयन् । म—पानान्यप्रेक्षते स्म सः । ल₂—पानानि स व्यलोकयत् । ४. अतः परमधिकः पाठः—

च ल₂—क्वचिद् भक्ष्यांश्च विविधान्* पानानि च क्वचित्क्वचित् † ।
च ल₂—क्वचिद्धावशेषाणि अपश्यत्-कपि-कुञ्जरः ‡ ।
च ल म प्र ल₁ ल₂—क्वचित्प्रभिन्नैः करकैः क्वचिदारोपितैर्घटैः ॥

५. फ—फलानि विविधानि । रा च य म प्र ल₁ ल₂—फलानि च जलानि । ६. अ—शयनानि तु । ७. फ—शुभानि । रा च य म प्र ल₁—सुखानि । ८. ल₂—नास्ति ।

रा—अतः परमधिकः पाठः—

क्वचिद्र्धावशेषाणि सोपश्यत्कपिकुञ्जरः ।
क्वचित्प्रभिन्नैः करकैः क्वचिदारोपितैर्घटैः ॥
क्वचित्संपृक्तमाल्यानि फलानि च जलानि च ।

९. रा य म प्र ल₁—०स्ता वरस्त्रियः । च—काचित्सुप्ता वरांगना । १०. फ रा च य म प्र ल₁ ल₂ अ—क्वचिद्० । ११. आ—०वस्त्रान्तमव-गृह्य० । रा च य म प्र ल₁ ल₂—वस्त्रान्तमपकृष्याश्व० । १२. च य म प्र ल₁—०स्याबला । १३. आ रा च य म प्र ल₁ ल₂ अ—निद्राबलपराजिता ॥

---

* अ—क्वचित् क्षीराश्च विविधा । † य म प्र ल₁—पानानि विविधानि च । अ—नान्यानि च क्वचित्क्वचित् । ‡ य प्र म ल₁—क्वचिद्र्धावशेषाणि सोपश्यत्कपिकुंजरः । अ—क्वचिद्र्धावशेषाणि पश्यं स कपिकुंजरः ।

तासाम् उच्छ्वास-वातेन वस्त्र-माल्यं च गात्र-गम् ।
N] नाऽत्यर्थं स्पंदते चित्रं प्राऽऽप्य मंदम् इवाऽनलम् ॥२९॥ [२९

५३उ] चन्दनस्य च दिव्यस्य शीधोर् मधु-रसस्य च ।
N] कर्पूरस्य तथाऽग्र्यस्य पुष्पस्य वि-विधस्य च ॥३०॥ [३०पू

वि-विधस्याऽङ्ग-रागस्य वाससो वि-विधस्य च । [N
N] बभूव मारुतस् तत्र गन्धं वि-विधम् उद् वहन् ॥३१॥ [३०उ

माल्यानां च चन्दनानां धूपानां च स मूर्छितः ।
N] प्र-ववौ सुरभिर् गंधो विमाने पुष्पके तदा ॥३२॥ [३१

श्यामाऽव-दाताम् तत्राऽन्याः काश्चित् कृष्ण-वरांगनाः ।
N] काश्चित् काञ्चन-वर्णाऽऽभाः प्रमदा राक्षसाऽऽलये ॥३३॥ [३२

तासां निद्रा-वशात्वाच् च मदनेन च मूच्छितम् ।
N] पद्मिनीनां प्र-सुप्तानां रूपम् आसीद् यथैव तत् ॥३४॥ [३३

---

१. य म प्र ल१–वस्त्र माल्यं । २. आ फ रा य म प्र अ–गात्रजम् । ल१ ल२–वस्त्रगम् । च–सात्रगम् । ३. फ–अंगना ॥

४. रा च य म प्र ल१ ल२–तथोग्रस्य । अ आ–तथाग्रस्य ॥

५. फ रा च अ–विविधाय च माल्यस्य । ६. फ रा अ–प्रथितस्य शुभैः करैः । च–प्रथितैश्च शुभैः करैः । ७. य म प्र ल१ ल२–नास्ति ॥

८. आ रा च य म प्र ल१ ल२ अ–स्नानानां । ९. ल२–विविधानां । १०. फ–संविमूर्च्छितः । च–स च मू० । च–च समन्वितः । अ–चापि मूर्छितं । ११. अ–सुरभिर्वायुः । १२. फ–स्थिते । य प्र ल१–तथा ॥

१३. फ रा च–०दाताः सुता-ऽन्याः । य म प्र ल१ ल२–०दाता सुतान्या । अ–०दाता शुक्लान्या । १४. य म प्र ल१ ल२ अ–काश्चित्कृष्णा वरांगना । १५. रा च य म प्र ल१ ल२ अ–०नवर्णाभः ॥

१६. अ–निद्रावशाद्गन्धचन्दनेन । १७. प्र–सु । १८. फ–मूर्च्छिताः । १९. आ म अ–०मासीत्तथैव । २०. फ–तु ॥

५४उ] एवं सर्वम् अ-शेषेण रावणाऽन्तः-पुरं कपिः ।
५५पू] ददर्श स महा-तेजा न ददर्श च जानकीम् ॥३६॥ [३४

५१पू] फलानि चोऽर्ध-शेषाणि माल्यानि वि-विधानि च ।
५२उ] मृदितान्य् अप-विद्धानि गंधवन्ति ददर्श सः ॥३७॥ [N

N] बहूंश् च वि-विधान् भक्षान् फलानि विविधानि च ।
५३पू] स्रजश् च विविधाश् चित्राः प्रवि-कीर्णास् ततस्ततः॥३८॥ [N

N] निरीक्षमाणश् च ततस् ताः स्त्रियः स महा-कपिः ।
५५उ] जगाम महतीं चिंतां धर्म-साध्वस-शंकितः ॥३९॥ [३५

N] स बुद्ध्या चिन्तयामास कपिर् बुद्धिमतां वरः । [N
पर-दाराऽव-रोधस्य प्र-सुप्तस्य निर्-ईक्षणम् ।
५६] इदं खलु ममाऽत्यर्थं धर्म-लोपं करिष्यति ॥४०॥ [३६

न हि मे पर-दाराणां दृष्टिर् विषय-वर्तिनी ।
५७] अयं चाऽत्र मया दृष्टः पर-दार-परि-ग्रहः ॥४१॥ [३७

---

१ च॰णाऽन्तःपुरे । २. ल$_2$ अ-स ददर्श । प्र-ददर्श तु । ३ रा घ म प्र ल$_1$, ल$_2$-मैथिलीं न ददर्श च । घ च-न ददर्श स जा॰ । ल$_2$-मैथिलीं न ददर्श सः ॥

४. फ-धावशे॰। अ-वा विशे॰। ५. फ-मृदितान्यपि विद्धानि । ६. रा घ म प्र ल$_1$, ल$_2$-नास्ति ॥

७. घ म प्र ल$_1$, ल$_2$-भक्षान् ।

८. रा च घ म प्र ल$_1$, ल$_2$ प्र-प्रकीर्णाश्च ॥

९. च-स्त्रियश्च । १०. रा घ म प्र ल$_1$-धर्मविध्वंस॰ ॥

११. च-सु॰ । म ल$_2$ प्र-स्व॰ । १२. घ-पुरदा॰ ॥

१३. फ रा च घ म प्र ल$_2$ म-अयमत्र । ल$_1$-अय सोत्र । १४. फ रा-परदारान॰ ॥

तस्य प्रादुर् अभूद् चिंता पुनर् एव मनस्विनः ।
५८] निश्चितैकान्त-चित्तस्य कार्याऽकार्य-प्रदर्शिनः ॥४२॥ [३८
कामं दृष्टा मया सर्वा वि-वस्त्रा रावणे-स्त्रियः ।
५९] न तु मे मनसः किञ्चिद् वैकृत्यम् उप-जायते ॥४३॥ [३९
मनो हि हेतुः सर्वेषाम् इन्द्रियाणां प्र-वर्तने ।
६०] शुभाऽशुभास्व् अवस्थासु तच् च मे सु-व्यवस्थितम् ॥४४॥ [४०
नाऽन्यत्र हि मया शक्या वैदेही परि-मार्गितुम् ।
६१] स्त्रियो हि स्त्रीषु दृश्यन्ते सदा हि परि-मार्गणे ॥४५॥ [४१
यस्य सत्त्वस्य या योनिस् तस्यां स परि-मार्ग्यते ।
६२] न शक्या प्रमदा नष्टा मृगीषु परि-मार्गितुम् ॥४६॥ [४२
तद् इदं मार्गितं तावच् छुद्धेन मनसा मया ।
६३] रावणाऽन्तःपुरं सर्वं दृश्यते न च जानकी ॥४७॥ [४३
देव-गन्धर्व-कन्याश् च नाग-कन्याश् च वीर्यवान् ।
६४] अवेक्षमाणो हनुमान् न चाऽपश्यत् तु जानकीम् ॥४८॥ [४४

---

१. रा-नास्ति । २. फ-निष्ठितैः कार्येषि॰ । च-विहनकान्त॰ । ३. आ-कार्यप्रदर्शनश्च यः । च-कार्ये निश्चयप्रदर्शिनः । ४. रा य म प्र ळ$_1$ ळ$_2$-नास्ति ॥

५. फ च अ-विवस्त्राभरणाः स्त्रियः । ६ रा च य म प्र ळ$_1$ ळ$_2$-॰चिद्वैरूप्यमु॰ । अ-वैकृत्यमु॰ ॥

७. रा-सेतुः । ८. रा च ळ$_1$ ळ$_2$-प्रवर्तते । ९. फ आ-न च । च रा य म प्र ळ$_1$ ळ$_2$-तदि ॥

१०. च-अरण्यं वैदेहीं । ११. च-गृहेषु । १२. च-सदैव ॥

१३. रा य म प्र ळ$_1$ ळ$_2$-नास्ति । १४. आ-शक्यं । १५. अ-दृश्य ? ॥

१६. रा अ-सर्व ॥

१७ फ-देवदानवक॰ । १८. अ-यक्षक॰ । १९. [illegible]-पन्नगाः । २०. आ फ च प्र-अवेक्ष्य॰ । रा-अवीक्ष॰ । २१. आ-॰श्चचादृश्यत । च य म ळ$_1$ ळ$_2$ अ-॰पश्यत । प्र-चापश्यत ।

ताम् अ-पश्यन् कपिस् तत्र पश्यंश् चाऽप्य् अपराः स्त्रियः ।
N] अप-क्रम्य ततो दीनः सं-ध्यातुम् उप-चक्रमे ॥४९॥ [४८

भोज्यैः स पौरोगव-शास्त्र-दृष्टैः
पानैर् उदारैश् च वि-राजमानम् ।
दृष्ट्वा प्र-सुप्तं प्रमदा-जनं तं
N] प्र-हृष्ट-रोमा प्लवगो बभूव ॥५०॥ [N

तम् उग्र-रूपं गिरि-काञ्चनोपमं
प्र-हृष्टम् उत्सिक्तम् अहीन-चारिणम् ।
रहो-गतं रावणम् उग्र-दर्शनं
N] ददर्श घोरं हनुमान् महा-कपिः ॥५१॥ [N

स शर्वरीं प्रेक्ष्य बहु-मेयाताम्
अ-पश्यमानो जनकाऽऽत्म-जां च ।
स शीघ्र-कारी मतिमान् वि-मानाद्
N] अवाऽऽरुरोह त्वरितोऽथ तस्मात् ॥५२॥ [N

इत्यार्षे रामायणे सुन्दर-काण्डे सीताऽन्वेषणे पान-भूमि-वर्णनं नाम षष्ठः सर्गः ॥६॥

---

१ रा च घ म प्र ङ$_1$ ङ$_2$–क्वचित्तत्र । २ रा–पश्यन्नपि चर-स्त्रियः । च घ म प्र ङ$_1$ ङ$_2$–०श्च-ष्यपि पर० । ३ फ–सध्यानमु० । ङ$_1$–सध्यान्तमु० । ङ$_2$–संध्यातमु० ॥
४ रा च घ म प्र ङ$_1$ अ–भोज्यैश्च । ङ$_2$–भोगैश्च० । ५. आ–विरम्यमान । च–विरज्यमाणां । रा घ म प्र ङ$_1$–महासुगन्धैः । फ–विराजमानः । ङ$_2$–मनःप्रियैश्चैः । ६. आ–च ॥
७. रा च घ म प्र ङ$_1$ ङ$_2$ अ–सबलाम्बुदोपमम् । ८. आ–०समहीव चा० । रा च–तमभीष्टचा० । घ ङ$_1$ ङ$_2$–कमभीतचा० ।

९. आ–अतः परमधिकः पाठः—दृष्ट्वा प्रसुप्तं प्रमदाजनं तम् ।
१० आ–अत. परमधिक. पाठः—प्रहृष्टरोमा प्लवगो बभूव ।

११. फ–बहुमयाताम् । प्र–बहु-मयताम् ॥
१२. अ इति थी । १३. घ प्र ङ$_1$ ङ$_2$–रावणपानभू० । फ अ–०भूमिवर्णनो० ॥

स तस्य धीरो[1] भवनस्य वानरो
लता-गृहांश्[2] चित्र-गृहान्[3] तदाऽन्तिके ।
जगाम भीतां[4] प्रैति दर्शनोत्सुको
[५] न चैव तां पश्यति चारु-दर्शनाम् ॥१॥ [१

स चिन्तयामास ततो[5] महा-कपिः
प्रियाम् अ-पश्यन् रघु-नन्दनस्य ।
ध्रुवं न सीता[6] ध्रियते[7] यथा न मे
[६] वि-चिन्वतो दर्शनम् एति मैथिली[8] ॥२॥ [२

सा राक्षसानां प्र-वरेण[10] बाला
स्व[11]-शील-संरक्षण-तत्परा सती ।
अनेन[12] संद्यः[13] मति-रौद्र-कर्मणा[14]
[७] हुता भवेद्[15] आर्य-पथे व्यव-स्थिता[16] ॥३॥ [३

---

१. फ च रा य म प्र ल ल₁ ल₂ अ-वीरो । २. अ-वेश्मगृ० । फ च य म प्र ल₂ ल₁ अ-०श्मगृहा-शागृहान् ० । ३. अ-सीतापरि ०। प्र-दर्शनोत्सुकं ॥

४. फ च रा व म प्र ल₁ ल₂ अ-महाकपिस्तदा । ६ आ-ता । ७. रा व म प्र ल₁ ल₂ यता । ८. रा च व म प्र ल₁ ल₂ अ-वया । ९. आ ल₁-विचि-न्वितो ॥

१०. फ-प्रबलेन । ११. फ रा व च म प्र ल₁ ल₂ अ-सुशील । १२. य-अथेत्र । ल₁-अथापि । १३. रा म ल₂-साद्य । १४. अ-परि रौ० १५ आ-न चेद्रा० । १६. फ-वरे स्थिता । रा च व म प्र ल₁ ल₂-वरा स्थिता । अ-परिस्थिता ।

विरूप-रूपा वि-कृता वि-वर्चसो
महाऽऽनना दीर्घ-विरूप-दर्शनाः ।
समीक्ष्य वा राक्षस-राज-योषितो
६८] भयाद् वि-पन्ना जनकेश्वराऽऽत्मजा॥४॥ [४
सीताम् अ-दृष्ट्वा त्वनवाप्य पौरुषं
वि-हृत्य कालं सह वानरैश् चिरम् ।
न मेऽस्ति सुग्रीव-समीप-गा मतिः
६९] स तीक्ष्ण-दण्डो बलवान् हि वानरः॥५॥ [५
सर्ग१५] दृष्टम् अन्तःपुरं सर्वं सर्वा राक्षस-योषितः ।
१] न सीता दृश्यते साध्वी वृथा जातः परि-श्रमः ॥६॥ [६
किं नु मां वानराः सर्वे गतं वक्ष्यन्ति मानिनः ।
७] गत्वा तत्र त्वया वीर किं कृतं पवनाऽऽत्मज ॥७॥ [७पू
३पू] अ-दृष्ट्वा किं प्र-वक्ष्यामि तामं अहं जनकाऽऽत्मजाम् । [७उ
४उ] ध्रुवं मायमुपे (१पै) प्यन्ति कालस्य वि-निवर्तने ॥८॥ [८

---

१. प्र-विपक्षसो । २. रा च घ म प्र ल$_1$ ल$_2$-वै ॥

३. आ-शीताम्० । ४. फ-ध्नन० । रा च घ म प्र ल$_1$ ल$_2$ अ-ध्यन० । ५. फ रा च घ म प्र ल$_1$ ल$_2$ अ-गतिः । ६. फ रा च घ म प्र ल$_1$ ल$_2$ अ-तु ॥

७. अ-दृष्ट्वा ॥

८. घ घ-म प्र ल$_1$ ल$_2$ अ-किन्तु । ९. अ आ-मामितः । ल$_1$-वानराः । १०. प्र-तत्रस्तत्र । ११. कृत्वा ॥

१२. च घ म ल$_2$-तामहं । १३. रा म प्र ल$_1$-प्रासमुपेक्षन्ते । घ-प्रासमुपेक्ष्यन्ति । ल$_2$-प्रासमुपेक्षन्ति । १४. रा च घ म प्र ल$_1$ ल$_2$ अ-कालश्च । १५. फ अ-स्यतिवर्तते । रा च घ म प्र ल$_1$ ल$_2$-परिवर्तते ।

३उ] किं मां वक्ष्यन्ति वृद्धास् तु जाम्बवान् अंगदस् तदा ।
४पू] गतं पारं समुद्रस्य वानरांश् च समा-गताः ॥९॥ [९
७पू] भूयस् तावद् वि-चेष्यामि न यत्र वि-चयः कृतः । [१२
अ-निर्वेदः श्रियो मूलम् अ-निर्वेदः परं सुखम् ॥१०॥
५] अ-निर्वेदो हि सततं सर्वार्थेष्व् अनु-वर्तकः । [१०
करोति सफलं सर्वं जीवितं जीवितेष्व् अपि ॥११॥
६] तस्माद् अ-निर्वेद-करं यत्नं चेष्टेऽहम् उत्तमम् । [११
N] अ-दृष्टां हि वि-चेष्यामि पुरीं रावण-पालिताम् ॥१२॥
८पू] आपान-शाला वि-चितास् तथा पुष्प-गृहाणि च । [१२
N] भूमी-गृहांश् चैत्य-गृहा गृहोऽति-गृहका अपि । [१४उ
निष्कुटाऽन्तर-रथ्याश् च विमानानि च सर्वशः ॥१३॥ [१३उ
९] उत्पतन् निपतंश् चाऽपि तिष्ठन् गच्छन् पुनः पुनः ।

---

१. फ–वा । २. रा च व म फ प्र ल१ ल२ अ–०वथा । ३. रा ल२–गन्तुं । ४. रा च व म प्र ल२–वानरा वा ॥

५. फ–भूयस्तावद्वि० । रा च व म ल१ ल२–भूयस्तां च । ६. आ–निचय: ॥

७. फ–०र्थेष्वनिवर्तकम् । रा–०र्थेष्वनव० । प्र च–०र्थेषु निव० । अ–०र्थेषु प्रवर्तकः । ८. फ–यत्नो । रा च व म प्र ल१ ल२ अ–जन्तोः । ९. रा–जीविते । १०. फ–च यज्जे- द् । अ–ह्यत्परजेष्व् ॥

११. अ–०र्वेदयिके । १२. रा च व म प्र ल१ ल२–चेष्टयम्० ॥

१३. रा–अदृष्टे । १४. फ–निवे- क्ष्यामि । १५. फ रा व म प्र ल१ ल२ अ–दिवं । १६. फ अ–वरगपा० । १७. आ–विचिता तथा । रा च व म प्र ल१ ल२–विविधास्त० । १८. फ–भूमेर्गृहाः सैन्यगृहा ॥

१९–फ गृहाणि गृहकान्यपि । च–गृहाश्च गृहका अपि । अ–गृहा- ऽतिगृहा अपि । २०. व म ल१ ल२ नारेऽ । २१. रा च व म प्र ल१ ल२ अ–०ताश्चिपतंश्चापि । २२. रा च व म प्र ल१ ल२ प्रतिगच्छन् ॥

अपो-वृत्तंश् चे द्वाराणि कपाटान् अव-घाटयन् ॥१४॥ [१५

१०] प्र-विशन् निप्-पतंश् चाऽपि प्र-पतन् उत्-पतन् अपि।[४क]

N] अल्पम् अप्य् अव-काशं से वि-चचार महा-कपिः ॥१५॥ [१६

चतुर्-अंगुल-मात्रोऽपि नाऽव-काशः स विद्यते ।

११] रावणाऽन्तःपुरे तस्मिन् यं[७] कपिर् न जगाम सः ॥१६॥ [१७

प्राकाराऽन्तर-रथ्याश् च वेदिकाश् चैत्य-संश्रयाः ।

१३] श्वभ्राश् च पुष्करिण्यश् च सर्वं तेनाऽव-लोकितम् ॥१७॥ [१८

राक्षस्यो विविधाऽऽकाराः स्व-रूपा वि-कृतांश् च याः ।

१४] दृष्टा हनुमता तत्र न त्वेवं[१२] जनकाऽऽत्मजा[१३] ॥१८॥ [१९

रूपेणाऽप्रति-मा लोके सिद्ध-विद्याधर स्त्रियः[१४] ।

१५] दृष्टा हनुमता तत्र न त्वेवं[१६] दशरथ-स्नुषा[१७] ॥१९॥ [२०

नाग-कन्या वराऽऽरोहाः पूर्ण-चन्द्र-निभाऽऽननाः ।[१८]

N] दृष्टा हनुमता तत्र न साऽदृश्यत जानकी ॥२०॥[२०] [२१

---

१. आ—अपावृत्तांश्च । रा घ म प्र ल, ल२—आपानभूमि॰ । २. आ—॰टान्यवघाट्य तु । फ—॰टान्येव पाट॰ । रा घ म प्र—॰टाम्यवपाट॰ । ल, ल२ अ—कवाटाम्यवपा॰ ॥

३ आ—प्रविसन्निपतश्चापि । अ—प्रविशन्नुप॰। ४ फ अ—उत्पित॰ । ४क. घ म ल, ल२—नास्ति ॥

५. रा च य म प्र ल, ल२—च। फ—श्च । ६ फ य म प्र ल, ल२—रम । ७ रा—वानरो न । च—प कपिर्नि॰ । अ—यत्र कपिर्न । य म प्र ल, ल२—वानरो नि॰ ॥

८ रा—॰काश्चैत्य । च—॰काश्चैत्य संश्रयान् ॥

९ आ—शुभ्राश्च । फ अ—शुभ्राश्च । च—श्वभ्राश्च ॥

१०. रा च य म प्र ल, ल२ अ—विविधान् । ११. फ—चैव । रा च अ—सा । १२ रा च—दशरथस्नुषा । १३ घ म ल, ल२—नास्ति ।

१४ फ अ—देवगन्धर्वयोषित. । १५ रा घ म ल, ल२—नास्ति । १६ आ अ च—सा । १७ रा य म ल, [illegible]२—नास्ति ॥

१८ य ल, ल२—नास्ति । १९ फ च म अ—मा जनकनन्दिनी । २० रा य ल, ल२—नास्ति ॥

प्र-मथ्य[1] राक्षसेन्द्रेण देव-कन्या[2] बलाद्[3] हृताः ।[4]
१.६] दृष्टा हनुमता तत्र न सा जनक-नन्दिनी ॥२१॥ [२२
सोऽपश्यंस्[7] तां महा-बाहुः[8] पश्यंश्[9] चाऽन्या वर-स्त्रियः ।
१.७] वि-षसाद[10] महा-तेजा हनुमान् मारुताऽऽत्मजः[11] ॥२२॥ [२३
उद्योगं वानरेन्द्राणां प्लवनं सागरस्य च ।[12]
N] व्यर्थं[13] वीक्ष्याऽनिल-सुतश्[14] चिन्तां पुनर् उपाऽऽगमत्[15] ॥२३॥ [२४
१.८पू] अव-तीर्य विमानाऽग्रात्[16] हनुमान् मारुताऽऽत्मजः[17] ।[18]
चिन्तां च स जगामाऽऽशु[19] शोकोप-हत-चेतनः[20] ॥२४॥ [२५
ध्यात्वा क्षणं ततो भूयो वि-चेतुम् उप-चक्रमे ।
N] हृदि कृत्वा प्र-यत्नं[21] तु[22] प्र-पन्नं[23] भजते विधिः ॥२५॥ [N

इत्यार्षे रामायणे सुन्दर-काण्डे हनुमच्-चिन्ता-
नाम सप्तमः सर्गः[24] ॥७॥

---

१ फ–प्रमद्य । २. रा–राजकन्या । ३. आ–बलोद्धृताः । ४. य म ल१ ल२–नास्ति । ५. अ–दशरथात्मजा । ६. फ च–नास्ति ॥

७. रा च य म प्र ल१ ल२ अ–अपश्यंस्तां । ८. फ–महाप्राज्ञः । ९. रा य म प्र ल१–पश्यश्चान्या । १०. आ–निषसाद । ११. रा य म प्र ल१ ल२ अ–पवनात्मज. ॥

१२. य प्र ल१–नास्ति । १३. म–व्यर्थं । १४. रा म–पुनरपेयिवान् । १५. य प्र ल१–नास्ति ॥ नाग्र । १७. रा च म ल२–पवनात्मजः । १८. य प्र ल१–नास्ति । १९. फ–चिन्तामुपगतश्चाशु । रा च य म प्र ल२ अ–चिन्तामुपजगामाशु । ल१–चिन्तामुपजगामासौ । २०. रा च–०हतचेतस ॥

२१. रा च य म प्र ल१–प्रयत्नं च । ल२–प्रयत्नं स । अ–पुनर्यत्नं । २२. फ रा च य म प्र ल१ ल२–प्रयत्नं ॥

२३. फ रा य म प्र ल१ ल२

स विमानात्[1] च निष्-क्रम्य प्राकारं[2] हरि-यूथ-पः।
N] हनूमान् वेगवान् आसी(?या)द्[3] यथा विद्युद् घनाद् घनम्॥१॥ [१
रावणान्तः[4]-पुरं सर्वं वि-चित्य[5] स महा-कपिः। [२पू
न ददर्श[6] ततः[7] सीतां मैथिलीं जनकाऽऽत्म-जाम्।
N] चन्द्र-लेखाम् इव नवां[8] व्योम्नि नीलाऽभ्र-संवृताम्॥२॥ [N
तत्र[9] प्रासाद-हर्म्येषु[10] विमान-भवनेषु च।
N] निष्कुटेषु[11] च रम्येषु तथा[12] सं-जवनेषु च॥३॥ [N
अ-दृष्ट्वा जानकीं सीतां निरीक्ष्य[13] च[14] मुहुर्मुहुः। [२उ
N] नेह[15] सीतेति हनुमांश् चक्रे बुद्धिं[16] महा-कपिः॥४॥ [N
कथं हि[17] सीता वैदेही मैथिली जनकाऽऽत्म-जा।[18]
N] उप-तिष्ठेत[19] वि-वशा रावणं दुष्ट-चारिणम्[20]॥५॥ [६
नेह स्यास्यति वैदेही राम-पत्नी यशस्विनी।

---

१. अ—विमानाद्विनि०। २. अ—प्राकारं। ३. फ—सीता॥

४. आ—रावणस्य पुरं। ५. फ—विचिन्वन्। रा च अ—विचित्य। ६. रा य म प्र ल$_1$ ल$_2$—तत्र ददर्श। ७. अ—परां॥

८. फ—ततः। ९. प्र—०नेप्वथ॥

१०. अ—निमृतेषु। ११. प्र ल$_1$—षु। १२. फ—तथा सर्वत्र०। रा य म प्र ल$_1$—तथा साल्वनेषु। च ल$_2$—तथा सांवनेषु। अ—जलजेषु वनेषु॥

१३. फ—निरीक्षंश्च। १४. फ—नैवं। १५. च—बुद्धिर्॥

१६. अ—च। १७. फ—नास्ति। १८. च—०तिष्ठेदमस्यै सा। य—०तिष्ठेदमार्यै सा। म—०त्रिष्ठेदममला। प्र ल$_2$—०तिष्ठेदमस्यै सा। ल$_1$—०तिष्ठेदमस्या सा। १९. य प्र ल$_1$—दुष्टचारिणी। २०. फ—नास्ति॥

N] अन्यं क्रमिष्ये[1] दुर्-धर्षं[2] काननं प्रमदाऽऽलयम्[3][3क] ॥६॥ [N
विचिंत्य[4] लंकां यत्नेन हनूमान्[5] मारुताऽऽत्म-जः ।
२०] [6]अन्यां याम-शेषायां प्राकारे नि-पपात ह ॥७॥ [N
स च[7] हृष्टेन मनसा प्राकार-स्थो महा-कपिः ।
N] कोऽसौ सीतेति हनुमांश् चिंतयामास वानरः ॥८॥[10] [N
भूयिष्ठं वि-चिता लंका रामस्याऽनु-रतां[11] प्रियाम्[12] ।[13]
N] न[14] च[14] पश्यामि वैदेहीं सीतां सर्वाऽङ्ग-शोभनाम् ॥९॥ [३
पल्वलानि तडागानि[15] सरांसि सरितस् तथा ।
N] नद्यश्[16] चोप-वनोऽन्ताश् च दुर्गाणि धरणी-धराः ॥१०॥[17] [४पू
वि-चितं[18] बहुधा सर्वं न चै[19] पश्यामि जानकीम् । [४उ
२४] सीतां कमल-पत्राऽक्षीं रामस्य महिषीं प्रियाम् ॥११॥ [N
न सोऽस्ति[20] भूमिः शैलो[21] वा सरितः काननानि वा[22] ।
२५] यत्र नोऽऽर्या[23] मया सीता मार्गिता चरता महीम् ॥१२॥[N

---

१. रा–क्रमिष्य॰ । अ–गमिष्ये । २. म–दुर्दशं । ३. रा च थ म प्र ल१ ल२–कोषयं । ३क. फ–नास्ति ॥

४. अ आ च–विचिन्त्य । ५. रा च थ म प्र ल१ ल२–हनुमान् । ६. रा थ म प्र ल१ ल२–रात्र्यल्पा-मशे॰ । ७. फ–नास्ति ॥

८. रा च थ म प्र ल१ ल२–तु । ९. आ–नेह । १०. फ–नास्ति ॥

११. अ आ–रामस्य चरता । रा म–रामस्यानुगतां । १२. अ–प्रियं । १३. फ–नास्ति ॥

१४. रा म–नैव । च–नावप॰ । थ प्र ल१ ल२–नानुप॰ ॥

१५. रा–तडाकानि । १६. आ–नद्योत्तुप॰ । अ–नद्युपान्तं वना॰ । १७. फ–नास्ति ।

१८. फ रा च थ म प्र ल१–ल२ अ–विचिता वसुधा सर्वा । १९. म–पश्यामि च ।

२०. फ–चास्ति । रा च थ म प्र ल१ल२ अ–सोस्ति । २१. फ रा च थ म प्र ल१ ल२ म–शैलो भूमिर्वा । २२. प्र ल१ल२ अ–च । २३. फ–चार्या ॥

इह सं-पातिना सीता रावणस्य नि-वेशने ।
२६] आख्याता गृध्र-राजेन न च पश्यामि मैथिलीम् ॥१३॥[५

क्षिप्रम् उत्-पततो मन्ये सीताम् आ-दाय रक्षसः ।
२७] बिभ्यतो राम-बाणानाम् अंकान् नि-पतिता भवेत्॥१४॥[७

अथवा ह्रियमाणायाः पथि सिद्ध-नि-षेविते ।
२८] नूनं स्फुदितम् आर्याया हृदयं वीऽऽक्ष्य सागरम्॥१५॥ [८

रावणस्योरु-वेगेन भुजाभ्यां पीडितेन च ।
२९] तथा मन्ये विशालाऽक्ष्या त्यक्तं जीवितम् आर्यया ॥१६॥[९

उपर्य् उपरि सा नूनं सागरं क्रमतस् तदा ।
३०] वि-चेष्टमाना पतिता समुद्रे जानकी ध्रुवम् ॥१७॥ [१०

अहो क्षुद्रेण वा तेन रक्षन्ती शीलम् आत्मनः ।
३१] अबन्धुं भक्षिता सीता रावणेन तपस्विनी ॥१८॥ [११

अथवा राक्षसेन्द्रस्य पत्नीभिर् अ-सितेक्षणा ।
३२] अ-दुष्टा दुष्ट-चित्ताभिर् भक्षिता जनकाऽऽत्म-जा॥१९॥ [१२

---

१. रा च य म प्र ल$_1$ ल$_2$ अ–०मुत्पवितो । २. रा च य म प्र ल$_1$ ल$_2$ अ–राक्षसः । ३. रा च य म प्र ल$_1$ ल$_2$ अ–वित्रस्ता । ४. रा म–रावणं दृष्ट्वा साङ्का०। च–रावणं दृष्ट्वा चाङ्का० । य ल$_1$ ल$_2$–राक्षसं दृष्ट्वा चाङ्का० । प्र–राक्षसान् दृष्ट्वा चाङ्का० । अ–रावणयाङ्कात् समुद्रे पतिता ॥

५. अ–क्षयमाना० ॥

६. फ च प्र ल$_1$ ल$_2$–मया । अ–भयान् ॥

७. रा म–विवेष्टमाना । ८. रा–जनकात्मजा ॥

९. फ–पापेन । १०. आ फ–रक्षती । ११. रा च य म प्र ल$_1$ ल$_2$–शीलमुत्तमम् । १२. फ रा च य म प्र ल$_1$ ल$_2$–अबंधुर् ।

१३. अ–राक्षसेन्द्रस्य पत्नीभिर्दुष्टा-भिरसितेक्षणा ॥

अथवा नि-हिता मन्ये रावणस्य नि-वेशने ।
३५] कच्चिल् लालप्यते नूनं पञ्जर-स्थेव सारिका ॥२०॥ [१५
फुल्ल-पङ्कज-गर्भाऽऽभं शुभं ज्वलित-कुण्डलम् ।
३३] रामस्य चिन्तयन्त्य् आस्यं पञ्चत्वं कृपणा गता ॥२१॥ [१३
हा राम लक्ष्मणेत्य् एवं हाऽयोध्येति च साऽसकृत् ।
३४] वि-लप्य बहु वैदेही न्यस्त-देहा भविष्यति ॥२२॥ [१४
जनकस्य कुले जाता राम-पत्नी सु-मध्यमा ।[12]
३६] कथम् उत्पल-पत्राऽक्षी रावणस्य वशाऽनु-गा ॥२३॥ [१६
किं[14] नष्टा वा प्र-नष्टा वा मृता वा जनकाऽऽत्म-जा ।
३७] रामस्य प्रिय-भार्यस्य न नि-वेदयितुं क्षमम् ॥२४॥ [१७

---

१. रा च घ-निहता । म-निहिता । २. रा-कच्चिल्लालपते । म-कच्चिल्लिलपते । प्र ल१-कच्चिल्लाप्यते । ३. रा घ प्र ल१ ल२ अ-दीना । ४ राम प्र ल१ ल२ आ-शारिका ५ फ अ-नास्ति ॥

६ आ-शुभ्र । ७ आ-चिन्तय-द्रूपे । फ-चिन्तयचास्यं । प्र ल१ ल२-चिंतयत्यास्य । अ-ध्यायती वक्त्रं । ८ फ-लेलेक । अ-सा दैन्य । ९ आ-कायिता गता । रा च घ म प्र ल१ ल२-नूनमागता । १०. रा च घ म प्र ल१ ल२ अ-नास्ति । अत. परमधिक पाठ —

अ फ—अथवा निहता मन्ये रावणस्य निवेशने ।
फ—विचेष्टमाना पतिता समुद्रे जानकी ध्रुवम् † ।
फ—कच्चिल्लालप्यते नित्यं‡ पञ्जरस्थेव सारिका ।

११ च-त्रुटित. पाठ. । १२ रा घ म प्र ल१ ल२-नास्ति । १३ रा-कथमुत्फुल्लप० । ल१-अथवोत्पल०॥ १४ फ रा च घ म प्र ल१ ल२ अ-विनष्टा । १५ आ फ अ च म ल१ ल२-प्रणष्टा । १६ आ-क्षमः । फ-क्षणम् । अ-क्षमाम् ॥

---

† अ—जनकात्मजा ।
‡ अ—नूनं ।

नि-वेद्यमाने दोषः स्याद् दोषः स्याद् अनिवेदने ।
३८] कथं नु खलु कर्तव्यं व्य्-असनं खल्व् इदं महत् ॥२५॥ [१८
अस्मिन्न् एवं गते कार्ये प्राप्त-कालं क्षमं च किम् ।
N] भवेदिति मतिं भूयो हनुमानप्रवि(ऽव्य)चारयन्(ऽत्) ॥२६॥ [१९
यदि सीताम् अ-दृष्ट्वाऽहं वानरेन्द्र-पुरीम् इतः ।
३९] गमिष्यामि ततः को मे पुरुषाऽर्थो भविष्यति ॥२७॥ [२०
ममेदं लंघनं व्यर्थं सागरस्य महाऽऽत्मनः ।
N] प्र-वेशश् चैव लंकायां राक्षसानां च दर्शनम् ॥२८॥ [२१
किं मां वक्ष्यति सुग्रीवो हरयो वा समा-गताः ।
४०] किष्किंधां समनु-प्राप्तौ किं '' तौ '' नर-वराऽऽत्म-जौ ॥२९॥ [२२
गत्वा तु यदि काकुत्स्थं वक्ष्यामि परम् अप्रियम् ।
४१] न सीताम् अधि-गच्छामि ततस् त्यक्ष्यति जीवितम् ॥३०॥ [२३
परुषं दारुणं क्रूरं तीक्ष्णम् इन्द्रिय-तापनम् ।
४२] सीता-निमित्तं दुर्-वाच्यं श्रुत्वा स न भविष्यति ॥३१॥ [२४
तं तु कृच्छ्र-गतं दृष्ट्वा पंचत्व-गत-मानसम् ।
४३] भृशाऽनु-रक्तो मेधावी न भविष्यति लक्ष्मणः ॥३२॥ [२५

---

१. रा म-निवेद्यमानो । प्र ल१-निवेद्यमाना । २. रा म प्र म ल१ ल२-तु । ३. अ-द्विविधं ॥

४. म ल१-तस्मिन्नेवं । अ-अस्मिन्नेवा॰ । ५ फ रा-विधे । ६. म-कार्यं । ७. च य प्र ल१ अ-मतिर् ॥

८. आ-शीताम॰ । ९. रा-तदा ।

१०. फ-यदिदं ॥

११. फ रा च य म प्र ल१ ल२ अ-तौ वा ॥

१२. आ-परमां प्रियां । १३. आ-शीता॰ । अ-सीतामवगच्छामि । १४. य म प्र ल१ ल२-ततस्त्यक्ष्यामि ॥

१५. आ-शीता॰ । अ-सीतानि-मित्ते । १६. च य म प ल१ ल२ अ-दुर्वाक्यं । १७. फ प्र ल१ ल२-न स । अ-॰सौ न ।

१८. आ य ल२-तत्तु । अ-किंतु । १९. आ-पञ्चत्वं गत॰ । २०. आ-ऽप्यसमगो न भविष्यति ॥

विनष्टौ भ्रातरौ श्रुत्वा भरतोऽपि मरिष्यति ।
N] भ्रातॄन् वि-नष्टान् ज्ञात्वा तु शत्रुघ्नोऽपि न जीवति ॥३३॥ [२६
मृतान् पुत्रान् सम्-ईक्ष्याऽथ ता मरिष्यन्ति मातरः ।
N] कौशल्या च सु-मित्रा च कैकेयी च न संशयः ॥३४॥ [२७
४६पू] हितज्ञ् च सत्य-संधश् च सुग्रीवः प्लवगाऽधिपः ।
४६पू] रामं कृच्छ्र-गतं दृष्ट्वा राजा त्यक्ष्यति जीवितम् ॥३५॥ [२८
दुर्-मना व्यथिता दीना निर्-आनन्दा तपस्विनी ।
४७] पीडिता भर्तृ-शोकेन रुमा त्यक्ष्यति जीवितम् ॥३६॥ [२९
वालि-जेन च दुःखेन पीडिता शोक-कर्षिता ।
४८] पंचत्व-गमने राज्ञस् तारोऽपि न भविष्यति ॥३७॥ [३०
माता-पित्रोर् वि-नाशेन सुग्रीव-व्यसनेन च ।
४९] कुमारोऽप्य् अंगदः कस्माद् धारयिष्यति जीवितम् ॥३८॥ [३१
भर्तृ-जेन तु दुःखेन ह्य् अभि-भूता वनौकसः ।
N] शिरांस्य् अभि-हनिष्यन्ति तलैर् मुष्टिभिर् एव च ॥३९॥ [३२

---

१. प्र-विनष्टं भ्रातरं । २. आ य रा म-दृष्ट्वा । ३. घ ल$_1$ ल$_2$-भरतो न । ४. आ घ प्र ल$_1$-ल$_2$-भविष्यति । म-मुरिष्यति । ५. फ-श्रुत्वा तु । घ प्र ल$_1$ ल$_2$-विज्ञाय । अ-श्रुत्वा सा । ६. रा च घ म प्र ल$_1$ ल$_2$ अ-मरिष्यति ॥

७. रा घ म ल$_2$-कौसल्या । ८. आ-कैकयी । म-केकयी ॥

९. अ-कृतज्ञः स समर्थश्च । १० रा म-प्लवगर्षभः । ११. फ-नूनं त्यक्ष्यति । च प्र ल$_1$ ल$_2$-राजा त्यजति । रा म-श्वर्क्ष त्यजति ॥

१२. म-व्यथिता । १३ अ-निरालम्बा । १४. फ-वाता । १५. रा च घ म प्र ल$_1$-नास्ति ॥

१६. आ फ रा च घ-तु । १७. ल$_2$-परिभूता वनौकसः । १८. रा म-तारा तु ॥

१९. अ-कुमारश्चांगदः । २०. फ-तस्माद्धारयिष्यति । अ-श्रीमाश्च धारयति ॥

२१. अ-च । २२. फ-शोकेन । २३. फ-ह्यभिभूता । रा च घ म प्र ल$_1$ ल$_2$ अ-पीडिता । २४. रा म-शिरांसि निहनिष्यंति । घ-शिरांसि च हनिष्यन्ति । च प्र-शिरांसि च हनिष्यंति । २५. ल$_2$-तलैर्मुष्टिभिरेव ॥

सांत्वेनाऽनुप्र-दानेन मानेन च यशस्विना ।
९०] लालिताः कपि-मुख्येन प्राणांस् त्यक्ष्यन्ति वानराः ॥४०॥[३३
न वनेषु न शैलेषु नाऽपि रोधस्सु वानराः ।
९१] क्रीडाम् अनु-भविष्यन्ति समेत्य कपि-कुञ्जरैः ॥४१॥ [३४
स-पुत्र-दाराः साऽमात्या भर्तृ-व्यसन-पीडिताः ।
९२] शैलाऽग्रेभ्यः पतिष्यन्ति समेत्य हरि-यूथ-पाः ॥४२॥ [३५
विषस्य भक्षणं वाऽपि प्र-वेशं ज्वलनस्य वा ।
N] उप-वासम् अथो शस्त्रं प्र-करिष्यन्ति वानराः ॥४३॥ [३६
घोरम् आ-रोदनं मन्ये गते मयि भविष्यति ।
९३] इक्ष्वाकु-कुल-नाशस्य हरीणां भृशम् एव च ॥४४॥ [३७
सोऽहं नैव गमिष्यामि किष्किन्धां नगरीं मति ।
९४] न हि शक्ष्याम्य् अहं द्रष्टुं सु-ग्रीवं मैथिलीं विना ॥४५॥ [३८
मय्य् अगच्छति वैदेही धर्माऽऽत्मानौ महा-रथौ ।
N] आशया तौ धरिष्येते वानराश् च तरस्विनः ॥४६॥[21] [३९

१. फ-सांत्वे० । रा घ म प्र ल$_1$ ल$_2$ अ-सांत्वेनाथ० । च-सांत्वेनार्थ० । २. फ-दानेन । ३. रा च घ म प्र ल$_1$,ल$_2$ अ-कपिराजेन ॥

४. ल-वनेषु वनशैलेषु । अ-न वनेषु न गिरिषु । ५. घ प्र ल$_1$ ल$_2$-रोदः सु ॥

६. फ घ प्र ल$_1$ ल$_2$ अ-विषमुद्बंधनं । ७. फ-चापि । ८. रा घ म प्र ल$_1$, ल$_2$-ज्वलनेपि । ९. फ रा च घ म प्र ल$_1$, ल$_2$-च ॥

१०. ल$_1$-घोरमायोधनं । ११. म-गतेद् । १२. रा च म प्र ल$_1$ ल$_2$-०कुक्षनाशायं । अ-०कुक्षनाशाय । १३. फ-भृशं नाशो । १४. फ-वनौकसां । अ-भृशनाशनः । रा च घ म प्र ल$_1$-च भृशं तथा । ल$_2$-च भृशं तदा ॥

१५. फ रा च घ म प्र ल$_1$, ल$_2$ अ-नगरीमितः । १६. फ-च । १७. रा प्र ल$_1$, ल$_2$ अ-शक्याम्यहं ॥

१८ फ-आगते मयि । च म-मयि गच्छति । १९. फ-तद्रथौ । च अ-चेहस्थे । २०. च-तौ धारिष्येते । मा-धारयिष्येते । २१. रा घ म प्र ल$_1$, ल$_2$-त्वपि ॥

हस्ताऽद्दो वा मुखाऽद्दो वा नियतो वृक्ष-मूलिकः[1] ।
N] वानप्रस्थो भविष्यामि ह्य् अदृष्ट्वा[2] कमलेक्षणाम्[3] ॥४७॥ [४०
तस्य बुद्धिर् इयं जाता निपुणस्य विपश्चितः ।
N] राम-संसर्ग-निर्वृत्तौ[4] धर्मिष्ठौ[5] धर्म-संचितौ[6] ॥४८॥ [N
सागराऽनूप-जे[7] देशे बहु-मूल-फलोदके[8] ।
९५] चितां कृत्वा प्रवेक्ष्यामि[9] समिद्धम् अरणी-सुतम् ॥४९॥[10] [४१

१ रा—वृक्षमौलिकः अ—वृक्ष॰मूलकः । २. अ—अदृष्ट्वा । ३. ङ₁ कमलेक्षणः । अ—जनकात्मजाम् ॥ ४ रा—॰र्गनिरतो । ॰ म प्र—॰निर्वृत्तौ । ङ₁—॰र्गनिवृत्तो । ५. रा व म प्र ङ₁ ङ₂—धर्मिष्ठो । ६. रा प म प्र ङ₁ ङ₂—धर्मसंश्रयः ॥

७. आ—॰राम्बपर्यन्ते॰। रा प च व म प्र ङ₁ ङ₂—॰राम्बुजले । अ—सागरो रूपदेशेन । ८. अ—भक्ष-मूलफलोपगे । ९. फ—समिद्वारणा-सुवं । ङ₁—संसिद्धम॰ । अ—न चेत्प-श्यामि मैथिलीम् ।
१०. अतः परमधिकः पाठः—

रा च व म प्र ङ₁ ङ₂ अ—उपविष्टस्य वा क्षिप्रमिन्द्रियाण्युपरंधतः† ।
फ रा च व म प्र ङ₁ ङ₂ अ—शरीरं भक्षयिष्यन्ति श्वापदाः वायसैः सह॥
रा च व म प्र ङ₁ ङ₂—इदमप्यृषिभिर्दृष्टं निर्याणमिति मे मतिः।
अपः सम्यक् प्रवेक्ष्यामि तामदृष्ट्वासितेक्षणाम्‡ ॥
रा च व म प्र ङ₂—तावत्पश्यामि† वैदेहीं मैथिलीं जनकात्मजाम् ।
रा च व म प्र ङ₂ अ—मज्ञातरूपां‡ सुभगां कीर्त्यमानां† यशस्विनीम् ।

† फ—क्षिप्रमिंगितं साधयिष्यतः ।
‡ फ अ—अथ सम्यक् प्रवेक्ष्यामि न चेत्पश्यामि मैथिलीम् ।
‡ ङ₂—रूपसुभगां ।
† फ अ ङ₂—कीर्तनीयां ।

N] प्र-नष्टां चिर-रात्राय सीताम् अहम् अ-दृष्टवान् । [४४३
तापसो वा भविष्यामि नियतो वृक्ष-मूलिकः ॥५०॥[4]
५८] नाऽहं प्रति-गमिष्यामि ताम् अ-दृष्ट्वाऽसितेक्षणाम् । [४५
पर्णाऽदो वा फलाऽदो वा यदि वा वृक्ष-मूलिकः ।
N] वने धर्मं चरिष्यामि ताम् अ-दृष्ट्वा यशस्विनीम् ॥५१॥[5][N
ततस् ततो निर्-आशस्य सीताया दर्शनं प्रति ।
N] लंघनं मे भवेद् व्य्-अर्थम् उदधेः शत-योजनम् ॥५२॥ [N
न पुनः प्रति-गच्छामि नि-वसामि वनेष्व् इह ।
N] कायम् आ-दीपयिष्यामि प्र-विशाम्य् अथ-वा जलम् ॥५३॥[13][N
यदि वा प्रति-गच्छामि सीताम् अनाधि-गम्य ताम् ।[15]
N] अंगदैः संहितैः सर्वैर् वानरैर् न भविष्यति ॥५४॥ [४६

---

१. म प्र ल$_1$ ल$_2$ अ-प्रणष्टां । २. आ फ-मम सीतामपश्यतः । ३. अ-वै । ४. रा म प्र ल$_1$ ल$_2$-तामदृष्ट्वा यशस्विनीम् । ५. च थ-नास्ति ॥

६. रा च थ म प्र ल$_1$ ल$_2$-नास्ति ॥

७ आ च अ-ततस्ताय । ८. फ-लंघनाच्चामयर्षिता धृंथति । आ-ल्पनादभयर्षिता धृंथति । अ-लंघने चामयर्षिना धृथेनि ॥

९. रा थ म प्र ल$_1$ ल$_2$ अ-पुनश्चिव् । च-पुनश्चेद् । १०. म प्र-नास्ति पादः । रा-०सामि वनेष्वहम् । ११. आ-काममादीपयामि स्विद् । रा-कथमादीप० । १२. फ रा च थ म प्र ल$_1$ ल$_2$-प्रविशामि स्विदर्णवम् । अ-संविशे क्वचिदर्णवे । १३. थ म-नास्ति ॥

१४. ल$_2$-न । १५. थ म-प्रथमः पादो नास्ति । अतः परमधिकः पाठः—

थ प्र ल$_1$ ल$_2$—ध्यानशोकपरीतात्मा चिन्तयामास वानरः ।

१६. अ-सोमदः संहितैः । ल$_1$- अङ्गदः प्रहितैः ॥

विनाशे सु-महान् दोषो जीवन् प्राऽऽप्नोति यच् छुभम् ।[3]
N] तस्मात् प्राणा हि रक्ष्या वै[4] ध्रुवो जीवित-संगमः॥५५॥[5] [४७
एवं बहु-विधं दुःखं मनसा धारयन्[6] मुहुः ।
N] नाऽध्यगच्छत् तदा पारं शोकस्य कपि-कुञ्जरः ॥५६॥ [४८
रावणं तु हनिष्यामि[7] दश-ग्रीवं महा-बलम्[8] ।
N] कामम् अस्तु[9] हृता सीता प्रेत्यं[10] कीर्तिर् भविष्यति ॥५७॥ [४९
अथ चैनं[11] समा-क्षिप्य[12] उपर्य् उपरि[13] सागरम् ।
N] रामायोप-हरिष्यामि[14] पशुं पशु-पतेर् इव[15] ॥५८॥ [५०
इति चिन्तां समा-पन्नः[16] सीताम् अनधि-गम्यवान्[17] ।
५१] ध्यान-शोक-परीताऽऽत्मा चिंतयामास वानरः ॥५९॥[18] [५१
यावद्[19] सीतां[19] न पश्यामि राम-पत्नीं यशस्विनीम् ।[20]
N] तावद्[21] एतां पुरीं लंकां वि-चिनोमि पुनः पुनः॥६०॥ [५२
संपाति-वचनाच्[22] चाऽपि रामं यद्य् आनयाम्य्[23] अहम् ।

---

१. फ-निराशेस्तु महान् । २. आ-प्राप्नोमि । ३. रा च म प्र ल१ ल२-नास्ति । ४. फ-तस्मात् प्राणान् हनिष्यामि । च-तस्मात्प्राणामिर॰ ५. रा च म प्र ल१ ल२-नास्ति ॥

६. फ-धारयन्बहु । रा च म प्र ल१ ल२-चिन्तयन्मुहुः । अ-धारयन्महान् ॥

७. फ रा च थ म प्र ल१ ल२ अ-वधिष्यामि । ८. आ-महाबलः । ९. ल१-कामवस्तु । १०. अ-पुष्पा ॥

११. रा च थ म प्र ल१ ल२-चैनं । १२. अ-समाश्रित्य । १३. रा च थ म प्र ल१ अ-ह्युपर्युपरि । १४. प्र-रामस्योप॰ । १५. फ-रामपत्नीं यशस्विनीम् । ल१-पशुं पशुपतिरिव ॥

१६. ल१-चिंतासमापन्नः । १७. रा थ म प्र ल१ ल२-॰नाधिगम्य तान् । १८. फ-नास्ति ॥

१९. अ-यावत्र तां । २०. फ-नास्ति । २१. अ-तावदेतद् ॥

२२. फ अ-॰नाच्चाहं । रा च थ म प्र ल१ ल२-॰नाच्चेह । २३. आ अ-यदि नयाम्यहं । रा च थ म प्र ल१ ल२-यास्यामि नाप्यहं ॥

N] अ-पश्यन् राघवो भार्यां निर्-दहेत सर्व-वानरान् ॥६१॥ [५३

इहैव नि-यताऽऽहारो वत्स्यामि नि-यतेन्द्रियः ।

N] मत्-कृते न वि-नश्येयुः सर्वे ते नर-वानराः ॥६२॥ [५४

सं०स०१६] अशोक-वनिका चाऽपि महती हि महा-द्रुमा ।

४] इमाम् अभि-गमिष्यामि न हीयं वि-चिता मया ॥६३॥ [५५

वसून् रुद्रांस् तथाऽऽदित्यान् अश्विनौ मरुतोऽपि च ।

N] नमस्-कृत्वा गमिष्यामि रक्षसां शोक-वर्धनः ॥६४॥ [५६

जित्वा तु राक्षसान् देवीम् इक्ष्वाकु-कुल-नन्दिनीम् ।

N] सम्-प्रदास्यामि रामाय सिद्धिम् इव मनस्विने ॥६५॥ [५७

स मुहूर्तम् इव ध्यात्वा चिन्तया व्यथितेन्द्रियः ।

N] उद्-अतिष्ठन् महा-बाहुर् हनुमान् मारुताऽऽत्मजः ॥६६॥ [५८

नमोऽस्तु रामाय स-लक्ष्मणाय

देव्यै च तस्यै जनकाऽऽत्म-जायै ।

नमोऽस्तु रुद्रेन्द्र-यमाऽनिलेभ्यो

N] नमोऽस्तु चन्द्राऽग्नि-मरुद्-गणेभ्यः ॥६७॥ [५९

---

१ ङ२—निहता॰ । म—प्राय-मासिष्ये । २. फ—विजितेन्द्रियः । ३. म—हि । ४. रा च घ म प्र ङ१ ङ२—न मत्कृते विनश्येयुर्वानराश्च तथा नराः ॥

५. रा घ म प्र ङ१ ङ२—॰निकाभे च । ६. फ रा च घ म प्र ङ१ ङ२—महतीयं । म—महती मा । ७. फ—॰मिगमिष्यामि । ८. म—नास्ति ॥

९. फ—वमन्तु मुनीन्द्रांस्तथा दिक्प । १०. रा घ प्र ङ१ ङ२—मरुतस्तथा । ११. म—नास्ति । १२. ङ१—न मत्कृते विनश्येयुः । म—नास्ति पादः ॥

१३. फ—त्विन्वाहं । रा च घ म प्र ङ१ ङ२—त्विन्वा हि । १४. रा च म प्र ङ१—रामाय संप्रदास्यामि । १५. रा च म प्र ङ१—यथा सिद्धिं तपस्विने । म—मायामिह तपस्विनीम् ॥

१६. मा—मुहूर्तमिति । फ म—मुहूर्तमपि । १७. फ म—उपतिष्ठत् । म—उत्तस्थिवान् ॥

१८. रा—चन्द्रार्कम॰ ॥

स तेभ्यस् तु नमस्-कृत्य सु-ग्रीवाय च मारुतिः ।
N] दिशः सर्वाः समा-लोक्य अशोक-वनिकां प्रति ॥६८॥ [६०
स गत्वा मनसा पूर्वम् अशोक-वनिकां शुभाम् ।
N] उत्तरं चिन्तयामास वानरो मारुताऽऽत्म-जः ॥६९॥ [६१
ध्रुवं तु रक्षो-बहुला भविष्यति जनाऽऽकुला ।
N] अशोक-वनिका दिव्या सर्व-संस्कार-शोभिता ॥७०॥ [६२
रक्षिणश् चाऽत्र वि-हिता नूनं रक्षन्ति पाद-पान् ।
N] भगवान् अपि सर्वाऽऽत्मा नाऽतिक्षोभं प्र-वात्य् असौ ॥७१॥ [६३
सं-क्षिप्तोऽयं मयाऽऽत्मा च रामाऽर्थे रावणस्य च ।
N] सिद्धिं मे सं-वि-धास्यन्ति देवा ऋषि-गणास् त्व् इह ॥७२॥ [६४
ब्रह्मा स्वयं-भूर् भगवान् देवाश् चैव दिशन्तु मे ।
N] सिद्धिम् अग्निश् च वायुश् च पुरु-हूतश् च वज्र-भृत् ।७३॥[६५
वरुणः पाश-हस्तश् च वासुं देवश् च चक्र-भृत्[11] । [६६पू

---

१. फ रा च व म प्र ल$_1$ ल$_2$ अ—स तेभ्यश्च । ल$_2$—सम्येभ्यश्च । २. रा म प्र ल$_1$—ययौ ॥

३. फ म—पूर्वामशोक० । आ—पूर्वमशोक० । ४. य प्र—भर्तारं ॥

५. रा ल$_2$—इयं च । च—एवं त्वा । य—एवं तु । अ—ध्रुवं त्वा । ६. रा च य म प्र ल$_2$—रक्षिबहुला । ल$_1$ अ—रक्षबहुला । ७. च—भविष्यति । ८. अ—वरांगणा । ९. रा च य प्र ल$_1$ ल$_2$—सर्वा । १०. रा—दिव्या संस्का० । च य म प्र ल$_2$—दिव्यसंस्का० । ल$_1$—कथं सीताधिगम्यते ॥

११. ल$_1$—० वाश्च । १२. फ ल$_1$ ल$_2$—निहिता । १३. रा य म प्र ल$_1$ ल$_2$—घोरा । १४. रा च प्र ल$_1$ ल$_2$—मातिक्षोभः ॥

१५. आ—महात्मयं तु । फ—ममाशातु । अ—महात्मा तु । १६. रा म प्र ल$_1$ ल$_2$—राघवस्य । अ—वानरस्य । १७. अ—संप्रदास्यन्ति । १८. फ रा च य म प्र ल$_1$ ल$_2$—देवा सर्षिगणा० । अ—सदेवर्षिगणास्त्विह ॥

१९. रा—वरुणश्च ।२०. आ ल$_1$—सोमादित्यौ तथैव च । २१. आ ल$_1$—नास्ति ॥

N] शङ्करः शूल-हस्तश् च सोमाऽऽदित्यौ तथैव च ॥७४॥ [N

अश्विनौ च महाऽऽत्मानौ मरुतः सर्व एव च । [६६३

सिद्धिं सर्वाणि भूतानि भूतानां चैव यः प्र-भुः ।

N] दास्यन्ति मम ये चाऽन्येऽदृष्टाः पथि गणेश्वराः ॥७५॥ [६७

तद् उन्न-नसं पाण्डुर-दन्तम् अव्रणं

शुचि-स्मितं पद्म-पलाश-लोचनम् ।

द्रक्ष्यामि सीता-वदनं कदा न्व् अहं

N] प्रसन्न-ताराऽधिप-तुल्य-दर्शनम् ॥७६॥ [६८

क्षुद्रेण पापेन नृशंस-कर्मणा

सु-दारुणाऽलंकृत-वेष-धारिणा ।

बलेऽभि-भूता ह्य् अ-चला तपस्विनी

N] कथं नु मे[16] दृष्टि-पथेऽद्य सा भवेत् ॥७७॥ [६९

इत्यार्षे रामायणे सुन्दर-काण्डे हनुमच्-चिन्ता-

नाम अष्टमः सर्गः ॥८॥

---

१. आ ल१–नास्ति ॥ २. फ–वौ । ३. ल१–सिद्धिः । ४. रा च य म प्र ल१, ल२–दास्यन्तु । ५. फ–प्यदृष्टा । रा च य म प्र ल१, ल२–अदृष्टा । अ–ह्यदृष्टा । ६. फ रा च य म प्र ल१, ल२ अ–पथिगोचराः ॥ ७. फ रा च प्र ल२ अ–वहु-हसद् । ल१–उपहसद् । ८. आ–सुचिस्मि• । फ–शुभस्मि• । ९. आ फ रा अ–पद्मपलाश• । १०. आ अ–नीशव• । ११. आ फ च–त्वहं । अ–ह्यहं । १२. अ–•ताराधिपतु• ॥ १३. आ–सुचारुधालङ्कृतवेशधा• । रा च य म प्र ल१, ल२–•णालंकृतवेशधा• । अ–•लंकृतवेगधारि• । १४. आ–बला-भिभूता ह्य• । अ–•भिभूताविदना-स्विनी सा । आ–तपस्विनी । च य म प्र ल ल२ – •पतास्विनी । १५ च ल२ अ–तु । १६. रा च य म प्र ल१, ल२–सा । १७. रा च य म प्र ल१, ल२–मे ॥

१८. आ–भार्षेय । १९. रा–श्रीरामायणे । २०. फ रा–एक-पुराचिन्ता । च य म प्र ल१, ल२–एकपुरुषादेन्वतं । अ–एव पुर-खिन्नतं ॥

स मुहूर्तम् इव ध्यात्वा मनसा चाऽधि-गम्य ताम् ।
N] अव-प्लुतो महा-तेजाः प्राकारं तस्य वेश्मनः ॥१॥[5] [१
स तु संहृष्ट-सर्वाऽङ्गः प्राकार-स्थो महा-कपिः ।
१] पुष्पिताऽग्रान् वसंताऽग्रे ददर्श वि-विधान् द्रुमान्॥२॥ [२
२पू] शालान् अशोकान् भव्यांश् च चंपकान् मत्त-कोकिलान् ।
N] उद्दालकान् नाग-वृक्षांश् चूतान् कपि-मुखान् अपि॥३॥ [३
अथ धैर्यम् अव-स्थाप्य प्र-मृज्याऽश्रूणि वीर्यवान् । [N
५] व्या-मुक्त इव नाराचः पुप्लुवे वृक्ष-वाटिकाम् ॥४॥[16] [४उ
६पू] स गत्वा वेगवान् वेगाद् हनुमान् मारुताऽऽत्म-जः ।[18]
N] ददर्शाऽशोक-वनिकां पुष्पिताऽशोक-शोभिताम् ॥५॥ [N
६उ] अभ्राऽऽभ्रे-वण-संच्छन्नां लता-शत-संभावृताम् । [४पू
अशोक-वनिकां स्फीतां प्र-विवेश महा-कपिः ॥६॥[22] [N

---

१. म–सु । २. आ–मुहूर्तमपि । ३. दा म–अवप्लुत्य । ङ$_1$–अनुप्लुत्य । ४. फ–सकामान्तस्य । दा च म अ–प्राकारे तस्य । ५. य ङ$_1$, ङ$_2$ प्र–चतुर्थः पादो नास्ति ॥

६ फ–स तु सर्वाङ्गसंहृष्टः । य ङ$_1$, ङ$_2$ प्र–नास्ति । ७. फ–वसंतेव । दा च व म प्र ङ$_1$,ङ$_2$ अ–वसन्ते च । ८. अ–महतो ॥

९ दा य ङ$_1$, ङ$_2$ प्र म अ–मालान् । १०. दा य ङ$_1$, ङ$_2$ म–चम्पकान । ११ दा ङ$_1$ य ङ$_2$ ङ$_1$, ङ$_2$–कपिमुखाननान् । अ–०खाल्कपिः ॥

१२. फ अ–वेगवान् । १३. अ–ज्यामुक्त । १४. च–तीरांशु । १५. च–विवुधे । १६. य ङ$_1$, ङ$_2$ म–नास्ति ॥

१७. च–वेगा हनुमान् । १८. दा य ङ$_1$, ङ$_2$ प्र–नास्ति ॥

१९. फ अ–०घ्रवनसं० । च–अथ प्रणवसं० । २०. आ च य ङ$_1$, ङ$_2$–लताशोकस० । म–लतावृक्षस० । २१ आ–सीतां । २२. दा–नास्ति ॥

७] स प्र-विश्य वि-चित्रां तां विहगैर् अभि-नादिताम् ।[1]
८पू] राजतैः काञ्चनैश् चाऽपि पाद-पैः सर्वतो वृताम् ॥७॥[2][५
९पू] अ-चिरोदित-सूर्याऽऽभां ददर्श हनुमान् कपिः ।[६उ
N] मनो-हरां दृष्टि-हरां सौगंध्य-घ्राण-हारिणीम् ॥८॥ [N
महतो प्रांऽशुना चैव सुचित्र-विहितेन च ।
N] प्राकारेणांऽबुदाऽऽभेन सौधेन कृत-मेखलाम् ॥९॥[6] [N
गदा-पाणिभिर् एकाग्रैर् आसीनैर् द्वारि राक्षसैः ।
N] गुप्त-द्वारां महा-द्वाराम् अना-धृष्यां सुरैर् अपि॥१०॥ [N
नील-वर्णैर् द्रुम-शतैर् मेघ-वृन्दैर् इवाऽऽवृताम् ।
N] स्वे-बलं ततं समा-श्रित्य हनुमान् प्र-विवेश ह ॥११॥[N
N] विहगैर् मृग-संघैश् च वि-चित्रां चित्र-काननाम् ।[६पू
१०पू]वृतां नाना-विधैर् वृक्षैः पुष्पोपग-फलोपगैः ।

---

१. फ अ–॰गैरशुना॰ । ल$_1$ प्र म–॰गैरविना॰ । ल$_2$–॰गैरलिना॰ । २. रा अ–नास्ति । ३ आ रा च घ म प्र ल$_1$ ल$_2$ अ–नास्ति ।

अतः परमधिकः पाठः —

फ—श्रोत्रहारिरुतैः सर्वैर्† विहगैः संप्रनादिताम् ॥

४. प्र–संहतां । ५. आ फ–॰बुदेनेव । रा च घ ल$_1$ ल$_2$ म–॰बुदेनैव । ६. अ–नास्ति ॥

७. घ–द्वार॰ । ८. फ–गुप्तद्वारे । ९. फ–मिव द्वारा॰ ॥

१०. म–छील॰ । रा च व प्र ल$_1$ ल$_2$–॰र्णं हिमसितैर्म॰ । फ–॰र्द्रुमखण्डै॰ । अ फ–॰र्मेघवर्गैरिव॰ । ११. रा–सुबलं । १२. अ–स । १३. फ रा–समाश्रित्य । आ–समसत्य । १४. फ–च ॥

१५. फ–विहगै॰। रा म–विहगं॰मृगसिंहै॰ । च घ म ल$_1$ ल$_2$ प्र अ–विहगैर्मृगसिंहै॰। १६. आ रा च घ म प्र ल$_1$ ल$_2$–विचित्रैश्चि॰ । १७. फ–नानावृन्दै॰ । १८. ल$_1$ पुष्पपूग॰। अ–॰फलोपमैः ।

---

† अ–शब्दैः ।

९उ] कोकिलैर् भृंग-राजैश् च मत्तैर्[1] नित्यं नि-षेवितान् ॥१२॥ [७

१०उ] प्र-हृष्टम् उदिते[2] काले मृग-पक्षि-सुखाऽऽवहे[3] ।
मत्त-बर्हिण[4]-संघुष्टां नाना-द्विज-गणाऽऽयुताम् ॥१३॥ [८

११] मार्गमाणो[5] वराऽऽरोहां राज-पुत्रीम् अ-निन्दिताम् ।[6]
सुख-प्रसुप्तान्[7] विहगान् बोधयामास[8] वानरः ॥१४॥ [९

१२] उत्पतद्भिर् द्विज-गणैः[9] पक्षैः शाखा (:) समा-हृताः[10] ।
अनेक-वर्णा मुमुचुः पुष्प-वृष्टिं समंततः ॥१५॥ [१०

१३] तत्रोऽव-कीर्णः[11] शुशुभे हनुमान्[12] मारुताऽऽत्म-जः ।
अशोक-वनिका-मध्ये यथा पुष्प मयो गिरिः ॥१६॥ [११

१४] दिशः सर्वा वि-धावन्तं[13] वृक्ष-खण्ड[14]-गतं कपिम् ।
दृष्ट्वा सर्वाणि[15] भूतानि वसंतम् इव मेनिरे[16] ॥१७॥ [१२

१५] वृक्षेभ्यः पतितैः पुष्पैर् अव-कीर्णा पृथग्-विधैः ।
रराज वसु-धा तत्र प्रमदेव वि-भूषिता[17] ॥१८॥ [१३

१६] तरस्विना[18] ते तरवस् तरसा विप्र-कंपिताः ।
पुष्प-वृष्टिं वि-चित्रां तु ससृजुः कपिनाऽऽहताः ॥१९॥ [१४

---

१. फ–मत्तैर्भि० ।

२. फ–०प्रमुदिता । ३. फ–०पक्षिमहावहे । रा म अ–०पक्षि-समाकुले । ल$_1$–०पक्षिसुखावहैः ।
४. फ–मत्तबर्हेण ॥

५ ल$_2$–मार्गमाणो । ६. अ–मार्गमाणः स वैदेहीं राजपुत्रीं यशस्विनीम् । ७. ल$_2$–०प्रसुप्तवि० ।
८. फ–वाचयामास ॥

९. रा य म ल$_1$ ल$_2$–उत्पतंतो द्विजगणाः । १०. रा च य प्र ल$_1$ ल$_2$–०समाहृताः । म–समाहितैः ।

११. रा प्र अ–तत्रावकीर्णः स । म–तत्रावकीर्णः स्म । १२. फ रा च य ल$_1$ ल$_2$–हनूमा० ॥

१३. रा य म प्र ल$_1$ ल$_2$–व्यधा० । १४. य ल$_1$ ल$_2$ प्र म–वृक्षषण्ड० । १५. अ–भूतानि सर्वाणि । १६. रा ल$_2$ प्र म–वानिदाः । अ–मन्दिरे ॥

१७. ल$_1$–विहपिता ॥

१८. रा च–तरस्विनस्ते त० । अ–तरवस्तत्र बहवः ॥

१७] निर्-धूत-पत्र-शिखराः शीर्ण-पर्ण-फला द्रुमाः ।
विक्षिप्त-वस्त्राऽऽभरणा धूर्ता इव परा-जिताः ॥२०॥ [१५

१८] हनूमता वेग-वता धूनितास् ते नगोत्तमाः ।
पुष्प-पर्ण-फलान्य् आशु मुमुचुः पुष्प-शालिनः ॥२१॥ [१६

१९] विहंग-संघैर् हीनास् ते स्कंध-मात्राऽऽश्रयाः स्थिताः ।

२० उ] बभूवुर् जंङ्गमाः सर्वे मारुतेन विनिर्-धुताः ॥२२॥ [१७
बभूवुर् वेश्या-युवतिर् यथा मृदित-वर्णकाः (?का) ।

२१] नितान्त-शुभ-दन्तौष्ठी नखैर् दन्तैश् च वि-क्षता ॥२३॥ [१८
तथा लांगूल-हस्ताभ्यां चरणाभ्यां समा-हता ।

२२] बभूवाऽशोक-वनिका प्रभग्न-वन-पादपा ॥२४॥ [१९
महा-लतानां दामानि वि-हरंस् तरसा कपिः ।

N] यथा प्रावृषि विंध्यस्य मेघ-जालानि मारुतः ॥२५॥ [२०

---

१. ल$_{२}$ अ—॰तपत्राः । २. ल$_{२}$—॰र्णहताः । ल$_{२}$ प्र अ—॰र्णफलद्रु॰ ॥

३. ल$_{१}$ प्र—हनुम॰ । ४. ल$_{२}$—निधूतास्ते । अ—चूर्णितास्ते । ५. रा म—महाद्रुमाः । ल$_{२}$—नगद्रुमाः । ६. आ—पुष्पवर्ण॰ । च य म ल$_{१}$ ल$_{२}$—पुष्पपत्रफ॰ । अ—पर्णपुष्पफ॰ । ७. य ल$_{१}$ ल$_{२}$—पुष्पशालिनः ॥

८. आ च य म प्र ल$_{१}$ ल$_{२}$—॰पक्षिदेहाः॰ । रा—॰पक्षैर्विहीना॰ । अ—॰ज्ञानां वर्जहीनास्ते । ९. आ च—॰पुरगमाः । य ल$_{१}$ ल$_{२}$ प्र—चपुरंगमाः । अ—॰पुरतरमा । १०. फ—मारुतेनैव नि॰ । ल$_{१}$—॰वेनापि नि॰ । अ—॰तेनैव निर्द्रुताः ॥

११. आ फ रा य म प्र ल$_{१}$ ल$_{२}$—बभूव । अ—यथैव । १२. फ—युवती यथा । अ—युवती भवेत्॰ । १३. फ ल$_{२}$ अ—मृदितवर्णिका । १४. फ—॰भवर्णौष्ठी । ल$_{१}$—॰शुकद॰ । अ—॰भकर्णौष्ठी । रा च—॰भदंतौष्ठीः । १५. रा ल$_{१}$—॰विक्षिता । अ—॰दंतैरिव क्षता ॥

१६. फ रा—प्रभग्ना वन॰ ॥

१७. आ—महल्लतानां । १८. आ—विहरन् हनुमां । फ प्र—॰हरन्तुरसा । १९. रा च य म ल$_{१}$—॰प्रावृषि । ल$_{२}$—॰प्रावृषि ।

स तत्र मणि-भूमिं च राजतीं च मनो-रमाम् ।
२३] तथा काञ्चन-भूमिं चं वि-चरन् रुरुचे कपिः ॥२६॥ [२१
२४पू] वापीश् चं वि-विधाऽऽकाराः पूर्णाः परम-वारिणा ।
महार्हैर् मणि-सोपानैर् उप-पन्नाम् ततस्-ततः ॥२७॥ [२२
२५] मुक्ता-प्रवाल-सिकता-स्फटिकाऽन्तर-भूषिताः ।
काञ्चनैस् तरुभिश् चित्रैस् तीरजैर् उप-शोभिताः॥२८॥ [२३
२६] बुद्ध-पद्मोत्पल-वनाश् चक्रवाकोप-कूजिताः ।
दात्यूह-रुत-संघुष्टा हंस-सारस-नादिताः ॥२९॥ [२४
२७] दीर्घाभिर् भ्रम-युक्ताभिः शीताभिश् च समततः ।
N] अमृतोपम-तोयाभिः शिवाभिर् अभि-संस्कृताः ॥३०॥ [२५
लता-गृहैर् अव-तता लता-संतान-संवृताः ।
२८] लताऽवतानं-गहना करवीर-कृतोऽन्तराः ॥३१॥ [२६

---

१. ल$_{1}$–नास्ति। २. प्र–विहरन्। अ–प्रविशन् । ३. रा–रचके। प्र–विरुचे ॥

४. अ–नास्ति । ५. अ–॰वारिभिः । ६. फ–यथार्हैर्म॰ । रा च य म प्र ल$_{1}$ ल$_{2}$ अ–महार्हैमणि॰ । ७. आ–॰नैरुपपन्नैस्त॰ । रा–॰पन्नस्त॰ । अ–॰नै रूपवद्भिस्त॰ ॥

८. फ–॰लसंसिक्ता, स्फा॰ । रा य म प्र ल$_{1}$ ल$_{2}$–॰लवैडूर्यस्फा॰ । ९. अ–॰रभिरुत्भास्तीर॰ । ध–॰भिश्चित्रै नीराजैरु॰ ॥

१० रा–बहुपद्मोत्पलवतीश्च॰ । च य म प्र ल$_{1}$ ल$_{2}$–॰त्पलवतीश्च॰ । अ–शुद्धपद्मोत्पलयुताश्च॰ । ११. य ल$_{1}$ ल$_{2}$ प्र अ–॰कोपशोभिता ।

१२. रा य म प्र ल$_{1}$ ल$_{2}$–विहंगरुत॰॥

१३. ल$_{1}$–नदीभिर्भ्रममाणाभिः । रा च य ल$_{2}$ प्र म–दीर्घाभिर्भ्रममाणाभिः। अ–दीर्घिकाभिः सुयुक्ताभिः । १४. आ अ–शरभिश्च । १५. फ–नास्ति । १६. ल$_{2}$–॰भिरपि सं॰। म–शिरभिरपि। अ–त्रुटितः पाठः ॥

१७. फ–लताशतैरनुगता । रा च य म प्र ल$_{1}$ ल$_{2}$–॰गृहैरवनता । १८. फ–लतासंवृतसंवृताः। १९. अ–नास्ति । २०. फ–लतावनानुग॰ । रा य म प्र ल$_{1}$ ल$_{2}$–लतावितानग॰ । च–॰नगहने । अ–शाखाशतैरवततं । २१. रा–करवीरकृतान्तराः । अ–रक्तवान्तरं ॥

तत्राऽम्बु-धर-संकाशं प्रवृद्ध-शिखरं महत् ।
२९] विचित्र-कूटैश् च तथा सर्वतः परि-वारितम् ॥३२॥ [२७
३०पू] शिला-गृहैर् अव-ततं नाना वृक्षैः समा-वृतम् ।
N] ददर्श कपि-शार्दूलो रम्यं जगति पर्वतम् ॥३३॥ [२८
३०उ] ददर्श च नगात् तस्मात् नदीं प्र-पतितां भुवि ।
३१पू] अंकाद् इव समुत्-पत्य प्रियस्य कुपितां प्रियाम् ॥३४॥ [२९
N] शालैर् नि पतिताऽग्रैश् च पाद-पैर् उप-शोभितां ।
धार्यमाणाम् इव क्रुद्धां प्रमदां प्रिय-बन्धुभिः ॥३५॥ [३०
३२] पुनर् आवृत्त-तोयां च ददर्श स महा-कपिः ।
प्र-सन्नाम् इव कान्तस्य कान्तां पुनर् उप-स्थिताम् ॥३६॥ [३१
३३] तस्याऽदूरात् पद्मिनीः सः नाना-पक्षि-गणाऽऽयुताः ।
ददर्श कपि-शार्दूलो हनुमान् मारुताऽऽत्म-जः ॥३७॥ [३२
३४] कृत्रिमां स नदीं रम्यां पूर्णां शीतेन वारिणा ।
३५पू] मणि-प्रवर सोपानां मुक्ता-सैकत-संतताम् ॥३८॥ [३३

---

१. आ—०रसंकाशं । २. फ—प्रसिद्धशिखरं । ३. अ—गिरिम् । ४ आ—०कूटकुसुमैः । अ—०कूटं कुसुमैः ॥
५ फ—०हैरवततं । रा व ल₁ प्र म—शिलागृहैरवततैः । च ल₂ अ—०हैरवततैः । आ—शिवागृहै० ।
६. फ रा च व म प्र ल₂ अ—०क्षसमावृतम् । ल₁ — ० क्षसमानतम् ॥
७. आ च—नगान्तस्य ।
८. फ अ—निपतितां । ९. फ अ—तत ॥
१० व ल₁ ल₂ प म—सालै० । ११. ल₂—०शोभिता । १२. फ अ—धार्यमाणा० । १३. अ—क्रुद्धो ॥
१४. च—०ततोयश्च ॥
१५. फ—तस्यां दूरात्स पद्मिन्यो । आ—०पद्मिनीं स । अ—नद्यश्चैव सपद्मिन्यो । १६ आ—०णायुताम् । रा व प्र म—द्विजगणायुताः । ल₁—द्विजगणावृताः । १७. ल₁—पवनात्मजः ।
१८. अ—नास्ति ।
१९. रा च व म प्र ल₁ ल₂—मणिप्रवालसोपानां । २०. रा व म ल₁ प्र—मुक्तासौवर्णसं० । च—मुक्तासौवर्चसं० ल₂—मुक्तासौवर्णसतमां ॥

वि-विधैर् मृग-संघैश् च वि-चित्रां चित्र-काननाम् । [३४पू

N] पद्मिनीभिश् च चित्राभिः काञ्चनैश् च महा-द्रुमैः ॥३९॥ [N

N] तरुणाऽऽदित्य-संकाशैः शोभितां च प्र-पुष्पितैः । [N

३५उ] प्रासादैः सु-महद्भिश् च निर्-मितैर् विश्व-कर्मणा । [३४उ

काञ्चनैः कृत्रिमैश् चैव सर्वतः सम्-अलंकृताम् ॥४०॥ [३५

३६] ये केचित् पाद-पास् तत्र पुष्पोपग-फलोपगाः ।

३७पू] स-च्छत्राः स-वितर्दीकाः सर्वे सौवर्ण-वेदिकाः ॥४१॥ [३८

तथा वि-चरतस् तस्य वनं तत् पुष्पित-द्रुमम् ।

४०] मार्गमाणस्य वैदेहीं सा व्यतीऽतोऽथ शर्वरी ॥४२॥ [N

---

१. मा रा च य म प्र ल$_1$ ल$_2$ अ–०र्मृगसिंहैश्च । २. आ–विचितां । ३. रा य म प्र ल$_1$ ल$_2$–चित्रितामनाम् ॥

४. फ–शोभितां सुप्रफुल्लितां । अ–शोभितां संप्रफुल्लितां । आ–शोभितां सप्रपुष्पितां । रा–शोभिताम्यां च पु० । च–शोभिता संप्रपुष्पितां । ५. अ–प्रथमः पादो नास्ति । ६. आ–प्रासादैस्तु म० । च ल$_2$–प्रासादैश्च म० । ७ आ रा च य म प्र ल$_1$ ल$_2$–निर्मितां ॥

८. ल$_1$–०फलोपगैः । ल$_2$–फलोपमाः । अ–पुष्पोपमफ० । ९. फ म आ–संछन्नाः । अ–सच्छायाः । १०. फ–सविमानीकाः । अ–सविता-नाकाः ११. रा य म प्र ल$_1$,ल$_2$ अ–सर्वसौवर्णवे० ।

१२. अतः परमधिकः पाठः–

फ—दिव्याभिर्बहुपुष्पाभिर्लताभिर्बहुवेष्टितम् ।
वीज्यमानश्च तत्रासौ मार्गमाणश्च मैथिलीम् ॥
अवेक्षमाणो भूमिं च सर्वतः सोन्ववैक्षत ।
स समृद्धेषु देशेषु समृद्धमणितोरणम् ॥

१३. ल$_1$–तत्रापि च०। प्र–तथा विचरप० । १४. फ–वनान्तारस्तु० । ल$_1$–नवं तस्तु० । १५. फ–मार्गमाणश्च । १६. रा अ–व्यतीयाय । १७. म च–सर्वरी । १८. अतः-परमधिकः पाठः—

फ—षडङ्गवेदविदुषां क्रतुप्रवरयाजिनाम् ।
शुश्रुवे ब्रह्मघोषं च तूर्यघोषं च मारुतिः ॥

मुक्त्वा विहंगाः स्थानानि यान्ति पद्माऽऽकुलं सरः ।
४२] बोधयन्तः शुभैर् वाक्यैः कामिनीर् इव कामुकाः ॥४३॥ [N
स पश्यन् भूमि-भागांश् च तत्र प्र-स्रवणानि च ।
४३] सुवर्ण-वृक्षान् अपरान् ददर्श शिखि-संनिभान् ॥४४॥ [N
तेषां द्रुमाणां प्रभया मेरोर् इव महा-कपिः ।
४४] अमन्यत महा तेजाः काञ्चनोऽस्मीऽति वानरः ॥४५॥[८] [३९
तेन काञ्चनैस् तरु-गणैर् मारुतेन सम्-ईरिताम् ।
४५] किंकिणी-शत-निर्घोषां ददर्श स महा-कपिः ॥४६॥[११] [४०
लता-प्र-तानैर् बहुभिः पर्णैश् च बहुभिर् वृताम् ।
४६] काञ्चनीं शिंशपाम् एकां ददर्श हनुमान् कपिः[१३] ॥४७॥ [३७
तेषां[१४] काञ्चन-वृक्षाणां मध्ये जातं वनस्पतिम्[१५] ।
४७] प्र-वृद्धं शिंशपा-वृक्षं पुप्लुवे पवनाऽऽत्म-जः ॥४८॥ [N
४८पू] आ-प्लुत्य हनुमान् वीरो ददर्श रुचिर-प्रभाम् ।[१९]
४९उ] ताम् आ-रुह्य महा-तेजाः शिंशपां पर्ण-संवृताम्[२१] ॥४९॥ [४१

१. अ—रोपय० । २. फ रा च थ म प्र ल₁ ल₂ अ—कामिनी-मिव ॥

३. रा—स तत्र । अ—सोपश्यद् । ४. रा थ म प्र ल₁ ल₂—लतास्तत्र वनानि । च—तत्र प्रस्रुव० । ५. रा—०र्णपक्षान्० ।

६. फ—मेरोरपि । व ल₁ ल₂—मेररिव । ७. रा म—महावीरः । ८. च—नास्ति ॥

९. फ—तां । १०. आ अ—०रितम् । ११. रा च थ प्र ल₁ ल₂ अ—नास्ति ॥

१२. रा ल थ ल₁ म—शिंशिपा० । ल₂—शिशिपो० । प्र—शिशुपी० । १३. अ—नास्ति ॥

१४. अ—वृन्दं । १५. च—न तस्य तम् । १६. च थ ल₁ ल₂ म अ—शिंशिपा० । १७. अ—ददर्श ॥

१८. रा ब म प्र ल₁ ल₂—उत्प्लुत्य । १९. अतः परमधिकः पाठ—

फ—वृतां हेममयीभिश्च वेदिकाभिः† समन्ततः ।
फ अ—सुपुष्पिताग्रां रुचिरां तरुणाङ्कुरपल्लवाम् ।

२०. रा व म ल₁ ल₂ अ—शिंशिपा० । २१. च—नास्ति ॥

† अ—शाखाभिश्च ।

इतो द्रक्ष्यामि वैदेहीं राम-दर्शन-लालसाम् ।

५०] इतश् चेतश् च दुःखाऽऽर्तां सं-पतन्तीं यदृच्छया ॥५०॥ [४२

नि-रुद्धां पयोद्-विग्नां बाष्पौघ-हत-लोचनाम् ।

५१] वि-हीनां मृग-राजेन मृग-राज-वधूम् इव ॥५१॥ [N

५२पू] अशोक-वनिका चेयं दृढा रम्या दुर्-आत्मनः ।

५३पू] चंपकैः सरलैश् चाऽपि शोभिता चन्दनैस् तथा॥५२॥ [४३

इयं च नलिनी रम्या द्विज-सिंह (? संघ)-नि-षेविता ।

५४] इमां सा राम-महिषी नूनम् एष्यति जानकी ॥५३॥ [४४

स-रामा राम-महिषी रामस्य च सती प्रिया ।

N] वन-संचार-कुशला वनम् एष्यति जानकी ॥५४॥[11][४५

अथवा मृग-शावाऽक्षी वनस्याऽस्य वि-चक्षणा ।

N] वनम् एष्यति साऽऽर्येऽदं राम-चिंताऽनु-कर्षिता॥५५॥[14][४६

राम-शोकाऽभिसं-तप्ता देवी[15] कमल-लोचनी ।

N] वने-वासे रता नित्यम् एष्यते व्रत-धारिणी ॥५६॥[18][४७

वने-चराणां सततं नूनं स्पृहयते वरा ।

N] रामस्य दयिता भार्या नूनम् एष्यति जानकी ॥५७॥[20][४८

---

१. घ-नास्ति । २. आ-सययन्तीं ॥

३. रा च ल$_1$ म म-चम्पकैः । ४. आ फ च-शाकैश्चा० । म-सबलैश् ॥

५. अ-इमां । ६. फ-द्विजवर० । रा च ल$_1$ म-द्विजहंस० ।

७. ल$_1$ म-इयं सा । अ-ईश्वरी । ८. ल$_1$ ल$_2$ म म-म समेष्य० । अ-म सोरेष्यति ॥

९. रा च म-सा रामा । १०. फ-महिषी । ११. य ल$_1$ ल$_2$ म अ-नास्ति ॥

१२. अ-आगमिष्यति । १३. आ-सार्येद । रा य म प्र ल$_1$ ल$_2$ अ-सा चेदं । १४. म-नास्ति ॥

१५. फ-प्रिया राममनोरमा । १६. फ घ-वनवासरता । १७. फ रा म-वनचारिणी । य ल$_1$-वरचारिणी । १८. ल$_1$ म अ-नास्ति ॥

१९. रा म-०यती रतिम् । २०. ल$_1$ अ-नास्ति ॥

राम-शोकाऽभिसं-तप्ता प्रिया राम-मनो-रमा ।[N
संध्या-काले घन-श्यामा ध्रुवम् एष्यति जानकी ।
N] इमां नदीं शीत-जलां संध्याऽर्थे वर-वर्णिनी ॥५८॥ [४९
तस्याश् चाऽप्य् अनु-रूपेयम् अशोक-वनिका शुभा ।
N] शुभा या पार्थिवेन्द्रस्य पत्नी रामस्य संमतम् ॥५९॥ [५०
यदि जीवति सा देवी तारा-पति-निभाऽऽनना ।
N] आ-गमिष्यति साऽवश्यम् इमां पुण्यां महा-नदीम् ॥६०॥ [५१
एवं तु मत्वा हनुमान् महाऽऽत्मा
प्रतीऽऽक्षमाणो मनु-जेन्द्र-पत्नीम् ।
अवेक्षमाणश् च ददर्श सर्वं
५५] सु-पुष्पिते पत्र-घने वि-लीनः ॥६१॥ [५२

इत्यार्षे रामायणे सुन्दर-काण्डे अशोक-वनिका-दर्शनं
नाम नवमः सर्गः ॥९॥

---

१. फ–संध्याराग० । ल$_1$ ल$_2$–संध्याकालघ० । २. रा च घ म प्र ल$_1$, ल$_2$–नूनमे० । ३. रा म–शोकज० । अ–शुभज० । ४. फ–संगार्थे ॥

५. रा–संध्याश्या० । ६. अ–तथा । ७. रा च घ म प्र ल$_1$, ल$_2$ अ–शुभार्थं । ८. फ–पत्न्या । ९. फ अ–सम्मता ॥

१०. अ–वैदेही । ११. फ–ताराधिपनिभा० । १२. आ च–सुव्यक्ता इमां । रा घ म प्र ल$_1$ ल$_2$ अ–सुव्यक्तमिमां ॥

१३. फ–प्रवीक्षमा० । १४. म–अवीक्षमाणः स । आ रा च घ ल$_1$ ल$_2$ प्र–०अवेक्ष माणः स । १५. च अ–०नेन मीलिः । प्र–०नोतिलीनः ॥

१६. फ अ–०कामवेक्ष हनुमद्विवर्क्षौ । १७. म–नामैकादशः ॥

अवेक्षमाणः सं-भ्रान्तो मार्गमाणश् च मैथिलीम् ।[1] [१.पु
१] अपश्यद् भूमि-भागांश् च सर्वतः सुसमा-हितैः ॥१॥ [N
सुसं-मृष्टेषु देशेषु प्र-वृद्ध-मख-वेदिकान् ।
२] ददर्श हनुमांस् तत्र मणि-काञ्चन-राजतान् ॥२॥ [N
अवेक्षमाणो भूमिं च सर्वां तांम् अन्व्-अवैक्षत ।[11] [१.उ
N] दिव्य-गंध-रसोपेतैः फलैश् च समलंकृतान् (?म्) ॥३॥ [२उ
N] रक्त-चंदन-संकाशां मृग-पक्षि-समा-वृताम् ।
८उ] हर्म्य-प्रासाद-संबाधां कोकिला-शत-मण्डितांम् ॥४॥[17] [३
काञ्चनोत्पल-पद्माभिर् वापीभिर् उप-शोभितांम् ।
१] बहु-आसन-गृहोपेतां बहु-भूमि-गृहाऽऽयुतांम् ॥५॥[22] [४

१. आ च—अवेक्षमा० । फ—संवीक्ष० । अ—सोवेक्ष० । २. फ—संभ्रस्तः । ३. अतः परमधिकः पाठः—

फ—अवेक्षमाणो भूमिं च सर्वांस्तानन्ववैक्षत ।

४. अ—०द्रूमिभागांश्च । ५. फ—सुसमाहितान् ॥

६. च य म रा प्र ल ल$_2$—सुसंमिष्टेषु । ७. च य म प्र ल$_2$ल$_1$—देशेषु । ८. फ अ—०वाप्यमवे० । रा—०द्धमुखवे० । आ—प्रवृद्धान् यज्ञवेदिकान् । ९. म प्र च रा—०कराजितान् । फ—०नाजतीन् ॥

१०. आ च—अवेक्ष्य० । ११. आ च फ—सर्वास्तानन्ववैक्षत । च—सार्धां सामन्वै० । १२. अ—नास्ति । अतः परमधिकः पाठः—

फ आ च—संतानकलताभिश्च पादपाननुवेष्टितान् ॥

१३. फ—वां [illegible] नन्दनसं० । अ—स थां नंदन सं० । च ल$_1$—०काशान् । १४. फ अ—०पक्षिभिराकृताम् । च ल$_2$—०क्षिसमावृतान् । १५. ल$_1$—सर्वप्रा० । च—०बाधान् । १६. ल$_1$—कोकिलाहृतमं० । आ च—०मंडितान् । १७. ल$_1$—नास्ति ॥

१८. फ—०त्पलपत्राभिः । १९. च—०शोभितान् । २०. फ—०नसूगो० । च ल$_2$—नगृहोपेतान् । अ—बह्वासनगृ० । २१. फ—०मिगृहसुतान् । च ल$_2$—हायुतान् । २२. अतः परमधिकः पाठः—

अ—यथा गतरसस्तैश्च शतशः समलंकृताम् ॥

सर्वर्त्तु-कुसुमै रम्यैः फल-वद्भिश् च पाद-पैः ।[५पू
N] दिव्य-गंध-रस-स्पर्शैः शोभितां संप्र-पुष्पिताम् ॥६॥[1][N
पुष्पितानाम् अ-शोकानां श्रियां सूर्योदयै-प्रभाम् ।[५उ
१२] प्र-दीप्ताम् इव तत्र-स्थो मारुतिः समुद्-ऐक्षत ॥७॥
निष्पत्र-शाखां विहगैः क्रियमाणाम् इवाऽसकृत् ।[६
१३] विनिष्-पतद्भिः शतशश् चित्रैः पुष्पाऽवतंसकैः ॥८॥
आमूल-पुष्प-विचितैर् अ-शोकैः शोक-नाशनैः ।[७
१४] पुष्प-भाराऽति-भारैश् च स्पृशद्भिर् इव मेदिनीम् ॥९॥[10]
कर्णिकारैः कुसुमितैः किंशुकैश् च सु-पुष्पितैः ।[८
१५] स[11] देशः प्रभया तेषां[12] प्र-दीप्त[13] इव सर्व-तः ॥१०॥[14]
पुन्नागाः सप्त-पर्णाश् च चम्पकाः शालकास् तथा ।[९

१. अ फ भिन्नाः—नास्ति ॥

२. रा ब म प्र ल$_1$ ल$_2$ अ—श्रियं । ३. ल$_2$—सर्वोदय० ॥

४. च—०प्रशाखान् । प्र—प्रशाखा० । ५. च—०मानम् । ६. रा च ल$_2$—निपतद्भिश्च । ब म प्र ल$_1$ अ—निष्पतद्भि० । ७. ल$_1$—०वतंसिकैः । आ—०वतंशकैः ॥

८. च अ—आमूलं पु० । ब प्र ल$_1$ ल$_2$—आमूलं विचितैः पुष्पैर० । ९. अ—पुष्पसाराति० । १०. अतः परमधिकः पाठः—

आ—प्रफुल्लैः सुमनोभिश्च हाटकप्रतिमैः शुभैः ।
रोहितकवचैश्चैव पुष्पभारावनामितैः ॥

११. अ—सा दिशा । १२. च—प्रभयास्तेषां । १३. अ—प्रदीप्ता । १४. अतः परमधिकः पाठः—

फ—तमालैः सरलैश्चैव चम्पकैश्चातिपुष्पितैः ।
मेरोः शिखरसंजातैर्नगजैरिव राजितम् † ॥

१५ फ—सपनागाः । च—पुन्नागो । १६. आ—शप्तपर्णाश्च । फ अ—सप्तपर्णाः । च—सप्तपत्राः । म—सप्तवर्णा० । १७. फ अ—चम्पकोद्दालकास् । रा ब म ल$_1$—चम्पकाः शिंशिपास् । प्र—चम्पकाः शिंशुपास् । ल$_2$—चम्पकाः शिंशपास् ॥

†आ—०र्नगैरिव विराजितम् ।

१६] विवृद्ध-मूलो बहवो शोभन्ते च सु-पुष्पिताः ॥११॥[९३

शात कुंभ-निभाः केचित् केचिद् अग्नि-शिखा-प्रभाः ।

५] नीलाऽञ्जन-निभाः केचित् तत्राऽशोकाः सहस्र-शः॥१२॥[१०

चं(?नं)दनं वि-बुधोद्यानं वनं चैत्र-रथं यथा ।

६] अति-वृक्षम् इवोऽचिन्त्यं दिव्यं रम्यं श्रिया वृतम् ॥१३॥[११

द्वितीयम् इव चाऽऽकाशं पुष्प-ज्योतिर्-गणाऽऽयुतम् ।

७] पुष्प-रत्न-शतैश् चित्रं पंचमं सागरं यथा ॥१४॥[१२

सर्वर्तु-पुष्प-निचयैः पादपैर् मधु-गंधिभिः ।

८] नाना-विहंग-संघुष्टं रम्यं मृग-गणैर् द्विजैः[15] ॥१५॥[१३

अनेक-गंध-प्र-वहं[16] पुष्प-गंध-मनो-हरम् ।

१८] शैलेन्द्रम् इव गंधाऽऽढ्यं द्वितीयं गंध-मादनम् ॥१६॥[१४

अ-शोक-वनिकायां तु तस्यां वानर-पुंगवः ।

२०] स ददर्शाऽविदूर-स्थं चैत्य-प्रासादम् उच्छ्रितम् ॥१७॥[१५

---

१. च—०द्धमूलं । २. घ प्र ल₁ ल₂—रम । अ—च ॥

३. फ—०ममयाः । घ म ल₁ ल₂ अ—शातकौंभ० । प्र—शातकौंभ० । ४. अ—आवास् ॥

५. रा च घ म ल₁ ल₂—चंदनैर्विविधो० । प्र—चंदनैर्विविधोद्यानैः । ६. आ अ—चित्रं । फ—चित्रां । ७. फ—चित्ररथं । ८. म—तथा । ९. फ—अविवृत्तसुरूपं च ।

१०. रा घ प्र ल₁ ल₂—०तिर्गणैर्यु० । अ—०तिगणैः सह । ११. फ—०क्षासिते० । रा म—०रत्नचये० । ल₁—रत्नपुष्पश० ॥

१२. आ च प्र ल₁ ल₂—सर्वत्र पु० । फ—०पुष्परचितैः । [illegible]—०पुष्प-निचितैः । १३. अ—०पुष्पैरुपशोभितम् । १४. रा घ अ—नानाविहंग० । १५. फ रा च य म प्र ल₁—गणद्वि० ॥

१६. फ अ—अनेकदिव्यप्रभवं । १७. रा—पुष्पगंधं म० । आ—पुष्पं ग० । च य म ल₁ ल₂ अ—पुष्पगंधम० । प्र—पुष्पगंधमनोरमं ॥

१८. च—०दर्श विदू० । १९. ल₁—प्रत्य प्रासा० । रा—चैत्यप्रासादमुच्छ्रतम् । घ म ल₁—०दमुच्छ्रतम् । प्र—०दमुच्चमम् ॥

मध्ये स्तंभ-सहस्रेण स्थितं कैलास-पाण्डुरम्[1]।[2]
२१] प्रवाल-कृत-सोपानं तप्त-काञ्चन-वेदिकम् ॥१८॥ [१६
मुष्णंतम् इव चक्षूंषि द्योतमानम् इव श्रिया[3]।
२२] वि-मलं प्रांऽशु-भावत्वाद् उल्लिखंतम् इवांऽबरम्॥१९॥ [१७
वं.१८] तस्मिन् मलिन-संवीतां राक्षसीभिः समा-वृताम्।
१] उपवास-कृशां दीनां भर्तृ-दर्शन-लालसाम् ॥२०॥ [१८
२पू] ध्यान-शोक-परामार्ताम् उच्छ्वसन्तीं पुनः पुनः[4][5]।
३उ] ददर्श शुक्ल-पक्षाऽऽदौ चंद्र-लेखाम् इवाऽमलाम्[6]॥२१॥ [१८
मंद-प्र-क्षीयमाणेन[7] रूपेण रुचिर-प्रभाम् ।
४] पिनद्धां[8] धूम-जालेन[9] शिखाम् इव विभावसोः ॥२२॥[10] [१९
५पू] पीतेनैकेन सं-वीतां दीप्तेन तपसा यथा ।
स-पंकाम्[11] अनलंकारां वि-शुद्धाम्[12] इव पद्मिनीम्॥२३॥ [२०

---

१. रा घ म प्र ल$_1$—०ससन्निभम्। २. ल$_2$—नास्ति ॥ ३. प्र—पुण्यान्तमि०॥
४. आ रा च घ म प्र ल$_2$—०परामार्ता निश्व०। ल$_1$—०परामन्तः निश्वसंती। ५. अतः परमधिकः पाठः—

फ—ददर्श हनुमान् वीरा बद्धां गजवधूमिव।
वृक्षमूले निरानन्दां शोचन्तीं कपिसत्तमाम् ॥
ऊरुभ्यां साधुजाताभ्यां प्रतिच्छन्नां कृशोदरीम्।
तिष्ठन्तीमनलङ्कारां दीप्यमानां स्वतेजसा ॥

६ ल$_2$—०मिवापराम्। ७ आ फ—मंदं प्र०। रा घ म प्र ल$_1$ ल$_2$—चिरप्रवासमलिनां। अ—मंदं प्रख्यायमानेन। फ—०क्षीयमानेन। ८. रा घ म प्र ल$_1$—निरुद्धां। ल$_2$—विवद्धां। ९. आ—धूम्रजा०। १०. अतः परमधिकः पाठः—

अ—कृष्णेनैकेन संवीतां पीतेनोत्तरवाससा ॥

११. रा म—सपद्मा०। १२. फ अ—विशुद्धा इव। प्र—विशुद्धा० ॥

६] व्रीडितां[1] दुःख-संतप्तां परि-म्लानां[2] तपस्विनीम् ।[3]
७पू] ग्रहेणाऽङ्गारकेणेव[4] पीडितां[5] दिवि[5] रोहिणीम् ॥२४॥ [२१
१८उ] अश्रु-पूर्ण-मुखीं दीनां पीडितां शोक-कर्षिताम्[6] ।
ध्यान-शोक-परां[7] साध्वीं नित्यं राम-परायणाम् ॥२५॥ [२२
१२] प्रियं[9] जनम् अ-पश्यन्तीं पश्यन्तीं राक्षसी-गणम्[10] ।
१३पू] स्व-गणेन[11] मृगीं हीनां श्व-गणाऽभि-वृताम्[12] इव ॥२६॥ [२३
११पू] व्याल-भोग[13]-निभया वेण्या जघन-स्थितयैकया ।[14] [२४पू
२२उ] तर्कयामास सीतेति कारणैर्[15] उप-पादिभिः ॥२७॥ [२५उ
ह्रियमाणा तदा तेन रक्षसा काम-रूपिणा ।
२३] यथा-रूपा मया दृष्टा तथा[16]-रूपेयम् अंगना ॥२८॥ [२६

---

१. ल$_2$–मीडितामिव दुःखार्तां । २. आ–परितप्तां । च–परिग्लानां ।
३. अतः परमधिकः पाठः—
अ–जानुभ्यां साधुजाताभ्यां प्रतिच्छन्नकुचोदरीम् ।
तिष्ठन्तीमनलंकारां दीप्यमानां स्वतेजसा ॥
विवस्त्रां दुःखसंतप्तां परिम्लानां तपस्विनीम् ।
४. आ य म प्र–॰रकेनेव । ५. ल$_2$–पीडितामिव ॥
६. अ–॰कर्शिताम् । ७ अ–कोशे ध्यानप॰ । ८. य प्र ल$_1$–दीनां । अ–सीतां ॥

९. ल$_2$–प्रियां । १०. फ–रक्षसां गणं । ११. रा य म प्र ल$_1$ ल$_2$–मृगौघेन । १२. रा च य म प्र ल$_1$ ल$_2$–॰णाभिवृता॰ ॥
१३. फ–व्यालभोगोपया । रा च य म प्र ल$_2$ अ–॰गोपमावे॰ । ल$_1$–॰गोपमां कांच्यां । १४. अतः परमधिकः पाठः—
फ अ–सुखार्हां दुःखसंतप्तां व्यसनानामकोविदाम् ।
– तां समीक्ष्य विशालाक्षीमधिकं मलिनां कृशाम् ॥
१५. फ–करणै॰ । रा प्र ल$_1$ ल$_2$–॰पैरुपमावि॰ ॥
१६. फ–॰पमपश्यमथा॰ । च–॰पमुपश्यामि यथा॰ । अ–॰पामपश्यामि तथा॰ ॥

पूर्ण-चंद्र-निभा श्यामा चारु-वृत्त-पयोधरा ।
२४] कुर्वन्ती प्रभया देवी सर्वा वि-तिमिरा दिशः ॥२९॥ [२७
तां नील-केशीं[1] बिंबोष्ठीं[2] सु-मध्यां[3] सुमति-ष्ठिताम् । [२८पू
२५] पीनाऽचित-गुरु-श्रोणीं[4] वृत्तोरुं संहत-स्तनीम् ॥३०॥ [N
२६पू] सीतां पद्म-पलाशाऽक्षीं[5] मन्मथस्य रतीम् इव[6] । [२८उ
११उ] भूमौ सु-तनुम् आसीनां नियताम् इव[7] तापसीम् ॥३१॥[8] [२९उ
दुर्-लभां[9] दुःख-संतप्तां सु-कुमारीं[10] तपस्विनीम् । [N
९] निश्वास-बहुलां भीरुं भुजगेन्द्र-वधूम् इव ॥३२॥[11] [३०पू
८पू] आयतीम्[12] इव वि-च्छिन्नाम्[13] आज्ञाम् इव वि लोपिताम्[14] । [N
१०पू] शोक-जालेन महता वि-तते[15]न समा-वृताम् ॥३३॥ [३०उ
९उ] तां[16] बुद्धिम्[16] इव सं-दिग्धाम्[17] ऋद्धिं निप्-पतिताम्[18] इव[19] ।
N] वि-हताम् इव च[20] श्रद्धाम् आशां प्रति-हताम् इव ॥३४॥ [३२पू

---

१. आ–नीलकेशां । २. म प्र ल₁ ल₂ अ–बिंबोष्ठीं । ३. रा म–सुमुखीं । ४. प्र ल₂–॰गुरुश्रेणीं ॥

५. फ–पद्मविशा॰ । ६. रा ब म प्र ल₁–॰थस्य रतिं यथा । ल₂–नास्ति पाठः । ७. अ–लिखितामिव । ८. अतः परमधिकः पाठः—आ फ च य म प्र ल₁—सपद्मामनलंकारां पद्महीनामिवाब्जिनीम् । †

९. आ च ल₂–दुर्लभां । १०. रा ब म ल₁–सुकुमारां । ११. अ–नास्ति ॥

१२. फ–आयान्तीम् । ब प्र ल₁ ल₂ अ–आयताम् । १३. रा ल₁ अ–विच्छन्नामा॰ । प्र ल₂–विच्छन्नां माला॰ । १४. प्र–विलेपि॰ । १५. रा–विद्धेन । अ–विततेन ॥

१६. आ–कुबुद्धि॰ । प्र–तां वृद्धि॰ । १७. आ–॰र्घां बुद्धिं । प्र–ऋद्धिमन्तीं । १८. प्र–निपातिताम् । १९. रा म–विहि॰ । २०. च–स्वच्छ॰ ॥

---

† रा—पुष्पहीनामिवाब्जिनीम् ।
ल₂ कोशे च–'पद्महीनामिवाब्जनीम्' इत्येव पाठः ।

१.३उ] सोपे-सर्गां यथा सिद्धिं बुद्धिं स-कलुषाम् इव । [३२उ
N] प्रज्ञाम् इव परि-क्षीणां स्मृतिं प्रति-हताम् इव ॥३५॥[6] [N
दीप्ताम् इव दिशां काले पूजां प्रति-हताम् इव ।
पौर्णमासीम् इव निशां राहु-ग्रस्त-निशा-कराम् ।[10] [N
N] प्र-भूतेनाऽप-वादेन कीर्तिं नि-पतितांम् इव ॥३६॥ [३२उ
१.४पू] रामोप-रोध-व्यथितां रक्षो-हरण-कर्षितांम् ।[14]
अ-चलां मृग-शावाऽक्षीं वीऽऽक्षमाणाम् इतस् ततः॥३७॥ [३३
१.५] अश्रु-बाष्पाऽभिपूर्णेन चारु-कृष्णाऽक्षि-पक्ष्मणा ।
वदनेनाऽप्र-सन्नेन निश्-श्वसंतीं पुनः पुनः ॥३८॥ [३४
१.६] मल-पंक-धरां दीनां मण्डनाऽर्हाम् अ-मण्डिताम् ।
प्रभां नक्षत्र-राजस्य काले मेघैर् इवाऽऽवृताम् ॥३९॥ [३५
१.७] तस्य सं-दिदिहे बुद्धिर् मुहुः सीतां प्र-पश्यतः ।

---

१. आ–सोपसर्गां । फ–सोमवर्ज्जां । रा–सोपसर्पां । २. आ–यथा । ३. च ल$_2$–वृद्धि । ४. रा म–सुकलुषा० । ५. आ य म प्र ल$_2$–प्रज्ञामिव । ६. ल$_1$ अ–नास्ति ॥

. रा प्र ल$_1$–०व दिशं का० । फ–दिशं काले महापूर्वा । ८. ल$_1$–प्रजां । ९. आ–०र्णमास्या० । प्र–०र्णमासी० । १०. ल$_1$–पूर्वार्द्धं नास्ति । अ–नास्ति श्लोकः । ११. रा–प्रतिहतामिव ॥

१२. फ–रामोपरोध० । च–रम्योपराम० । अ–०प्रसाद० । १३. आ अ–कर्शितां । १४. च म प्र ल$_1$ ल$_2$–नास्ति । १५. रा च घ म प्र ल$_1$ ल$_2$–०माणम् ॥

१६ आ च य प्र–अश्रुबाष्पातिपू० । रा म–अश्रुपूर्णा० । प्र ल$_1$ ल$_2$ अ–अश्रुवा० ॥ १७. च प्र ल$_1$–०नेन प्र० । अ–चंदनेन प्र० ॥

१८. रा–मण्डमेनाभिम० । च प्र ल$_1$ ल$_2$–मण्डनेनातिम० । म–मण्डलेनाभिम० । १९ फ–काम० । रा अ–काल० । ल$_2$–काले० ॥

अन्-आम्नाताम्[1] अ-योगेन विद्यां प्र-शिथिलाम्[2] इव॥४०॥[३६

१८] दुःखेन बुबुधे सीतां हनुमान्[3] अन्-अलंकृताम् ।

१९पू] संस्कारेण यथा हीनां वाचम् अर्थाऽन्तरं गताम् ॥४१॥[4][३७

तां सम्-ईक्ष्य विशालाऽक्षीं राज-पुत्रीम् अ-निंदिताम्।

२२] तर्कयामास सीतेति कारणैर् उप-पादयन्[5] ॥४२॥ [३८

वैदेह्या यानि चांऽगेषु तदा रामोऽन्व्[6]-अकीर्तयत् ।[7][३९पू

N] मणि-विद्रुम-चित्राणि हस्तेष्व्[8] आभरणानि च ॥४३॥ [४०पू

वासांसि[9] चिर-मुक्तानि तथा[10] संस्थान-वन्ति[11] च । [N

N] तान्येवैतानि मन्येऽहं यानि रामोऽप्य् अकीर्तयत्॥४४॥[४०उ

तत्र यानि[12] वि-हीनानि तान्य् अहं[13] नोप-लक्षये[14] ।

N] यान्य्[15] अस्या न वि-हीनानि तानीऽमानि न संशयः॥४५॥[४२

---

१. आ–॰म्नातायया॰ । फ–अनभ्यस्ताम॰ । २. ब ल$_1$–विद्यामशि॰ । प्र–विद्यामणिशि॰ ॥

३. फ–हनुमान् । ४. रा ब म प्र ल$_1$ ल$_2$–नास्ति ॥

५. फ अ–॰णैरुपपादि॰ ॥

६. प्र–रामो नु कीर्तयन् । ७. अतः परमधिकः पाठः—
रा च ब म प्र ल$_1$ ल$_2$ फ–तान्याभरणजातानि शुभानि निशि लक्षये।
अक्षतौ कर्णवेष्टौ च सुदंष्ट्रौ कामरूपिणौ ॥

८. रा ब म प्र ल$_1$ ल$_2$ अ–हस्तस्य॰ ॥

९. च ब म प्र ल$_2$–वासांस्यचिरत्यक्तत्वात् । ल$_1$–वासांसि चिरत्यक्तत्वात् । अ–इमानि चिरयुक्तानि। १०. रा च ब म प्र ल$_1$ ल$_2$–तत्र । ११. अ–संस्थानवन्ति ॥

१२. फ अ–यान्यवहीनानि । १३. ब प्र ल$_1$ ल$_2$–नास्ति । १४. अतः परं च–भिन्नेष्वधिकः पाठः—
ह्रियमाणा† तदा तेन रक्षसा कामरूपिणा ।

१५. म–यान्यस्थानवि॰ । अ–यान्यस्यांगवि॰। फ–यान्यस्या नावही॰। ब प्र ल$_1$ ल$_2$–नास्ति ॥

---

† फ ब–ह्रियमाणां ।

पीतं[1] कनक-पट्टाऽऽभ स्रस्तं तद् वसनं शुभम् ।

N] उत्तरीयं नगाऽऽसक्तं तदा दृष्टं प्लवंगमैः ॥४६॥ [४३

भूषणानि च मुख्यानि दृष्टानि धरणी-तले ।

N] अनयैव प्र-विद्धानि स्वन-वन्ति महान्ति च ॥४७॥ [४४

इदं चिर-गृहीतत्वाद् वसनं क्लिष्ट-वर्णकम् ।

N] तथा हि नु तद् वर्ण यथा श्री-राम-सन्निधौ ॥४८॥ [४५

इयम् इन्दी-वर-श्यामा रामस्य महिषी प्रिया ।

N] प्र-नष्टाऽपि सती तस्य मनसो न प्र-णश्यति ॥४९॥ [४६

पति-शोकेन चाऽऽविष्टा तपसा च कृशा भृशम् ।

N] प्रतिपच्-चन्द्र-लेखेव दृश्यते द्योतते न च ॥५०॥[20] [N

इयं सा यत्-कृते रामश् चतुर्भिः परि-तप्यते ।[21]

N] कार्पण्येनाऽऽनृशंस्येन[22] शोकेन मदनेन च ॥५१॥ [४७

---

१. आ–वीतं । २. रा च म प्र ङ$_1$ ङ$_2$–कनकवर्णाभं । ३. आ–स्रस्तं । अ–स्रस्तं । ४. फ–तद्वसनांशुकं । ५. ङ$_1$–वसनोत्तमं । ६. अ आ–नगासक्तं । रा च य म–नागासक्तं ॥

७. फ–रम्याणि । ८. रा म–भ्रष्टानि । ९. रा य म प्र ङ$_1$ ङ$_2$–अनयैव । च–अनयैव । १०. फ–प्रहृष्टानि । य म प्र ङ$_1$ ङ$_2$–प्रवृद्धानि । ११. फ–महान्तिव । अ–रसंति च ॥

१२. रा च य म प्र ङ$_1$ ङ$_2$–चीरं गृहीत्वा तु । १३. आ–महत्तरं । च म ङ$_2$–कृष्णवर्णाभ् । फ अ–क्लिष्टवत्तरम् । १४. य–तथा । १५. आ फ रा च य म प्र ङ$_1$ ङ$_2$–श्रीमद्यथेतरम् ॥

१६. रा च य म प्र ङ$_1$ ङ$_2$ अ–प्रणष्टापि । १७. आ–मनसा । १८. च–न प्रणश्यति । य म प्र ङ$_1$ अ–न प्रणश्यति । ङ$_2$–प्रणयस्य हि । १९. अतः परमधिकः पाठः—अ—

इयं सा राममहिषी श्रुता(?)सदृशानना ।

शुद्धार्धेन्दुसर्वांगी धृतनो? हता इव ॥

२०. ङ$_1$–०तप्यति । २१. फ–नास्ति । २२. ङ$_1$–कार्पण्ये० । आ–०नानृशंस्येन । अ–०नानृशंस्येन ॥

स्त्री[1] प्र-नष्टेति कार्पण्याद् हा मृतेत्य् अनु-कंपया ।
N] सा[2]ध्वी नष्टेति शोकेन प्रियेति मदनेन च ॥५२॥[3] [४८
[4]अस्या देव्या मनस् तस्मिंस्[5] तस्य चाऽस्यां प्रति-ष्ठितम् ।
N] तेनेयं स च धर्माऽऽत्मा ह्य्[6] अद्य कृच्छ्रेण जीवति ॥५३॥ [५२
मा[7]न्या गुरु-वि-नीत[8]स्य लक्ष्मण[9]स्य गुरु-प्रिया[10] । [दा१६
राघवस्याऽति-वीर्यस्य[11] लक्ष्मण[12]स्याऽपि जीव[13]तः ।[14] [N
N] [15]यदि सीता[16]ऽपि दुःखाऽऽर्त्ता कालो हि[17] दुरति-क्रमः ॥५४॥ [३उ
रामस्य व्यवसाय-ज्ञा सत्त्व-ज्ञा लक्ष्मणस्य च ।
N] नाऽत्यर्थं क्षुभ्यते देवी गङ्गेव जलदाऽऽगमे ॥५५॥ [४
तु[18]ल्य-शील-वयो-वृत्तां तुल्याऽभि-जन-लक्षणाम् ।
N] राघवोऽर्हति वैदेही तं चेयम् अ-सितेक्षणा ॥५६॥[19] [५
तां[20] दृष्ट्वा नव-हेमाऽऽभां लोक-कान्ताम् इव श्रियम् ।
२७] जगाम मनसा रामं वचनं चेदम् अब्रवीत् ॥५७॥ [६

---

१ अ–श्री । २ फ–सदनेति । ३ रा च य म प्र ल$_1$ ल$_2$–नास्ति ॥

४ य प्र ल$_1$–अस्यास्तस्मिन् मनो देव्यास्० । ५ ल$_2$–सर्व० । ६ फ–यघकृच्छ्रेन । रा च य म ल$_1$ ल$_2$–ह्यद्य कष्टेन । प्र–हृदि कष्टेन । अ–ह्यतिकृच्छ्रेण ।

७ ल$_2$–अध्या । ८ रा व म प्र ल$_1$ ल$_2$–गुरुविनीतेन । ९ रा च य म प्र ल$_1$ ल$_2$–लक्ष्मणेन । १०. रा व म प्र ल$_1$–गुणिप्रिया । च ल$_2$–गुणप्रिया । ११ रा व ०स्यातिवीरस्य । म प्र ल$_1$ ०स्यापि वीरस्य । १२ रा घ म प्र ल$_1$ ल$_2$–लक्ष्मणस्य च । १३ फ–जीवित । रा च घ म प्र ल$_1$ ल$_2$–जीवितम् । १४ अ–नास्ति । १५ रा च म प्र ल$_1$ ल$_2$–कथ । १६ आ–शीतापि । १७ अ–०पि ॥ १८ अ–कुल्शी० । १९ रा च य म प्र ल$_1$ ल$_2$–नास्ति ॥

२० च–एव सीता तदा दृष्ट्वा ॥

अस्या हेतोर् विशालाऽक्ष्या हतो वाली महा-बलः ।
२८] रावण-प्रतिमो वीर्ये कबन्धश् च नि-पातितः ॥५८॥ [७
ऐश्वर्यं वानराणां च दुर्लभं वालि-पालितम् ।
N] अस्या निमित्ते सु-ग्रीवः प्राप्तवांल् लोक-सत्कृतः ॥५९॥ [११
वि-राधश् च हतः संख्ये राक्षसो भीम-वि-क्रमः ।
२९] वने रामेण सं-गम्य महेन्द्रेणेव शंबरः ॥६०॥''[८
चतुर्दश सहस्राणि रक्षसां क्रूर-कर्मणाम् ।
३०] नि-हतानि जन-स्थाने शरैर् अग्नि-शिखोपमैः ॥६१॥ [९
खरश् च नि-हतः संख्ये दूषणश् च नि-पातितः ।
३१] त्रि-शिराश् च महा-वीर्यो रामेण विदिताऽऽत्मना । [१०
N] कृता शूर्प-णखा चैव हृत-कर्णाऽग्र-नासिका ॥६२॥''[N
इमाम् अभ्यवपन्नोऽसौ ह्रिय-माणां बलीयसा ।
N] जटायुर् निधनं प्राप्तः पुण्य-लोकांश् च शाश्वतान् ॥६३॥ [N
अस्या हेतोर् वलोद्-अग्रा हरयः काम-रूपिणः ।

---

१. अ–महाबली । २. रा घ म प्र ल$_1$ ल$_2$–वीरः । ३. फ–महा-बलः ॥ ४. रा–दुर्बलं । ५. अतः परमधिकः पाठः—फ–तारां रुमां च मालां च कपिराज्यं च शाश्वतम् । ६. घ प्र अ–निमित्तं । ७. आ–सुग्रीवं । ८. आ अ–०कसत्कृतं । फ–०कसत्क्रियाम् । घ म ल$_1$ ल$_2$–कसत्तमः ॥ ९. आ–रामस्य । १०. आ–संवरः । च–शंवरः । अ–दानवाः । ११. रा घ म प्र ल$_1$ ल$_2$–नास्ति ॥ १२. घ म प्र ल$_1$–भीमकर्मणाम् । १३. आ–निहितानि । च–निहत्य ॥ १४. घ प्र ल$_1$–निहतो दूषणस्तथा । ल$_2$–दूषणश्च नि० । १५. ल$_2$–त्रिशराश्च । १६. फ अ–महातेजा । घ म प्र ल$_1$ ल$_2$–महावीरो । १७. ल$_1$ ल$_2$–शूर्पनखा । १८. फ–हृता कर्णा-पना० । रा–हृता कर्णोष्ठना० । घ म प्र–हृतकर्णौष्ठना० । ल$_1$–कृत्तवर्णोष्टना० । १९. अतः परमधिकः पाठः–ल$_2$–अस्या हेतोर्मृगव्याजो मारीचो निधनं गतः ॥ २०. रा घ म प्र ल$_1$–०वपन्नासौ । अ–०वपन्नेव । च–०वपन्नोऽसौ । २१. ल$_2$–विहायसा ॥ २२. रा घ म प्र ल$_1$–वानरा ।

N] सु-ग्रीवेण समा-दिष्टा मार्गन्ते सर्व-तो दिशः ॥६४॥ [N
अस्या हेतोर् महद् दुःखं प्राप्तं रामेण धीमता ।
N] परा संभावना चाऽस्याम् त्व् अस्यां दिशि नि-वेशिता ६५ [N
इमां तां शिंशपा-मूले दूराद् इव व्यव-स्थिताम् ।
N] गृध्रः कथितवान् विंध्ये वानराणां सुहृत्-तया ॥६६॥ [N
सागरश् च मया क्रान्तः श्रीमान् नद-नदी-पतिः । [N
३४] अस्याः कृते विशालाऽस्याः पुरी चेयं निर्-ईक्षिता॥६७॥[१२७
यदि रामः समुद्राऽन्तां मेदिनीं परि-वर्तयेत् ।
३५] अस्याः कृते जगत् सर्वं नाऽनु-मन्येत केवलम् ॥६८॥ [१३
राज्यं वा त्रिषु लोकेषु सीतां वा जनकाऽऽत्म-जां ।
३६] मन्ये सर्वे त्रयो लोकाः सीतायाः नाऽर्घम् आप्नुयुः॥६९॥[१४
दुष्-करं कृतवान् रामो य इमां मत्त-गामिनीम् । [N
३७] सीतां विना महा-बाहुर् मुहूर्तम् अपि जीवति ॥७०॥
एवं सीतां तदा दृष्ट्वा हृष्टः पवन-संभवः । [१५
३८] जगाम मनसा रामं प्र-शशंस च राघवम् ॥७१॥

---

१. प्र–वासतो दिशं । ब ल, अ–सर्वतो दिशं ॥ २. अ–°नावाद्स्त्वस्यां । फ–°ना चास्याः तस्यां । च–परा संभवास्माद्स्यां । अ–°नाऽस्माभिरस्यां । ३. फ–निषेविनाम् । अ–निवेशितः । ४. य म प्र ल, ल२–नास्ति ॥ ५. फ रा ल, अ–शिंशिपामू° । च ब–शिंसिपामू° । ६. रा च ब म प्र ल, ल२ अ–दूरादेव व्य° । आ–°दिव इवावस्थितम् । फ–°दिव इव स्थितम् । ७. अ–गृध्रेण कथितां ।
८. रा ब म प्र ल, ल२–सुखासये ॥ ९. अ–हेतोर् ॥ १० अ–अपि । ११. फ–°वंमनुमन्येत । ब फ अ–भिक्षाः–°वं ननु म° । अ–°वं मन्यते ननु ॥ १२. फ अ–सीतां वा जनकात्मजाम् । आ–शीतां वा जनकात्मजां । १३. आ–शीताया ॥ १४ रा ब म प्र ल१–यदिमां हंसगामिनीम् । ल२–यदर्थं हंसगा° ॥ १५. ल२–कथं । १६. आ–प्रससंस च । रा घ च प्र ल, ल२–प्रथमं स च । म–प्रथमं च स ॥

क्षिति-क्षमा[1] याऽम्बुज-संनिभाऽक्षी

　　या रक्षिता राघव-लक्ष्मणाभ्याम् । [स.१५,५३

सा[2] राक्षसीभिर् वि-कृतेक्षणाभिः

N]　　सं-रक्ष्यते संप्रति वृक्ष-मूले ॥७२॥ [२९

हिमै[3]-हत-नलिनीऽव नष्ट-शोभा

　　व्यसन-परंपरया[4]ऽनु-गम्यमाना ।

सह-चर-रहितेव[5] चक्र-वाकी

N]　　जनक-सुता कृपणां दशां प्र-पन्ना ॥७३॥ [३०

इत्यार्षे रामायणे सुन्दर-काण्डे सीता-संदर्शनं[6] नाम

दशमः[7] सर्गः ॥१०॥

---

१. अ०–क्षमा पुष्करसन्निभाक्षी । फ–०क्षमां पुष्करसन्निभाक्षीं । २. ल१–स ॥ ३. म–हेमंते । फ–हिमवत । ४. फ–०रम्परानुग० । रा च घ म ल१–०रम्परयावग० । अ–०रम्परयाभिरक्ष्यमाणा । ५. च–०रक्षितेव ॥ ६. फ–अशोकवनिकाप्रवेशो । ७. म–नाम द्वादशः ॥

प्र-शस्ये तु प्र-शस्तव्यां सीतां स हरि-पुंगवः ।
१] गुणाऽभि-रामं रामं च पुनश् चिन्ता-परोऽभवत् ॥१॥ [१
स मुहूर्तम् इव ध्यात्वा बाष्प-पर्य्-आकुलेक्षणः ।
२] सीताम् आ-श्रित्य तेजस्वी हनूमान् वि-ललाप ह॥२॥ [२
इयं सा धर्म-शीलस्य मैथिलस्य महाऽऽत्मनः ।
३] सुता जनक-राजस्य सीता भर्तृ-दृढ-व्रता ॥३॥ [१५
उत्थिता धरणीं भित्त्वा क्षेत्राद् हल-मुख-क्षताद् ।
४] पद्म-रेणु-निभैः कीर्णा गौरैः केदार-पांसुभिः ॥४॥ [१६
वि-क्रान्तस्याऽऽर्य-शीलस्य सं युगेष्व् अनि-वर्तिनः ।
५] स्नुषा दशरथस्यैषा ज्येष्ठा राज्ञो यशस्विनी ॥५॥ [१७
धर्म-ज्ञस्य कृत-ज्ञस्य रामस्य विदिताऽऽत्मनः ।
६] इयं सा दयिता भार्या राक्षसी-वशम् आ-गता ॥६॥ [१८
सर्वान् भोगान् परि-त्यज्य भर्तृ-स्नेह-वशी कृता ।
७] वि-हाय धन-रत्नानि प्र-विष्टा निर्-जनं वनम् ॥७॥ [१९

१. आ–प्रपस्य । य ल$_1$ ल$_2$–प्रशंस्य । २. आ–प्रसस्त० । ल$_2$–प्रशंस्त० । ३ आ–शीतां ॥ ४. फ–सु० । ५. आ–शीता० । ६. घ म प्र ल$_1$ ल$_2$–हनुमान् ॥ ७ च–०शीलश्च । ८ आ–सीता । ९. आ–भर्तृद० ॥ १०. आ म–लक्षता । फ–०लक्षणात् । रा–०मक्षतम् । अ–०क्षात्सती ॥ ११. [illegible]–०स्यार्थशी० । १२. फ–ष्वनुवर्ति० । १३. व म प्र ल$_1$ ल$_2$ आ–०थस्यैव ॥ १४. फ व–यशमा० ॥ १५ आ–०हवलाकृता । च अ–०हवला कृता ॥ फ–०हवशानुगा । १६. आ रा च य म प्र ल$_1$ ल$_2$–गिरिदुर्गाणि । १७. अ–विजनं ॥

८पू] सं-तुष्टा फल-मूलेन भर्तृ-शुश्रूषणे रता ।[२०पू
९पू] सेयं कनक-वर्णाऽऽभा नित्यं स-स्मित-भाषिणी॥८॥[२१पू
८उ] या परां भजते प्रीतिं वनेऽपि भवने यथा ।[२०उ
९उ] सहते यातनाम् एताम् अनर्थानाम् अ-भाजनम् ॥९॥[२१उ
१४उ] इमां तु शील-संपन्नां द्रष्टुम् इच्छति राघवः ।
१५पू] रावणेन प्र-मथितां प्रपाम् इव पिपासुना ॥१०॥ [२२
N] पति-शोकाऽभिसंतप्ता तपसा च कृशा भृशम् ।
१६उ] मृणाली पंक-दिग्धेव न भाति च वि-भाति च ॥११॥[N
२२उ] अस्या नूनं पुनर् लाभं राघवः प्रति-पत्स्यते ।
राजा राज्य-विहीनः सन् महीम् इव पुनर् यथा ॥१२॥[२३
२३] काम-भोगैः परि-त्यक्ता हीना बन्धु-जनेन च ।
धारयत्य् आत्मनो देहं तत्-समागम-कांक्षया ॥१३॥[२४
२४] राक्षसीः पश्यते नैषा नैव पुष्प-फलान् द्रुमान् ।
एकस्थ-हृदयो सा च रामम् एवाऽनु-पश्यति ॥१४॥[२५
२५] भर्ता नाम परं नार्या भूषणं भूषणैर् विना ।
एषा त्व् रहिता तेन शोभमाना न शोभते ॥१५॥[२६

---

१. रा च य म प्र ल१ ल२ अ-परा । २. य म प्र ल१ ल२-कांचनव० । फ अ-० वर्णांगी । ३. फ अ-सेयं । य प्र ल१-नित्य० ॥ ४. य प्र ल१ ल२-यातनां घोराम० । फ-०मभाजना ॥ ५. फ-मद्भुमर्हति । ६. रा म-वारयेन । ७. ल२-यमथ्यतां यामुना । अ-०विषाम्बुना ॥ ८. अ-वह् । ९. य म प्र-कृदिग्धा । ल२-०कृदिग्धांगी । १०. फ-भाति विभाति च । रा च य म प्र ल१ ल२ अ-विभाति विभाति ॥ ११. फ-तस्या । य-अस्यां । १२ फ-लाभे । १३. फ-राघवं ॥ १४. रा च म प्र ल१ ल२ अ-कांमं भो० । १५. ल२-चास्ति ॥ १६. फ-चैषा । १७. फ-नेमान् । १८ फ-पुष्पधरान् । १९. फ-०या शंके । रा य प्र ल१ ल१-०दयैषा च । अ-०श शंका । २०. फ-०चानुसंकति ॥ २१. ल१-भर्तुर् । २२. म-भार्या । २३. फ अ-हि रहिता । २४. फ अ-शोभार्हापि । ल१-शोभनापि ॥

२६] दुष्-करं कुरुते रामो हीनो[1] यद् अनया प्रभुः ।
धारयत्य् आत्मनो देहं[2] न शोकेनाऽव-सीदति ॥१६॥ [२७

२७] इमाम् अ-सित-केशाऽन्तां शत-पत्र-निभाऽऽननाम् ।
सुखाऽर्हां दुःखितां दृष्ट्वा ममाऽपि व्यथते मनः ॥१७॥ [२८

N] तद्-वि-हीना नै भात्य् एषा चन्द्र-हीनेव शर्वरी ।
२८उ] कदा नु खलु दुःखस्य पारं यास्यति मैथिली ॥१८॥ [N

एवं चिन्तयतस् तस्य मारुतेर् वि-क्लवाऽऽत्मनः ।
N] प्र-भाता शर्वरी चन्द्र-ग्रह-नक्षत्र-पीडिता ॥१९॥ [N

ततोऽरुण-परि-ष्पन्द-मन्दी-कृत-वपुः शशी ।
N] दध्रे काम-परिक्षाम-कामिनी-गण्ड-पाण्डुताम् ॥२०॥ [N

अथोद् यन्तं विवस्वन्तं दृष्ट्वा प्लवग-सत्तमः ।
N] चिन्तयामास हनुमांस् तदा बुद्धि-मतां वरः ॥२१॥ [N

अ-दृष्ट-पूर्वा मे सीतां इमां च वर-वर्णिनीम्[12] ।
N] इंगितैर् अभि-जानामि सीतां[13] शोक-परायणाम् ॥२२॥ [N

राक्षसीभिः सु-घोराभिस् तर्ज्यमानां मुहुर् मुहुः ।
N] ध्यायन्ती बाष्प-रुद्धाऽक्षीम् उच्छ्वसन्ती पुनः पुनः ॥२३॥ [N

अधो-मुखी निर्-आनन्दाम् एक-वस्त्राऽव-गुण्ठिताम् ।
एकाम् अनेक-रूपाभी राक्षसीभिः समा-वृताम् ।

१ फ म अ–हीनो यदन० । च–हीनो अद्य० । ल$_1$–हीनोसाव० । प्र–दीनोसावनया । २ फ–देहमशोकेना० । अ–देहं स शोकेन वशीकृतः ॥ ३ घ प्र ल$_2$–वि० । ४ फ–तु ॥ ५. आ–सर्वरी । ६. फ अ–पुण्या चन्दन० ॥ ७ आ रा च अ–०परिष्पंदं मदी० । ८ आ–०रिक्षामा का० । अ–०रिक्षामा का० ॥ ९. रा म–०गपुंगवः ॥ १०–आ–शीता । ११. अ–इय । १२. अ–०वर्णिनी । १३. आ–शीता ॥ १४. अ–मूर्च्छमा० । १५. च–ध्यायती । १६. च–वाष्परुद्धाक्षी उछ्वसन्ती । रा म अ–०द्धाक्षीं निश्वस० ॥ १७. फ–अधोमुखा । १८ आ फ च रा घ म प्र ल$_2$ अ–०पाभिर्मानुषीं राक्षसीवृताम् ॥

N] सु-रूपां मल-दिग्धाऽङ्गीम् एव विधम् अनर्हतीम् ॥२४॥ [N

रावणस्य पुरं श्री-मत् सर्वम् अन्तः-पुरं तथा ।

N] गृहाणि रक्षसां चैव तथोद्यानानि सर्वशः ॥२५॥ [N

रात्रौ मृगयता सीतां वि-श्रभ्यं लक्षिता मया ।

न चाऽत्र दुःखिता नारी न चाऽऽर्ता नाऽश्रु-विक्लवा ।

N] न च बन्धु-वि-मुक्ता च मुक्तैनां राक्षसी-रताम् ॥२६॥ [N

अव-ज्ञातं मया सर्वं रावणाऽन्तः-पुरं महत् ।

N] अत्र चित्तं ममाऽऽसक्तं ध्रुवं सीतेयम् अंगना ॥२७॥ [N

संपाति-वचनाच् चाऽपि जानाम्य् एताम् अहं ध्रुवम् ।

N] रामस्य महिषी देवी लक्ष्मी नारायणस्य वा ॥२८॥ [N

न शक्या प्र-सभं द्रष्टुं राक्षसी-सन्निधौ मया ।

N] शंकेरन् यदि राक्षस्यः कार्य-नाशस् ततो भवेत् ॥२९॥ [N

---

१. अ–रावणान्त पुर । य–रावणस्य पुरीं । २. फ च–श्रीमान् । ३. प ङ$_1$–महत् । ४. च–ततोद्या० । ङ$_1$ ङ$_2$–तयोद्यानानि च । ५. आ–सर्वथा ॥ ६. [illegible] म–मया । च–विश्राम्यत् । य ङ$_2$–विश्रभ्य । ङ$_1$–विश्रभ्या० । ७. फ–रक्षित मया । रा म–विश्रभ्य लक्षिता । ८. अ–नवान्न । ९ फ आ–नामघा । अ–नयार्ता । १०. फ–सुविक्लवा । रा–नाश्रुवि० । य ङ$_2$–न च विक्लवा । ११. रा च य म प्र ङ$_1$ ङ$_2$ म–०विमुक्ता । १२. आ–मुक्तैमां । फ–मुक्त्वेमा । रा च य म प्र ङ$_1$–मुक्त्वेता । अ–मुक्तैव । १३. आ च [illegible] ङ$_2$–०सीतगान् । म ङ$_1$–०सीगणात् ॥ १४. म–अवज्ञातमयं । १५. ङ$_2$–अथ । १६ रा–समासिक्तं । च आ–समायुक्त । १७. अ–पूर्वार्द्धो नास्ति । म–उत्तरार्द्धो नास्ति ॥ १८. य प्र ङ$_1$ ङ$_2$–०नाचैव । १९. अ–सीतां जानाम्यहं । २०. आ च अ–च ॥ २१. च–प्रभवं । २२ रा च म प्र ङ$_1$ ङ$_2$–शंकेमे राक्षसीनां तु । च–शंके नानादि रा० । अ–शंकेयुर्यदि राक्षस्यः । २३. रा य म प्र ङ$_1$ ङ$_2$–कार्यनाशो भविष्यति ॥

एता वां यद्य् अहं हन्मि ह्य् अ-दृष्ट्वा जनकाऽऽत्म-जाम् ।
N] कार्याऽन्तत्वम् अ-विज्ञाय वि-क्रमो मे वृथा भवेद्॥३०॥ [N
तस्मात् स्व्-अल्पेन रूपेण साम्प्रतं लक्षयाम्य् अहम् ।
N] एतां दृष्टि-पथे कृत्वा हृदि योगीऽव देवताम् ॥३१॥ [N
इति बुद्ध्या सम्-ईक्ष्याऽथ स सं-क्षिप्य वपुः स्वकम् ।
N] तस्थाव् अन्तर-संप्रेक्षी काल-ज्ञः पवनाऽऽत्म-जः॥३२॥ [N
ततो रश्मि-सहस्रेण मुष्णंस् तेजांसि ज्योतिषाम् ।
N] काञ्चनाऽऽभं जगत् कुर्वन्न् उदितो वि-मलो रविः॥३३॥[N
दिवा-चराणां सं-ह्रादः शुश्रुवे तुमुलो भुवि[११] ।
N] रात्रि-चराश् च ये सत्त्वास् ते निद्रा-वशम् आगताः[१४]॥३४॥[N
रक्षो-द्वारे राक्षसानां शब्दोऽभूद् भीम-नि-स्वनः ।
N] धावताम् आह्वयमान(?ना)नां घनानाम् इव घर्मगे॥३५॥[१५][N
अग्नि-होत्रोत्थितैर् धूमैर् आज्य-गन्धैश् च सा पुरी ।
N] मारुतेन समा-धूतैर् यज्ञ-भूमिर् इवाऽभवत् ॥३६॥ [N
शुश्राव राक्षसेन्द्रस्य नाना-वाचः सम्-ईरिताः ।
जय-शब्दांश् च वि-विधान् स्तुति-शब्दांश् च पुष्कलान्।

---

१. आ फ–वै । २. फ च अ–कार्यतत्वम०। रा य म प्र ल$_1$ ल$_2$–कार्यतत्त्वम०। ३. फ–मे भवेद् वृथा। अ–०यं भवेद् वृथा॥ ४. अ–कालेन॥ ५. फ रा च य म ल$_1$ ल$_2$ अ–साक्षिप्य च। प्र–शिक्षया च। ६. आ रा च य म प्र ल$_1$ ल$_2$–पुनः॥ ७. आ–मुंचंस्ते०। च–मुष्ण ते०। ८. आ रा च य म प्र ल$_1$ ल$_2$–कांचनं च। ९. आ–सर्व॥ १०. अ–निर्ह्रादः। ११. अ–हरिः। १२. आ–सत्वा निद्रावशमुपागताः॥ १३. आ फ रा–राक्षसीनां। १४. अ–शब्दोभुद्भातनि०। १५. आ–धावताह्वयमा०। फ च रा–धावतामाह्वयमानानां। १६. य म प्र ल$_1$ ल$_2$–नास्ति॥ १७. अ–समुद्धतै०। १८. अ–०भिरियं पुरी॥ १९. अ–श्रुतिश०।

N] शंख-तूर्य-स्वोन-मिश्रान् वेणु-गीत-स्वनांस् तथा ॥३७॥ [N
अथ ते राक्षसा घोरा नीलाऽञ्जन-चैय-प्रभाः ।
N] रावणं जय-शब्देन सं-पूज्याऽभिप्र-तस्थिरे ॥३८॥ [N
उद्यानानि विहारांश् च पर्वतांश् च मनो-रमान् ।
N] गुहाश् च सं-वृताऽऽकाराः सानूंश् च विपुलान् अपि ॥३९॥ [N
वेश्मानि चाऽति-रूपाणि मनो-दृष्टि-हराणि च ।
N] आक्रीडान् वि-विधान् रम्यान् नदीनां पुलिनानि च ॥४०॥ [N
वृक्ष-खण्डांस् तथा दिव्यान् गह्वरान् निर्झराणि च ।
स्व-च्छन्द-गतयस् ते हि रावणाऽऽश्रय-निर्भयाः ।
N] संघ-शो रेमिरे तेषु वि-न्यस्ताश् च तथा पृथक् ॥४१॥ [N
हनुमान् अपि सं-हृष्टः सीता-संभाषणोत्सुकः ।
N] सूर्याऽस्तमनम् आ-कांक्षंस् तस्थौ वृक्षाऽन्तरे स्थितः ॥४२॥ [N
ततः सं-ताप्य पृथिवीं जपा-पुष्पोत्कर-प्रभः ।
N] दिन-क्षयान् मन्द-रश्मिर् भानुर् अस्तम् उपाऽऽगतः ॥४३॥ [N
अथाऽऽक्रीडान् परि-सज्य राक्षसा वि-कृतेक्षणाः ।
N] स्वं स्वं स्थानम् उपाऽऽगम्य तस्थू राज्यागमे तदा ॥४४॥ [N

---

१. प्र–०पर्वतैर्मिश्रान् । अ–शङ्खभेरीरवैर्मिश्रान् । २ म–नादित ॥ ३. य म प्र ल$_1$ ल$_2$ अ–०नचयोपमाः । ४. फ–संपूज्याभिप्र । अ–संप्रपूज्य प्रत० । ५. म–नालि ॥ ६. फ–०वानां । ७. म–नालित । ८. च–गुहाश्चा० । ९. रा य–विपुलानि च ॥ १०. फ रा–चापि रम्या० । य म प्र ल$_1$ ल$_2$–चातिरम्याणि । ११. अ–विविधांश्चित्रान् । १२. प्र ल$_1$ ल$_2$–विपुलानि ॥ १३. आ–कन्दराद्रि० । रा य–०खिलैरानपि । १४. आ–स्वच्छंदरत० । ल$_1$–स्वरक० । म–०न्दकृतव० । १५. म–रावणादपि । १६. फ–पृथक् ॥ १७. अ–०मानय । १८. रा–०स्तमयमा० । प्र–०क्षंस्तथा । १९. फ–०न्वारिय० । अ–०न्तराश्रयः ॥ २०. रा य म प्र ल$_1$ ल$_2$–०क्षये मंद० । २१. अ–०दिप्रमास्त्रिकोत्तमुपागमत् ॥ २२ ल$_1$–अथ क्री० । ल$_2$–अथ क्रीडाः प० । २३. फ–स्थानं समाश्रित्य । अ–स्थानमुपाश्रित्य ॥

अशोक-वनिकायां च विहगानां प्र-धावताम् ।
N] संघे-शोऽभूत् महान् शब्दो गवाम् इव महा-व्रजे ॥४५॥ [N
ततो राज्यां प्र-वृत्तायां त्वरन् इव कपिस् तदा ।
N] बहु-प्रकारं निश्चित्य सीताम् इहैव (?ना) मन्यत ॥४६॥ [N
इयं हि सीता भार्यैषा भवित्री सु-दृढाऽऽत्मनः ।
N] पत्नी रामस्य दयिता रोहिणी शशिनो यथा ॥४७॥ [N
स तु छन्न-वपुर् भूत्वा चक्षुषा वि-लोकयन् ।
N] अव-लोक्य च तेजस्वी जहर्ष च ननन्द च ॥४८॥ [N
इयं हि सीता जनकाऽऽत्म-जा ध्रुवं
भवत्य् अवश्यं मम हर्ष-वर्धिनी ।
यतोऽन्तैर्-आत्मा मम हृष्ट-रूपः
३३] सिंधुर् यथा चन्द्रमसोदितेन ॥४९॥[14] [३३
अस्या हि पुष्पाऽव-नताऽग्र-शाखाः
शोकं दृढं सं-जनयन्त्य् अ-शोकाः ।
हिम (?दिन) व्य्-अपाऽयेन सहस्र-रश्मितः

---

१. आ अ फ च–॰कवनिकामेव । २. फ–सद्संशोभूम्महाशब्दो ॥ ३. आ फ अ–व्यतीतायां । ४. अ–त्वरन्कोपिवास्तदा । ५. फ–बहुप्रकारान्॰ । अ–बहुप्रकारैर्॰ । ६. रा ब म प्र ल$_{1}$ ल$_{2}$–सीतां तत्रैव नान्यतः । अ–सीताभित्यमन्यत ॥ ७. फ–च । ८. फ–नान्यैषा ॥ ९ रा घ च म प्र ल$_{1}$ ल$_{2}$–स ता । अ–तरु॰ । १०. फ च म–व्यवलोकयन् । रा घ प्र ल$_{1}$ ल$_{2}$–व्यवलोकयत् । ११. अ–तामालोच्य । १२. आ च म प्र ल$_{1}$ ल$_{2}$–ननाद ॥ १३. च ब म प्र ल$_{1}$ ल$_{2}$–तथान्त॰ । अ–जातोक्ष॰ । १४. फ च घ प्र ल$_{1}$ ल$_{2}$ अ–॰मसोदयेन ।

१५. आ–क्षितिक्षमा पुष्करसन्निभाक्षी या रक्षिता राघवलक्ष्मणाभ्याम् ।
सा राक्षसीभिर्विकृतेक्षणाभिः संरक्ष्यते संप्रति वृक्षमूले ॥

N]          सम्-उत्थितो दृष्टि-हरः शशांऽकः॥५०॥[1] [३०

इत्य् एवम् अर्थं कपिर् अन्व्-अवेक्ष्य
          सीतेयम् इत्य्-एव नि-विष्ट-बुद्धिः ।
. सं-श्रित्य तस्मिन् नि-पसाद वृक्षे
३५]          वली हरीणाम् ऋषभस् तपस्वी ॥५१॥[2] [३१

इत्यार्षे रामायणे सुन्दरे-काण्डे सीताऽन्वेषणो नाम
ऐकादशः सर्गः ॥ ११ ॥

---

रा च ध म प्र ल$_1$ ल$_2$-कोशेष्वयमधिकः पाठश्च विशेषः ॥

१. आ-हिमहतनलिनीव नष्टशोभा व्यसनपरंपरयानुगम्यमाना ।
सहचररहितेव चक्रवाकी जनकसुता कृपणां दशां प्रपन्ना ॥

२.—४५-तमश्लोकादारभ्य सर्गसमाप्तिं यावच्छ्लोकेषु केषुचित्कोशेषु परस्परं व्यत्ययो दृश्यते ॥ ३. फ—०काण्डे उद्योगे । ४. फ—सीतापरिज्ञानं । अ—सीतापरिज्ञानो । ५. म—त्रयोदशः ॥

ततः कुमुद-खण्डाऽऽभं निर्मलं निर्मलः स्वयम् ।
N] प्र-जगाह नभश् चन्द्रो हंसो नीलम् इवोदकम् ॥१॥ [१

साचिव्यम् इव कुर्वाणः प्रभया निर्मल-प्रभः ।
N] चन्द्रमा रश्मिभिः शीतैः सिषेवे पवनाऽऽत्म-जम्॥२॥ [२

स ददर्श ततः सीतां पूर्ण-चन्द्र-निभाऽऽननाम् ।
N] शोक-भारैर् उप-न्यस्तां भारैर् नावम् इवाऽम्भसि॥३॥ [३

N] दिदृक्षमाणो वैदेहीं हनुमान् मारुताऽऽत्म-जः ।
२३उ] स ददर्शाऽविदूर-स्था राक्षसीर् घोर-दर्शनाः ॥४॥ [४

२४उ] एकाऽक्षीम् एक-कर्णां च कर्ण-प्रावरणां तथा ।
२४पू] अ-कर्णां शंकु-कर्णां च मस्तकोच्छ्वासि-नासिकाम्॥५॥ [५

अति-कायोत्तमाऽङ्गी च तनु-दीर्घ-शिरो-धराम् ।[६

---

१. प्र-कुमुदषडाभ । ल$_1$ म फ च अ-कुमुदखंडाभां । २. प अ-निर्मलो निर्मल. । रा ल$_1$, ल$_2$ ब प्र म-निर्मलांशुधरः । च-निर्मल निर्मल । ३. ब-प्रजगाह । फ-प्रजगाम । अ-विजगाह ॥ ४. रा-साचिव्यमपि ॥ ५ अ-पूर्णचद्र प्रभाननम् । आ-पूर्णचंद्रप्रभाननाम् । ६. म शोकभारैरभ्यस्ता । रा-शोकभारैरिव न्यस्ता । ७. अ-भारैर्नावमिवार्णवे ८ अ-दिदृक्षमाणेवसरे । ९. फ रा म-पवनात्मज । १०. आ रा च म अ-स ददर्श विदूरस्थो । प्र-स ददर्श च दूरस्थो । ११. अ-राक्षसा घोरदर्शना. ॥ १२. ब-ददर्श विकृतास्तत्र राक्षसीः कपिकुञ्जरः । १३. फ रा म ल$_2$ अ-एकाक्षीमेककर्णां च । वं-एकाक्षीश्चैककर्णांश्च । १४. रा म-प्रावारणा । घ-प्राकारणा । च-प्रावणता । ल$_2$ अ-प्रावरण । १५. बं-त्रिकर्णां, शंकुकर्णांश्च । रा-भकर्णां शंकुकर्णा । १६ रा म च-लम्बकर्णां विकर्णिकाम् । न दा फ-मस्तकाच्छ्वासनासिकाम् । आ-मस्तकोच्छासनासिकाम् । घ-लम्बकर्णीरकर्णिरा. । १७ प्र ब ल$_1$, ल$_2$-नास्ति । १८. आ-स्वातिकायोत्तमांगीश्च । फ-भुतिकायोत्तमांगीश्च । च-अतिमात्रोत्तमांगाश्च ।

२५] मं(ईस)स्त-केशीं ध्वस्त-केशीं केश-कंबल-धारिणीम् ॥६॥ [६

२६पू] लंबं-कर्ण-ललाटां च लंबोदर-पयोधराम् ।

N] लंबोष्ठी चिबुकोष्ठीं च लंबाऽऽस्यां लंब-जानुकाम् ॥७॥ [७

२८उ] ह्रस्वां दीर्घां च कुब्जां च वि-कटां वामनां तथा ।

२६उ] करालां लंब-वक्त्रां च पिङ्गाऽक्षीं वि-कृताऽऽननाम् । [८

N] गो-कर्णी हस्ति-कर्णी च हय-कर्णी तथाऽपराम् ॥८॥ [११उ

दुर्-मुखीर् वृक-वक्त्राश् च शिवाश् चाऽशिव-दर्शनाः । [N

N] हय-वक्त्रास् तथा घोरा महिषोष्ट्र-मुखीस् तथा ॥९॥

२२पू] गजोष्ट्र-हय-पादीश् च नि-खात-शिखरोपमाः । [१०

२४पू] एक-हस्तैक-पादीश् च खर-कर्णीर् अ-कर्णिकाः ॥१०॥ [११पू

---

१. म रा य-ध्वस्तकेशीं० । रा ल१ म प्र य ल२-ध्वस्तकेशीं लंबकेशीं ॥ २. फ-लंबकर्णललाटाश्च । अ-लंबकर्णललाटां चैव । य-पृथुकर्णललाटाश्च । ३. फ य-लंबोदरपयोधराः । रा च ल१ म प्र य ल२-लंबाधरपयोधराम् । ४. म-बिंबकोष्ठीं । द्रा-चुबुकोष्ठीं । ५. फ-लंबजानुकीम् ॥ ६. आ रा च ल१ म ल२-ह्रस्वा दीर्घाश्च कुब्जाश्च । फ-ह्रस्वा सुदीर्घा कुब्जाश्च । य-ह्रस्वा दीर्घा च कुब्जा च । य-ह्रस्वा दीर्घास्तथा कुब्जा । ७. आ रा च म ल१ य-विकटा वामनास्तथा । यं-विकटा वामना तथा । ८. आ रा च ल१ म प्र य ल२-कराला लंबवक्त्राश्च । फ-करालभग्नवक्त्राश्च । ९. आ-पिंगाक्षा विकृताननाः । फ रा च ल१ म य-पिंगाक्षीर्विकृताननाः । १०. रा च ल१ म प्र य-गोकर्णी हयकर्णी । ल२ द्रा-गोकर्णीहयकर्णीश्च । अ-गोकर्णी हयकर्णी० । ११. अ-हस्तिकर्णी । फ-यमकर्णी तथा० । रा ल१ म प्र य-हस्तिकर्णी । च द्रा-०कर्णीस्तथापराः ॥ १२. आ-दुर्मुखी शूपकर्णीश्च । १३. रा म-शिवाश्च शिव० । च ल१-शिवाशिव० । ल२-शिवा अशिव० । १४. फ अ-नास्ति ॥ १५. आ फ-गजोष्ट्री० । रा च ल१ म य प्र ल२-गजोष्ट्रहयपादाश्च । अ-०पादांश्च । १६. आ-निखातशिखरोपमाः । म-विशालविशिखो० । यं-शार्दूलमहिषाननाः । १७. च-०पादांश्च । आ रा य म प्र ल१ ल२-०पादाश्च । १८. आ फ च-०कर्णीम्-कर्णिकाम् । रा-खरकर्णीमकर्णिकाः ॥

N] अ-नासां चाऽति-नासां च हय-नासां तथाऽपराम्।[1]
३२उ] गज-सन्निभ-नासां च तिर्यग्-नासां द्रु-नासिकाम्[2][3]॥११॥[१२
N] हस्ति-पादाम् अ-पादां च गो-पादां पाद-चूलिकाम्[4][5]। [१३पू
चतुष्पादाम् अ-पादां च बहु-पादाम् अ-पादिकाम्[6][7]॥१२॥[N
३०] अति-मात्र-शिरो-ग्रीवां अति-मात्र-कुचोदरीम्[8]। [१३उ
अति-मात्राऽऽस्य-नेत्रां च दीर्घ-जिह्वां नखीम् अपि[9]॥१३॥
३१] अजा-मुखी हस्ति मुखी[10] गो-मुखी सूकराऽऽननाम्[11]। [१४
गो लांगूल मुखी चैव शृगाल-सदृशाऽऽननाम्[12] ॥१४॥[13] [N
३२पू] हयोष्ट्र[14]-खर-वक्त्राश् च राक्षसीर् घोर-दर्शनाः[15]।
२७पू] शूल-मुद्गर-हस्ताश् च क्रोधनाः कलह प्रियाः ॥१५॥[१६
३३उ] मांस-शोणित-दिग्धाऽङ्गीर्[16] मांस-शोणित-भोजनाः[17]। [१७पू

---

१ ल₁-अनासा अतिनासा च हयनासा तथापरा। घ-अतिनासाश्च तिर्यङ्नासा विनासिका। २ फ-अपसन्निभनासा च। रा च ब म प्र ल₁ ल₂ गजसन्निभनासाश्च। ३ फ-तिर्यग्नासान्कुनासिकाम्। रा ब म प्र ल₁ ल₂-तिर्यङ्नासाः कुनासिका। च-तिर्यङ्नासा. कुनासिकाम्॥ ४ रा- हस्तिपादा सुपादा च। च-०पादामपादाश्च। अ-हस्तिपादा च गोपादामपादा। दा-हस्तिपादा महापादा गोपादा। ५ आ-पादमूलिकाम्। च रा ब प्र म ल₁ ल₂-पादभूषिताम्। दा-पादचूडिका। ६ आ-चतुष्पादीमपादीं। फ अ-चतुष्पादीं द्विपादीं। रा च म प्र घ ल₁ ल₂-चतुष्पादो द्विपादा। ७ आ-बहुपादीमपादिकाम्। फ-त्रिपादीं चाप्यपादिकाम्। अ-०बहुपादीं त्रिपादिकां। घ-चतुष्पादी द्विपादीश्च पृथुपादीस्त्रिपादिका॥ ८ रा-०कृशोदरीन्। घ-०पयाधरा। दा-०कुचोदरी.। फ-पूर्वे पठित (अत्र नास्ति)॥ ९ फ-०जिह्वामुखीमपि। ब-०जिह्वनखीमपि। अ-०जिह्वाननास्तथा॥ १० फ-हय-मुखी। ११ अ-शूकराननाम् १२ रा ल₁ म च ल₂-सृगाल०। १३ अ-नास्ति॥ १४ ब-हयोष्ट्र०। ब-तरक्षु०। १५ म-राक्षसीर्दीर्घदर्शना। घ-राक्षसी भीमविक्रमा॥ १६ आ-०दिग्धाङ्गी। अ-मेदशोनितदिग्धाश्चो। १७. आ-०भोजना। रा-०माजना।

३४उ] अ-नासिकाश् च सं-वृत्ताः सर्व-भक्षाः सु-दारुणाः॥१६॥ [N
नाना-विकृत-वेषैश् च नाना-संस्थान-संस्थिताः ।
N] इत्येताश् च तथाऽन्याश् च राक्षसीर् विकृताऽऽननाः॥१७॥ [N
तां ददर्श कपिर् हृष्टो रोम-हर्षण-तत्परः ।
३५] स्कन्ध-वन्तम् उपाऽऽसीनः परि-पीड्य वनस्पतिम्॥१८॥ [१७उ
तस्याऽधस्ताच् च तां देवीं राज-पुत्रीम् अ-निन्दिताम्।
N] लक्षयामास लक्ष्मीवान् हनुमान् जनकाऽऽत्म-जाम्॥१९॥ [१८
निष्-प्रभां शोक-संतप्तां दीनां लुलित-मूर्ध-जाम् ।[14]
N] क्षीर्ण-पुण्यां च्युतां भूमौ तारां मन्द-प्रभाम् इव॥२०॥ [१९
चारित्र-व्यपदेशाऽऽढ्यां भर्तृ-दर्शन-दुर्-गताम् ।
N] भूषणैर् उत्तमैर् हीनां भर्तृ-वात्सल्य-भूषिताम्॥२१॥ [२०

१. आ—अनासिकाश्च संहृताः। फ—अनासिकाश्च संवृताः। च—अनासिकास्त्व-सम्वृताः। रा ल$_1$ म प्र—अनासिकास्तनासाश्च। घ—अनासिकास्तनासाश्च। अ—अना-सिकाश्च। २. आ—सर्वभक्षाः सुदारुणाः। फ—सर्वभक्षीः। प्र य ल$_1$—सर्वभक्ष्याः। अ—सर्वभक्षः॥ ३. रा च ल$_1$ म प्र घ ल$_2$—वेशाश्च। ४. फ—॰संस्थानसंस्थिताः। ५. ल$_2$—॰घोरदर्शनाः। ६. आ—चास्ति॥ ७. आ ल$_2$—तां ददर्श। घं—ता दृष्ट्वा। ८. दा घ—कपिश्रेष्ठो। घं—वानरो हृष्टो। ९. घं—॰हर्षसमुद्गतः। दा—॰हर्षणदर्शनाः। १०. फ—स्कंधवंतमुदासीनः। रा—स्कन्दवन्तमुपासीनाः। ल$_2$—स्कन्दवंतमु॰। म घ ल$_2$ दा—स्कन्दवन्तमुपासीनाः॥ ११. फ—तस्याधस्तात्स। अ—तस्याधस्ता च॥ १२. आ फ च रा—निःप्रभां। १३. फ—मलिन॰। आ [illegible] च घं म ल$_1$ ल$_2$—ऊलित॰। १४. घं—पाठे १८ तमे सर्गेऽत्र आरभ्य सीतान्व-द्बुधा वर्णेपत्यपि अक्षरपाठेन साम्यं नैति। दा—निष्प्रभां शोकसंतप्तां मलसंकुल-मूर्धजाम्। १५. प्र घ—क्षीणां पुण्यच्युतां। अ—क्षीणपुण्ययुतां। आ—क्षीणपुण्यां च तां। १६. अ—नंदप्रभामिव। दा—निपतितामिव॥१७ ल$_1$—चारित्र्य वपदेशाढ्यां। प्र घ ल$_2$—चारित्र्य॰। अ—॰व्युपदेशाढ्या। १८. आ—॰दुर्गमाम्। १९. प्र घ—भूषणैरुत्तमां हीनां। २०. दा—॰भूषणाम्॥

राक्षसाऽधिप-संरुद्धां बन्धुभिश् च विना-कृताम्[1] ।
N] वि-यूथां सिंह-संरुद्धां वने गज-वधूम् इव ॥२२॥ [२१
. चन्द्र-लेखां पयोदाऽन्ते शारदाऽभ्रैर् इवाऽऽवृताम् ।
N] क्लिष्ट-रूपाम् अ-संस्पर्शाम् अ-युताम् इव वल्लकीम्॥२३॥[२२
सीतां भर्तृ-हिते युक्ताम् सु-युक्तां रक्षसां वशे ।
N] अशोक-वनिकोद्देशे शोक-सागर-संप्लुताम् ॥२४॥ [२३
ताभिः परि-वृतां तत्र स-ग्रहाम् इव रोहिणीम् ।[14]
३६] ददर्श हनुमान् देवीं लतां कुसुमिताम् इव ॥२५॥ [२४
सा मलेन च दिग्धाऽङ्गी वपुषा च वि-भूषिता ।
N] पद्मिनी पङ्क-दिग्धेव न भाति च वि-भाति च ॥२६॥ [२५

---

१. ल₂–त्रुटितः पाठः । अ–बन्धुभिश्च निराकृताम् । २. ल₂–त्रुटितः पाठः । ३. फ–नास्ति ॥ ४. अ–चन्द्ररेषां । दा–चन्द्ररेखां । ५ आ–पयोदातुः । च–पयोदांतां । ल₁–पयोदांतं । ६. प्र ब ल₂–क्लिष्ट० । अ–क्लिश्य० । ७. प्र–०संस्पर्शा संयुक्ता० । ब अ–०संस्पर्शा सयुक्ता० । ल₂–०संस्पर्शा मयुक्ता० । ८. आ च म दा–वल्लकीम् । ल₁–वारुणीम् । प्र–पद्मिनीम् । ल₂–संदिग्धताम् । अ–सल्लकीं ॥ ९. आ–स तां० । फ–स तां भर्तृहिते युक्तामयुक्तां । दा प्र–सीतां भर्तृहिते युक्तां संयुक्तां । अ–सीता भर्तृहिते नियुक्ता । ब ल₂–सीता । १०. फ–रक्षसां वसे । रा च म प्र ब ल₂–राक्षसीवधे । ल₁–०मजे । अ–रक्षसां वशे । ११. फ रा–०वनिकादेशे । दा–०वनिकामध्ये । १२. फ–०मप्लुताम् । रा म प्र ब ल₂–०संयुताम् । ल₁–०सवृताम् । दा–०मावृताम् ॥ १३. च–सग्राहामिव । १४. ब–नास्ति पाठ. । १५. फ रा च म–लतामकुसुमामिव । ल₁–लतां सकुसुमामिव । प्र–लतासक्तसुरामिव । ब–लतां सुकुसुमामिव ॥ १६. स मलेन । १७. दा–वपुषा चाप्यलंकृता । १८. ल₁ ब–पद्मदिग्धेव । प्र–परिदिग्धेव । ल₂–मलदिग्धेव । १९. आ भाति च प्रविभाति च । फ–न भाति न विभाति च । रा–न विभाति न विभाति च । च–भाति चाप्रतिभाति च । ल₁ म प्र ब–न विभाति विभाति च । ल₂–भाति च प्रतिभाति च । अ–न भीति च विभाति च । दा–विभाति न विभाति च ॥

श्लक्ष्णेन मलिनेनाऽथ वसनेन वराऽऽननाम् ।
N] सं-वृतां मृग-शावाऽक्षीं ददर्श हनुमान् कपिः ॥२७॥ [२६
तां देवीं दीन-वदनाम् अ-तेजस्त्वम् उपाऽऽगताम् ।
N] रक्षितां स्वेन वृत्तेन सीताम् अ-सित-लोचनाम् ॥२८॥ [२७
तां दृष्ट्वा हनुमान् सीतां मृग-शाव-निभेक्षणाम् ।
N] मृग-कन्याम् इव त्रस्तां वीऽऽक्षमाणां समंततः ॥२९॥ [२८
दहंतीम् इव निः-श्वासैर् वृक्षान् पल्लव-कोमलान् ।
N] मरीचिम् इव शोकस्य दुःखस्योर्मिम् इवोत्थिताम् ॥३०॥ [२९
तां श्यामां सुवि-भक्ताऽङ्गीं निर्-आभरण-शोभिताम् ।
N] प्र-हर्षम् अ-तुलं लेभे मारुतिः प्रेक्ष्य मैथिलीम् ॥३१॥ [३०
हर्ष-जानि च सोऽश्रूणि तां दृष्ट्वा मदिरेक्षणाम् ।

---

१. फ–मलिनेन च श्लक्ष्णेन । अ–मलिनेन च पीतेन । २. रा च ल$_1$ म प्र घ–वसनेन वरांगनाम् । ल$_2$–दमनेन वरांगनाम् । द्रा–मलिनेन तु वस्त्रेण परीक्लिष्टेन भामिनीम् । ३. रा च ल$_1$ म प्र घ ल$_2$–संश्रितां । ४ आ–नीरजाक्षाभां । अ द्रा–मृगसावाक्षीं ॥ ५. घ–०वदनां सतेजस्त्वमुपागतं । म–०वदनां सतेजस्त्वमुपागतां ६. ल$_1$ प्र घ–रूपेण । द्रा–शीलेन ॥ ७. आ फ–निशाम्य । ८. फ–मृगशावक० । ल$_2$–मृगशाव० । ९. घ–वीक्ष्यमाणां ॥ १०. आ–दहतीमिव । ११. फ च रा प्र म घ ल$_1$ ल$_2$ अ–कोमलपल्लवान् । १२. द्रा–संघातमिव शोकानां । आ रा च प्र घ ल$_1$ ल$_2$–मरीचिमिव शोकस्य । १३. आ रा च ल$_1$ म प्र अ ल$_2$–सोमस्योर्मि० । अ–सोमस्याग्नि० । फ–०र्मिविक्षिप्ताम् । रा ल$_1$–०स्योर्मिरिवोत्थिताम् ॥ १४. फ–श्यामां च । द्रा–तां क्षमां । १५ आ फ रा च ल$_1$ म प्र घ रा–विनाभरण० । अ–नानाभरण० । १६. आ–महर्षमतुलं । १७. रा च ल$_1$ म प्र घ ल$_2$–जानकीम् ॥ १८. च–हर्षजामिव साश्रूणि । रा म प्र–हर्षजानि च सोश्रूणि । ल$_2$–हर्षजामिव सोश्रूणि । अ–हर्षजानि च सुश्रूणि । १९. फ–ह्यसितेक्षणाम् । २०. ल$_1$ घ–नास्ति ।

N] मुमोच[1] हनुमांस् तत्र नमस्-कुर्वंश् च जानकीम्[2] ॥३१॥[3] [३१
नमस्-कृत्य च[4] रामाय लक्ष्मणाय च वीर्यवान्[5] ।
सीता-दर्शन-संहृष्टो[6] हनुमान्[7] निर्-वृतोऽभवत्[8] । [३२
N] निर्-वृत्तं[9] राघवस्यार्थे मेने च स-फलं श्रमम् ॥३२॥ [N

इत्यार्षे रामायणे[10] सुन्दर काण्डे सीता-दर्शनो[11]
नाम द्वादशः[12] सर्गः ॥१२॥

---

१. च म छ₂—मुमोद । अ—मुमुचे । २ फ—नमस्कृत्य च जानकीम् । अ—नमस्कुर्वीन्द्र जानकीन् । रा—नमश्चक्रे च राघवम् ॥ ३ ल, प्र व—नास्ति । ४. द्रा—नमस्कृत्या स । रा प्र व—नमस्कृत्य स । छ,—नमस्कृत्य च । ५ फ—वीर्यवाल्लक्ष्मणाय च । ६ आ—सीतादर्शन॰ । म—सीतां ददर्श सं॰ । ७. म च प्र म य ल, छ₂—हनूमान् । द्रा—हनुमान् संहृष्टोऽभवत् । ८. आ च प्र म य ल रा—निर्वृतो । ९. छ,—द्रुमत् ॥ १०. रा—श्रीरामायणे । ११ आ—सीतादर्शनो । रा च छ, म प्र य छ₂—सीतादर्शन । अ—अशोकवनिकाप्रवेशो । १२. छ, म—चतुर्दशः ॥

तथा वि-प्रेक्षमाणस्य वनं पुष्पित-पाद-पम् ।
N] वि-चिन्वतश् च वैदेहीम् अर्ध-रात्रं प्र-चक्रमे ॥१॥ [१

षडंग-वेद-विदुषां क्रतु-प्रवर-याजिनाम् ।
N] शुश्रावे ब्रह्म-घोषान् स संत्रिणां ब्रह्म-रक्षसाम् ॥२॥ [२

N] एतस्मिन्न् अन्तरे भूयः स्त्रीभिः सह मदोत्कटः । [N
४पू] स्तुति-मंगल-वादित्रैः शब्दैः श्रोत्र-मनो-हरैः ॥३॥

N] व्य् अबुध्यत महा-बाहुर् दश-ग्रीवो महा-बलः । [३
५पू] वि-जृम्भंश् च महा-तेजा राक्षसेन्द्रो महा-मनाः ॥४॥ [४पू

N] प्र-पुष्पिताऽग्र-शिखरः कैलास इव मूर्तिमान् । [N
५उ] दिव्य-माल्याऽम्बर-धरो वैदेहीम् अनु-चिन्तयन् ॥५॥ [४उ

भृशं नि-युक्तम् तस्यां हि मदनेन मदोत्कटः ।
६] न स तं राक्षसः कामं शशाकोऽऽत्मनि गूहितुम् ॥६॥ [५

---

१. रा ल$_1$ ल$_2$-पि । आ-०ध्य० । २ च-०च० । ३. अ-मां । ४. अ-शुश्रावे । ५. च रा प्र य म ल$_1$ ल$_2$ अ-०षं । ६. प्र-च । ७. फ-रात्रौ वै । च-सवृणां । रा य ल$_1$-मंत्रिणां । अ आ-विमाणां ॥ ८. आ च ल$_1$-भुति० । फ-स्त० । ९. आ फ च ल$_2$-स्रोत्र० । य ल$_1$-०मनोरमैः । १०. प्र य म ल$_1$-नास्ति ॥ ११. रा ल$_2$-प्रा० अ-अबुध्यत । १२. फ-०तेजा । १३. आ च रा प्र य म ल$_1$ ल$_2$-प्राबुध्यत । फ-०धजृ० । अ-विजि-जृम्भ । १४. आ च रा प्र य म ल$_1$ ल$_2$-यथाकालं । १५. च रा प्र य म ल$_1$,ल$_2$-महाद्यबलः । अ-महाबलः । १६. प्र य म ल$_1$-नास्ति ॥ १७. फ रा य म ल$_1$-सु० । य ल$_1$-सुपुष्पितांगशिखरः । च-०शिखैः । १८ अ-०ध्याम्बर० ॥ १९. आ-भृशं । २०. म ल$_2$-महो० । २१. आ-०कात्मनिगृहितुम् ॥ २२. अ-न शशाकात्मनः काममागतं विनिगूहितुम् रा प्र य ल$_1$ ल$_2$-नास्ति ॥

७उ] स सर्वाऽऽभरणैर् युक्तो बिभ्रच् छ्रियम् अन् उत्तमाम् । [६पू
अ-शोक वनिकाम् एव विवेश रुचिरे-द्रुमाम् ॥७॥ [९उ
८] तां नगैर् वि विधैर् युक्ता सर्व-पुष्प-फलोप-गैः । [६उ
वृतां पुष्करिणीभिश् च वि-विधैर् बहुभिर् द्रुमैः ॥८॥
९] सदा-मदैश् च विहगैर् वि-चित्र-मधुर-स्वरैः । [७
१२उ] जगाम मदनोन्मत्तो दश ग्रीवो महा-बलः ॥९॥
१४पू] काञ्चनीर् दीपिकाश् चित्रा जगृहुस् तत्र योषितः । [११पू
ईहामृगैश् च वि विधैर् वृतां पद्म-वनैस् तथा ॥१०॥
१०उ] वीथीं स-प्रेक्ष्यमाणाश् च मणि काञ्चन-तोरणाम् । [८
११पू] नाना-मृग गणाऽऽकीर्णा फलैः प्र पतितैर् वृताम् ॥११॥ [९पू
N] वृक्षैर् नीलाऽभ्र-सकाशैः सुवि-मक्ताऽन्तरैः शुभैः । [४

---

१ घ ल$_1$--०व । २ रा-स महाद्रु० । प्र घ ल$_2$-स भृशद्रु० । म-स बहुद्रु० । ल$_1$-विकसद्रु० ॥ ३ च रा प्र घ म ल$_1$ ल$_2$--०र्जुष्टा । ४ रा प्र म-०स्वनै । ५ अधिक पाठ-फ अ-महामृगैश्च* विविधैर्वृता पद्मवनै-स्तथा । वीज्य†सप्रेक्षमाणश्च मणिकांचनतोरणैः । नानामृगगणाकीर्णा फलै प्रपतितैर्वृता । वृक्षैर्नीलाभ्रसकाशै सुविमकान्तरै शुभै ॥ समभूमिलतारम्या दिव्या चैत्ररथोपमाम् ॥ ६ फ--०का विश्रा । ७ रा प्र घ म ल$_1$ ल$_2$-पणीमृ० । ८ रा प्र घ म ल$_1$ ल$_2$--०धैरशोकवनिकां वृताम् । च--०नामिव ॥ ९ फ-नास्ति । १० च-वाप्यः । रा घ प्र म ल$_1$-ल$_2$ अ-स वापीं प्रेक्षमाणश्च । ११ अ-पर्णैश्च पतितैस्तथा । १२ फ-नास्ति । १३ फ च रा प्र घ म ल$_1$ ल$_2$-समै ॥

---

*--अ-ईहामृगैश्च ।

†--अ-वीथी० ।

१०५] समं-भूमि-तलां रम्यां दिव्यां चैत्र-रथोपमाम् ॥१२॥ [N
अंगनाः शत-मात्रं तु तं व्रजंतं समन्व् अयुः ।
१३] महेन्द्रम् इव पौलस्त्यं देव-गंधर्व-योषितः । [१०७
१४७] वाल-व्यजन-हस्ताश् च तथाऽन्याः पृष्ठतोऽन्वयुः ॥१३॥ [१२७
काचिद् रुक्म-मयं पात्रं पूर्णं पानस्य भामिनी ।
१५] दक्षिणा दक्षिणेनैव गृहीत्वा पाणिना ययौ ॥१४॥ [१३
राज-हंस-प्रतीकाशं छत्रं पूर्ण-शशि-प्रभम् ।
N] सौवर्ण-दण्डम् अपरा गृहीत्वा पृष्ठतो ययौ ॥१५॥ [१४
ततः काञ्ची-निनादं च नूपुराणां च निस्स्वनम् ।
१६] शुश्राव परम-स्त्रीणां स कपिर् मारुतात्मजः ॥१६॥ [२०
तम् अ-प्रतिम-कर्माणम् अ-चिन्त्य-बल-पौरुषम् ।
१७] द्वार-देशम् अनु-प्राप्तं ददर्श हनुमान् कपिः ॥१७॥ [२१

---

१. प्र–स विभूमिलतां । घ ल, ल₂–समभूमिलतां ॥ २. आ फ घ दा प्र स–अंगना । ३. अ–शतसंयुक्तं । ४. अ–अजन्तं च । ५. फ च–समन्वयात् । ६. अ दा–वालव्यंजनमन्याश्च । ७. अतः परमधिकः पाठः–आ फ–तालवृन्तानि चापरा । अपरा दर्शयन्मार्गं हस्तमालिंग्य दक्षिणम् । कांचनैरथ भृङ्गारैर्जहुः शलिलमग्रतः । मण्डलाग्रासिहस्ताश्च । ८. फ–नलिन्याः । दा–गृह्यान्याः । ९. फ दा–मयुः॥ १०. आ–काचिद्रुममयं । दा–काचिद्रममयीं स्थालीं पूर्णां । ११. फ–भाविनी । १२. आ–दक्षणा । वं–दक्षिणा दक्षिणैर् हस्तैर् । १३. आ फ च–काचिज्जग्राह पाणिना । अ–नारी जग्राह पाणिना । दा–तदा जग्राह पाणिना । वं–आदाय जग्मुरंगनाः । १४. अतः परमधिकः पाठो–ल₂–ततः काञ्चीनिनादं च नूपुराणां च निःस्वनम् ॥ १५. व–वासिन । १६. प्र–स्त्र० । व म ल, ल₁–सु०॥ १७. आ–०ता । १८. ल₁–पाणिना । १९. आ–०नादं । २०. आ–सु० । २१. अ–परमम् । २२. आ–कपिः मा० ॥ २३. अ–तं चा० । २४. अ–तद्देशम० । २५. अयं श्लोकः अ–कोशे द्विर्लिखितः॥

दीपिकाभिर् अनेकाभिः समन्ताद् अव-भासितम् ।
१८] गंध-तैलाऽव-सिक्ताभिर् ह्रियमाणाभिर् अग्र-तः॥१८॥ [२२
काम-दर्प-मदैर् युक्तं जिह्म-ताम्राऽऽकुलेक्षणम् ।
१९] समग्रम् इव कन्दर्पम् अप-विद्ध-शरासनम् ।[२३
२०पू] मथिताऽमृत-फेनाऽऽभं दधानं वस्त्रम् उत्तमम् ॥१९॥
निद्रा-मद-परीताऽऽस्यो रावणस्योत्तमाः स्त्रियः ।
N] अनु-जग्मुः पतिं वीरं घनं विद्युल्-लता इव ॥२०॥[१५
२३पू] ताभिः परि-वृतो राजा सु-रूपाभिर् महा-यशाः ।[२७पू
२४पू] क्षीबो वि-चित्राऽऽभरणैः शङ्कु-कर्णो महा-बलः ॥२१॥

१. आ फ च रा प्र व म ल१,ल२—स्त्रीभिश्च समलङ्कृतम्। २. च रा प्र व म ल१, ल२—०भिः प्री०। अ—०हृय०॥ ३. फ—०मदैर्युक्तै०। च ल२—मयैर्युक्तं। ४. फ—०जिह्म-तीव्रारुणेक्षम् । च—जृम्भूतं प्रारुणेक्षणम् । रा प्र व म ल१—०तं व्याकुलेक्षणम्। अ—०तं व्याकुलेन्द्रियम्। ५. आ—स मन्मथ इव। ६. आ—०भम-जरो । फ—०भमरजो। च अ—०भमजरं। ७. फ—दिव्यमु०। ल१ ल२—वस्त्रम-द्भुतम्। ८. अतःपरमधिकःपाठः—आ—स पुष्पमनुकर्पन्तमंशुकं स्रस्तमुत्तमम्॥ ९. फ च—०य। १०. रा प्र व ल१,ल२—नास्ति। ११. आ—तन्मृगद्विजसंघुष्टं प्रविष्टः प्रमदावनं। अ च रा—तं मृगद्विजसंघुष्टं प्रविष्टं प्रमदावनं॥ १२. अतःपरमधिकः पाठः—म—व्याविद्धहारकेयूरा रसामृदितकर्णिकाः । समागलितकेशान्ताः सस्वेदवदनास्तथा॥ पूर्णास्या मदशेषेण निद्रया च शुभाननाः। मण्डलामासिक्तस्ताश्च तथाऽन्याः पृष्ठतोऽन्वयुः॥ आ फ च म—तं वृक्षविटपालीनः प्रेक्ष-पत्रपुटावृतः। आ फ च— अनुमानानि ज्ञानेन तामवेक्षत वानरः ॥ अवेक्षमाणाश्च ततो ददर्श कपिकुंजरः । रूपयौवनसम्पन्नां भूषणोत्तमभूषिताम् ॥ समीपमुपगच्छन्तं निधातुमुपचक्रमे ॥ १३. रा

१. फ—नलिन्यः। २. च—नद्वृक्ष०। म—०वृक्ष०। ल१—तं वृक्ष०।
३. फ—०मीनं। ४. फ—प्रेक्ष पर्णशताव़ृतः । च—प्रेक्ष्य पत्रपुटैर्वृतः। म—०पत्रपुष्पघना वृतः। ५. फ—अनुमानि वै जज्ञे । च—अनुमानाभिज्ञानेन ।
६. फ—समवेक्षत । च—समवोक्षत। ७. च—अवेक्षमाणश्च।

तेन विश्रवसः पुत्रः स दृष्टो राक्षसाऽधिपः । [२८
२५] वृतः परम-नारीभिस् ताराभिर् इव चन्द्रमाः ॥२२॥
[3]तं निर्-ईक्ष्य महा-तेजास् तेजो-युक्तं महा-कपिः ।[4] [२९
२६] रावणोऽयं महा-बाहुर् इति सं-चिन्त्य वानरः ।
२७पू] अव-प्लुतो महा-वृक्षं हनुमान् मारुताऽऽत्म-जः ॥२३॥ [३०
N] स तथाऽप्य् उग्र-वेगस्य निर्-धूतस् तस्य तेजसा ।
२७उ] पत्र-गुह्योऽन्तरे सक्तो हनुमान् सं-वृतोऽभवत् ॥२४॥[13] [३
स ताम् अ-सित-केशाऽन्तां सु-श्रोणीं संहत-स्तनीम् ।
N] दिदृक्षुर् अ-सितोऽपाङ्गीम् उपाऽऽवर्तत रावणः ॥२५॥[15] [३

इत्यार्षे रामायणे सुन्दर-काण्डे रावण-दर्शनं
नाम त्रयोदशः सर्गः ॥१३॥

---

प्र ल$_1$-स्व० । १४. अतःपरमधिकः पाठः—फ अ म-मृगद्विजसंयुक्तं प्रविष्टं प्रमदावनम् । १५. आ च-क्षीवा । ल$_2$-क्षीणो । अ-धीरो । १६. आ-०भरणाः ॥ १. रा म-म ह । प्र व ल$_1$ ल$_2$-स हि । २. रा प्र थ म ल$_1$ ल$_2$-प्राविशद् ॥ ३. आ रा प्र थ म ल$_1$-तं दिदृक्षुर्म० । च ल$_2$-ता दिदृक्षुर्म० । आ फ-०तेजा । ४. फ-०मतिः । ५. अतःपरमधिकः पाठः-अ-रूपयौवनसम्पन्नो भूषणोत्तमभूषितः । ६. ल$_1$-रावणः । ७. फ-०तेजा ॥ ८. आ-स तथाप्युग्रतेजाः स्म । च रा प्र थ म ल$_1$-०तेजाः साधिर्० । ९. फ ल$_2$-नास्ति । १०. रा प्र थ म ल$_1$-०गोहा० । ११. फ च रा प्र थ म ल$_1$-सक्तो । अ-रक्तो ॥ १२. फ च-०न्० । १३. ल$_2$-नास्ति ॥ १४. आ अ-स तामसि० । फ-अथो असि० । व-सभाम० । १५. आ-०र्गी उपावर्तत स० । रा प्र ल$_1$-०गीमपा० । च म-०र्गी समा० । अ-मुपापर्वत ॥ १६. ल$_2$-नास्ति । १७. फ-०दर्शनो । १८. म ल$_1$-पञ्चदशः ॥

---

८. फ-संपन्नं । ९. फ-भूषणोत्तमभूषितम् । च-भूषितोत्तमभूषिताम् । १०. फ-०मुपसंप्राप्तं विधातुमु० । म-०मुपसर्पन्तं विध्यातुमु० ।

६] संकल्प-हये-संयुक्तैर् यान्तीम् इव मनो-रथैः ॥७॥ [७
स्फुरन्तीं रुदतीम् एकां ध्यानेनोप-हतां भृशम् ।
७] दुःखेनाऽनु-गतां तत्र रामां रामम् अनु-व्रताम् ॥८॥ [८
८उ] वि-चेष्टमानाम् आ-विष्टां पन्नगेन्द्र-वधूम् इव ।
धूम्यमानां ग्रहेणेव रोहिणीं धूम-केतुना ॥९॥ [९
९] भूताम् इव कुले जाताम् आचारवति धार्मिके ।
पुनः संस्कारम् आ-पन्नां जाताम् इव सुदुष्-कुले॥१०॥ [१०
१०] सन्नाम् इव महा-कीर्ति श्रद्धाम् इव वि-मानिताम् ।[१२पू
१३उ] निष्-प्रभां पतितां भूमौ चन्द्र-लेखाम् इवाऽम्बरात्॥११॥[N
प्रज्ञाम् इव परि-क्षीणाम् आशां वि-निहताम् इव । [१२उ
११] आयतीम् इव वि-ध्वस्ताम् आज्ञां मति-हताम् इव ॥१२॥
N] दीप्ताम् इव दिशौ काले पूजाम् इव वि-नाशिताम् । [१३
१२पू] पद्मिनीम् इव वि-ध्वस्तां हत-शूरां चमूम् इव ॥१३॥[27] [१४पू

---

१. ल$_1$—॰ल्प॰ । २. च रा प्र व म ल$_1$ ल$_2$—यानैरिव ॥ ३. रा प्र व म ल$_1$ ल$_2$—गच्छन्तीं ॥ ४. फ—॰मानां विष्टां च । ५. फ—धूयमा॰। च—धूयमान आ॰ । रा प्र व म ल$_1$ ल$_2$—धूय॰ । ६. आ फ च रा प्र—॰णैव । ७. च—॰णी । ८. आ—धूम्र॰ ॥ ९. अ—सतामिव । आ—सूसता॰ । १०. च—आचारे मतिधा॰ । रा प्र—सुजातामिव । व म ल$_1$—सुजातामतिधा॰। ल$_2$—॰तामलजामतिधा॰। ११. प्र व म ल$_1$—॰र्मिको। अ—॰र्मिकैः। १२. अ—॰रसम्पूर्णां । १३. आ—सुदुःकुले ॥ १४. फ—छिन्नामिवोत्तमां कीर्त्तिं । १५. अ—॰रेखा॰ । १६. आ—॰परास् । च—॰थाम्बरे ॥ १७. आ फ रा प्र व म ल$_1$ ल$_2$—प्रज्ञामिव । १८. च रा प्र व म ल$_1$—प्रतिह॰ । १९. आ च—॰सिते । २०. आ—विध्य॰ । २१. फ च—॰णामुपक्षीणां निशामिव ॥ २२. रा प्र व म ल$_1$ ल$_2$ अ—मारिव ॥ २३. प्र व म ल$_1$ ल$_2$—॰शां । २४. आ—स्त्रा॰ । २५. रा प्र व म ल$_1$ ल$_2$—सहस॰ । २६. आ—वसू॰ ॥ २७. फ अ—नास्ति ॥

तस्मिन्न् एव ततः काले राज-पुत्री त्वं अ-निंदितां।
N] रूप-यौवन-संपन्नां(?न्नं) भूषणोत्तम-भूषितम् ॥१॥ [१
तत्र दृष्ट्वैव वैदेही रावणं राक्षसेश्वरम्।
१] प्राऽवेपत वराऽऽरोहा कदलीऽवाऽनिलाऽऽहता ॥२॥ [२
ओ-च्छाद्योदरम् ऊरुभ्यां बाहुभ्यां च पयोधरौ।[11]
२] उप-विष्टा विशालाऽक्षी रुदती वर-वर्णिनी ॥३॥ [३
दश-ग्रीवस् तु वैदेहीं रक्षितां राक्षसी-गणैः।
३] ददर्श सीतां दुःखाऽऽर्त्तां नावं मग्नाम् इवाऽर्णवे ॥४॥ [४
अ-संवृतायाम् आसीनां धरण्यां संशित-व्रताम्।
४] छिन्नां प्र-पतितां भूमौ लताम् इव वनस्पतेः ॥५॥ [५
मल-संदिग्ध-सर्वाऽङ्गीं मण्डनाऽर्हाम् अ-मण्डिताम्। [६पू.
५] अ-विशुद्ध-रजो-ध्वस्तां काञ्चनीं प्रति-माम् इव ॥६॥ [N
८पू.] दिव्येनैवाऽङ्ग-रागेण द्योतमानाम् अ-निन्दिताम्। [N
समीपं राज-सिंहस्य रामस्य विदिताऽऽत्मनः।

---

१. फ च-०मनिन्दिताम्। रा प्र य म ल$_1$ ल$_2$-मनिन्दिता। २. आ अ घ भ प्र रा ल$_1$ ल$_2$-०पद्मा। अत्र दा-यं द्र०। ३. फ-०णानाम०। ४. घ-०पितैः। आ अ फ म ल$_1$-०पिता॥ ५. आ फ च-न्नतः। ६. फ-राक्षसाधिपम्। ७. म-प्रवाते कदली यथा। अ-कदली वायुनाहता। ८. घ रा प्र य ल$_1$ ल$_2$-नास्ति॥ ९. फ अ-प्रच्छा०। १०. आ-पयोधरे। ११-च रा य प्र ल$_1$ ल$_2$-नास्ति। १२. अ-उपाविशद्॥ १३. अ-हरस्पतेः॥ १४. आ-भविशुद्धां रजो०। म-सुविशुद्धर०। प्र-अविश्वमरजो०॥ १५. अ-दिव्येन चांग०॥ १६. फ घ रा प्र य म ल$_1$ ल$_2$-राजराजस्य। अ-नरसिंहस्य॥

६] संकल्प-हर्ष-संयुक्तैर् यान्तीम् इव मनो-रथैः ॥७॥ [७
स्फुरन्तीं रुदतीम् एकां ध्यानेनोप-हतां भृशम् ।
७] दुःखेनाऽनु-गतां तत्र रामां रामम् अनु-व्रताम् ॥८॥ [८
८उ] वि-चेष्टमानाम् आ-विष्टां पन्नगेन्द्र-वधूम् इव ।
धूम्यमानां ग्रहेणेव रोहिणीं धूम-केतुना ॥९॥ [९
९] मृताम् इव कुले जाताम् आचारवति धार्मिके ।
पुनः संस्कारम् आ-पन्नां जाताम् इव सुदुष्-कुले॥१०॥ [१०
१०] सन्नाम् इव महा-कीर्त्तिं श्रद्धाम् इव वि-मानिताम् ।[१२पू
१३उ] निष्-प्रभां पतितां भूमौ चन्द्र-लेखाम् इवाऽम्बरात्॥११॥[N
प्रज्ञाम् इव परि-क्षीणाम् आशां वि-निहताम् इव । [१२उ
११] आयतीम् इव वि-ध्वस्ताम् आज्ञां प्रति-हताम् इव ॥१२॥[२२]
N] दीप्ताम् इव दिशं काले पूजाम् इव वि-नाशिताम् । [१३
१२पू] पद्मिनीम् इव वि-ध्वस्तां हत-शूरां चमूम् इव ॥१३॥[२४] [१४पू

---

१. ल$_{1}$—०फल० । २. घ रा प्र व म ल$_{1}$ ल$_{2}$—यानैरिव ॥ ३. रा प्र व म ल$_{1}$ ल$_{2}$—गच्छन्तीं ॥ ४. फ—०मानां विष्टां च । ५. फ—भूतमा०। च—धूयमान आ० । रा प्र व म ल$_{1}$ ल$_{2}$—धूय० । ६. आ फ च रा प्र—०मैव । ७. च—०णी । ८. आ—भूम्र० ॥ ९. अ—सतामिव । आ—सुरता० । १०. च—आचारे मतिषा० । रा प्र—सुजातामिव । व म ल$_{1}$—सुजातामतिथा०। ल$_{2}$—०तामलजामतिथा०। ११. प्र व म ल$_{1}$—०र्मिको। अ—०र्मिकैः। १२. अ—०रसम्भृतां । १३. आ—सुदुःकुले ॥ १४. फ—छिन्नामिवोत्तमां कीर्त्तिं । १५. अ—०रेखा० । १६. आ—०परात् । च—०वाम्बरे ॥ १७. आ फ रा प्र व म ल$_{1}$ ल$_{2}$—प्रजामिव । १८. च रा प्र व म ल$_{1}$—प्रतिह० । १९. आ च—०मिते । २०. आ—त्रिध्व० । २१. फ च—०णामुपक्षीणां निशामिव ॥ २२. रा प्र व म ल$_{1}$ ल$_{2}$ अ—नारिव ॥ २३. प्र व म ल$_{1}$ ल$_{2}$—०शं । २४. आ—रुजा० । २५. रा प्र व म ल$_{1}$ ल$_{2}$—पहत० । २६. आ—वसू० ॥ २७. फ अ—नाशित ॥

तस्मिन्न् एव ततः काले राज-पुत्री त्व् अ-निंदितां।
N] रूप-यौवन-संपन्नां(?न्नं) भूषणोत्तम-भूषितंम् ॥१॥ [१
तंत्र दृष्ट्वैव वैदेही रावणं राक्षसेश्वरम्।
१] प्राऽवेपत वराऽऽरोहा कदलीऽवाऽनिलाऽऽहता ॥२॥ [२
ओ-च्छाद्योदरम् ऊरुभ्यां बाहुभ्यां च पयोधरौ।
२] उप-विष्टां विशालाऽक्षी रुदती वर-वर्णिनी ॥३॥ [३
दश-ग्रीवस् तु वैदेहीं रक्षितां राक्षसी-गणैः।
३] ददर्श सीतां दुःखाऽऽर्त्तां नावं मग्राम् इवाऽर्णवे ॥४॥ [४
अ-संवृतायाम् आसीनां धरण्यां संशित-व्रताम्।
४] छिन्नां प्र-पतितां भूमौ लताम् इव वनंस्पतेः ॥५॥ [५
मल-संदिग्ध-सर्वाऽङ्गीं मण्डनाऽर्हाम् अ-मण्डिताम्। [६पू
५] अ-विशुद्ध-रजो-ध्वस्तां काञ्चनीं प्रति-माम् इव ॥६॥ [N
८पू] दिव्येनैवाऽङ्ग-रागेण द्योतमानाम् अ-निन्दिताम्। [N
समीपं राज-सिंहस्य रामस्य विदिताऽऽत्मनः।

---

१. फ च-०मनिन्दिताम्। रा प्र य म ल१ ल२-ह्यनिन्दिता। २. आ अ य म प्र रा ल१ ल२-०पद्या। अत्र दा-सं द०। ३. फ-०णानाम०। ४. य-०पितैः। आ अ फ म ल१-०पिता॥ ५. आ फ च-नतः। ६. फ-राक्षसाधिपम्। ७. म-प्रवाते कदली यथा। अ-कदली वायुनाहता। ८. च रा प्र य ल१ ल२-नास्ति॥ ९. फ अ-प्रच्छा०। १०. आ-पयोधरे। ११-च रा य प्र ल१ ल२-नास्ति। १२. अ-उपाविशद्॥ १३. अ-हरस्पतेः॥ १४. आ-भविशुद्धो रजो०। म-सुविशुद्ध०। प्र-अविपमरजो०॥ १५. अ-दिव्येन चांग०॥ १६. फ च रा प्र य म ल१ ल२-रामराजस्य। अ-नरसिंहस्य॥

स तां पति-व्रतां दीनां निर् आनन्दां तपस्विनीम् ।
१] स-कामो मधुरैर् वाक्यैर् इदं वचनम् अब्रवीत् ॥१॥ [१

मां दृष्ट्वा नाग-राजोरु गूहमाना ततम् ततः ।
२] अ-दर्शनम् इवाऽऽत्मानं भयान् नेतुं त्वम् इच्छसि ॥२॥ [२

रमये त्वां विशालाऽक्षि बहु-मन्यस्व मां प्रिये ।
N] सर्वाऽङ्ग-गुण-संपन्ने सर्व-लोक-मनो-हरे[11] ॥३॥ [३

नेह केचिन् मनुष्याऽद्यौ राक्षसाः काम-रूपिणः ।
३] व्यपसर्पतु ते सीते भयं मत्तः सम् उत्थितम् ॥४॥ [४

स्व-धर्मो रक्षसां भीरु सर्वथैव सनातनः ।
४] गमनं पर-दाराणां हरणं संप्रमथ्य च ॥५॥ [५

एवं वै तद् अ-कामां च न त्वां स्प्रक्ष्यामि मैथिलि ।
६] कामं कामः शरीरे मे यथा-कामं प्र-वर्तताम् ॥६॥ [६

---

१. च रा प्र व म ल$_1$ ल$_2$ श्र-सीतां । २. प्र व-०परि० । ३. श्र-०न्दं । ४. म-सान्त्वयन् । फ श्र-०मैर्म० । व ल$_1$-०मम० । ५. म-०क्यैः प्रलोभयत रावणः । श्र-०क्यैर्बोधयामास रावणः ॥ ६. श्रा फ च-नाग-नासोरु० । ल$_1$-नागराजोत्थ । ल$_2$-०गनाभोरु । ७. ल$_1$-महा० ॥ ८. ल$_1$-रमयित्वा । ९. रा-सर्वासां । १०. फ श्र-०सम्पन्नां । ल$_2$-०सम्पन्न । ११. फ-०हराम् । राप्र व म ल$_1$-०रमे ॥ १२. व म ल$_1$ ल$_2$-वे हि । १३. श्रा-०द्या(घा । १४. फ च-अपम० । व-व्यपसर्पन्तु ॥ १५. रा प्र व म ल$_1$ ल$_2$ श्र-भ० । १६ म-सर्वदैव । १७. प्र च-समंततः । १८. फ-वा परस्त्रीणा । १९. स ल$_1$ ल$_2$-वा ॥ २०. श्रा-चैव तु । च रा प्र व म ल$_1$ ल$_2$-भवतु । २१. श्रा-कामार्तां । घ-०र्तां । रा-०र्त्तुं० । प्र व म ल$_1$ ल$_2$-०र्तं० । २२. च-तन्त्रीं । रा प्र व म ल$_1$ ल$_2$-स्त्वनु । २३ फ म-प्रेक्षामि । श्रा च रा प्र व ल$_1$ ल$_2$-प्रेक्ष्यामि । २४. श्रा फ-०र्लीम् । रा प्र व म ल$_1$ ल$_2$ श्र-०लिम् । २५. श्रा घ-०रमे ॥

सम्-ईक्षमाणो रुदतीम् अ-निन्दितां
सु-पक्ष्म-ताम्राऽऽयत-चारु-लोचनाम् ।
अनु-व्रतां रामम् अतीऽव मैथिलीम्
N] अलोभयंश्[3] चौऽऽत्म-वधाय रावणः॥२८॥[२३

इत्यार्षे रामायणे सुन्दर-काण्डे सीतोऽन्वेषणे सीतो-वर्णनो
नाम चतुर्दशः सर्गः ॥ १४ ॥

---

१. आ—॰र्णा । घ रा प्र च म ल, ल, —॰इयमाणां । फ ब—॰इग॰। २. आ—मरइमनाग॰ । घ—॰इग॰ । ३. आ फ घ—॰चंदश॰ । रा प्र च म ल, —॰पन्दश॰ ॥ ४. फ रा प्र च म ल, ल, अ—नाहिर । ५ आ—रावणपाने । म रा—॰पाने ॥

स तां पति-व्रतां दीनां निर् आनन्दां तपस्विनीम् ।
१] स-कामो मधुरैर् वाक्यैर् इदं वचनम् अब्रवीत् ॥१॥ [१

मां दृष्ट्वा नाग-राजोरु गूहमाना ततस् ततः ।
२] अ-दर्शनम् इवाऽऽत्मानं भयान् नेतुं त्वम् इच्छसि ॥२॥ [२

रमये त्वां विशालाऽक्षि बहु-मन्यस्व मां प्रिये ।
N] सर्वाऽङ्ग-गुण-संपन्ने सर्व-लोक-मनो-हरे[11] ॥३॥ [३

नेह केचिन् मनुष्याऽद्या राक्षसाः काम-रूपिणः ।
३] व्यप-सर्पतु ते सीते भयं मत्तः सम् उत्थितम् ॥४॥ [४

स्व-धर्मो रक्षसां भीरु सर्वथैव सनातनः ।
४] गमनं पर-दाराणां हरणं संप्र-मथ्य च ॥५॥ [५

एवं चैतद् अ-कामां च न त्वां स्प्रक्ष्यामि मैथिलि ।
६] कामं कामः शरीरे मे[25] यथा-कामं प्र-वर्तताम् ॥६॥ [६

---

१. च रा प्र व म ल, ल₂ अ-सीतां । २. प्र व-०परि० । ३. अ-०न्दं । ४. म-सान्त्वयन् । फ अ-०मैर्म० । व ल₁-०मम० । ५. म-०क्यैः प्रलोभयत रावणः । अ-०क्यैर्बोधयामास रावणः ॥ ६. आ फ च-नाग-नासोरू० । ल₁-नागराजोरु । ल₂-०गनासोर । ७. ल₁-महा०॥ ८. ल₁-रमयिष्वा । ९. रा-सर्वासां । १०. फ अ-०सम्पन्नां । ल₂-०सम्पन्न । ११. फ-०हराम् । रा प्र व म ल₁-०रमे॥ १२. व म ल₁ ल₂-ते हि ।१३. आ-०द्या वा । १४. फ च-अपस० । व-व्यपसर्पन्तु ॥ १५. रा प्र व म ल₁ ल₂ अ-अ० । १६ म-सर्वदैव । १७. प्र व-समंततः । १८. फ-वा परस्त्रीणां । १९. म ल₁ ल₂-वा ॥ २०. आ-चैव तु । च रा प्र व म ल₁ ल₂-भवतु । २१. आ-कामानां । च-०र्ता । रा-०तुं० । प्र व म ल₁ ल₂-०र्तं० । २२. च-तन्वीं । रा प्र व म ल₁ ल₂-स्तनु । २३ फ म-प्रेक्षामि । आ च रा प्र व ल₁ ल₂-प्रेक्ष्यामि । २४. आ फ-०लीम् । रा प्र व म ल₁ ल₂ अ-०लिम् । २५. आ च-०रमे ॥

देवि नेह भयं कार्यं वि-श्वासं गच्छ मे प्रिये।
७] प्र-णयस्वं च तत्त्वेन मैवं भूः शोक-लालसा ॥७॥ [७
एक-वेणी-धरत्वं च ध्यानं मलिनम् अम्बरम्।
८] अ-स्नानं चोपवासश् च नैतान्य् ओ(?औ)पयिकानि ते।८। [८
वि-चित्राणि च माल्यानि चन्दनान्य् अगुरूणि च।
९] वि-विधानि च वासांसि दिव्यान्य् आभरणानि च॥९॥ [९
महाऽर्हाणि च पानानि यानानि शयनानि च।
१०] गीतं नृत्यं च वाद्यं च भज मां प्राप्य मैथिलि ॥१०॥ [१०
स्त्री-रत्नम् असि मैवं भूः कुरु गात्रेषु भूषणम्।
११] मां प्राप्य हि कथं नु स्यास् त्वम् अ-रत्ना सु-मध्यमे११। [११
इदं ते[16] चारु सं-जातं यौवनं व्यति-वर्तते।
१२] यद् अतीऽतं पुनर् नैति स्रोतः शीघ्रम् अपाम् इव॥१२॥ [१२
त्वां कृत्वोप-रतो मन्ये रूप-कर्ता स विश्व-कृत्।
१३] येन रूपोपमा नाऽन्या तवाऽस्ति शुभ-दर्शने ॥१३॥[23] [१३
त्वां समा-साद्य वैदेहि रूप-यौवन-शालिनीम्।
१४] कः पुमान् नाऽति-वर्तेत साक्षाद् अपि पितामहः॥१४॥ [१४

---

१. प्र व ल१ ल२-मैथिलि। २. फ-प्रणयस्वय॥ ३. आ-०रत्वं वध्या०। ४. आ-०नं च मलिनाम्बराम्। च-०नाच्च मलिनमम्बरा। रा प्र य म ल१,ल२-०नाच्च मलिनाम्बरा। ५. फ-०वासं च। ६. आ फ च रा-०नि म०। ९. रा प्र ल१-०नि गु०। ७. फ-नास्ति॥ ८. फ-पानानि च महार्हाणि। १२. च-य म ल१ ल२ ध-नृत्तं। १०. आ-मैथिली॥ ११. फ-कुगात्रेष्विव। १२. च-भोजनं। १३. आ-नु। १४. च-०रत्नं। १५. रा प्र व ल१ ल२-नास्ति॥ १६. च रा प्र व म ल१ ल२-०दं नु। अ-एतत्ते। १७. फ-विनि०। १८. म ल१ ल२-०पद्य०। १९ आ-श्रोतुः। फ च रा-श्रोतः। अ-नदा। २०. अ-भजस्व माम्॥ २१ आ-०रतं। २२. आ-०कर्त्रा। च-०पं स्रष्टा। २३. आ-च। २४. फ म अ-न हि। २५. फ म अ-०पमा त्वन्या। २६. रा प्र व ल१ ल२-नास्ति॥ २७. आ फ-मा०॥

यद् यत् पश्यामि ते गात्रं शीतांऽशु-सदृशाऽऽनने ।
१५] तस्मिंस् तस्मिंश् च सु-श्रोणि चक्षुर् मम नि-बध्यते ॥१५॥ [१५
भव मैथिलि भार्या मे मोहम् एवं वि-वर्जय ।
१६] बहूनाम् उत्तम-स्त्रीणां ममाऽग्र्या महिषी भव ॥१६॥ [१६
लोकेभ्यो यानि रत्नानि सम्-प्रमथ्याऽप-हृतानि मे ।
१७] तानि ते भीरु सर्वाणि राज्यं चैतद् अहं च ते ॥१७॥ [१७
वि-जित्य पृथिवीं सर्वां नाना-नगर-संवृताम् ।
१८] जनकाय प्र-दास्यामि तव हेतोर् वि-लासिनि ॥१८॥ [१८
न च पश्यामि तं लोके यो मे प्रति-बलो भवेत् ।
१९] पश्य मे सु-महद् वीर्यम् अ-प्रति-द्वन्द्वम् आहवे ॥१९॥ [१९
अ-सकृत् सं-युगे भग्ना मया वि-मृदित-ध्वजाः ।
२०] अ-शक्ताः प्रत्य् अनीकेषु स्थातुं सर्वे सुराऽसुराः ॥२०॥ [२०
इच्छया क्रियताम् अद्य प्रति-कर्म तवोत्तमम् ।
२१] सु-प्रभाण्य् अव-बध्यन्ताम् अ-सकृद् भूषणानि ते ॥२१॥ [२१
साधु पश्यामि ते रूपं सं-युक्तं प्रति-कर्मणा । [२२
२२] प्रति-कर्म च सं-युक्तं दाक्षिण्येन वराऽङ्गने ॥२२॥
भुङ्क्ष्व भोगान् यथा-कामं पिब भीरु रमस्व च । [२३
२३] यथेष्टं च प्र-यच्छ त्वं पृथिवीं वा धनानि च ॥२३॥

---

१. फ अ--०स्मिन्सु० । प्र--०स्तु सु० ॥ २. फ च रा प्र व म ल$_1$--विस्र० । ३. फ रा म अ--बह्वी० । ४. फ अ--०माग्र्या । च रा प्र व म ल$_3$ ल$_1$--०माग्र्या ॥ ५. अ--च । ६. प्र--०र्दं मही ॥ ७. आ--०त्वा। ८. फ--०द्विजाः । ल$_2$--०ध्वजः । ९. फ अ--मम ॥ १०. आ फ--इच्छया । च रा प्र व म ल$_3$ ल$_2$--०च्छ मां । ११. फ--क्रियताम० । १२. प्र--च संयुक्तं । व म ल$_2$--न वोत्तमं । अ--त्वयोत्तमम् । १३. फ--०प्येन दाक्ष० । च--०श्रश्मृज्य० । रा व म--०वद्ध्य० । अ--०वर्मजातं ॥ १४. आ--युक्तं च । १५. अ--०मांगि सं० । १६. च--दक्षिणेन । ल$_2$ अ--दाक्षिणेन । १७. फ--०ाणे । रा प्र व म ल$_1$, ल$_2$ अ--०रानने ॥ १८. च--०काममिव । १९. च रा प्र व म ल$_3$ ल$_2$ अ--भीरु । २०. व म ल$_3$--च ॥

लंलस्व मयि वि-श्रंब्धं हृष्टम् आं-ज्ञापयस्व मॉम् ।
२४] मत् प्रसादाल् ललन्त्याश् च ललन्तु तव बान्धवाः॥२४॥ [२४
ऋंद्धिं ममाऽनु-पश्य त्वं श्रियं भंद्रे यशश् च मे ।
२५] किं करिष्यसि रामेण सु-भगे चीरं-वाससा ॥२५॥ [२५
नि-क्षिप्त-विषयो रामो गत-श्रीर् वन-गोचरः ।
२६] व्रती स्थंडिल-शायी च शंके जीवति वा न वा ॥२६॥ [२६
न चे वैदेहि रामस् त्वां श्रोतुंम् अप्य् उप-लप्स्यंते ।
२७] पुंरीं च लंकाम् अं-सितैर् मेघैर् ज्योत्स्नाम् इवाऽऽवृताम्॥२७[२७
न चाऽपि मम हस्ताद् त्वां प्राप्तुम् अर्हति राघवः ।
२८] हिरण्य-कशिपुः(?पोः) कीर्तिम् इन्द्र-हंस्ता(द्)गताम् इव॥२८[२८
चारु-स्मिते चारु-दंन्ते चारु-नेत्रे वि-लासिनि ।
२९] मनो हरसि मे भीरु सु-पर्णः पन्नगं यथा ॥२९॥ [२९
क्लिंष्टं-कौशेय-वसनाम् एवम् अप्य् अन्-अलंकृताम् ।
३०] त्वां दृष्ट्वा स्वेषु दारेषु रतिं नोप-लभे प्रिये ॥३०॥ [३०
अन्तः-पुरनिवांसिन्यः स्त्रियः सर्व-गुणाऽन्विताः ।
३१] यावन्त्यो मम तासां त्वम् ऐश्वर्यं कुरु जानकि ॥३१॥ [३१

---

१. फ-स्व । च रा प्र य म ल₁-०भस्व । ल₂-रंमस्व । अ-रमस्व । २. फ-०ब्धा । च ल₂-०ब्धं । रा प्र य म ल₁-०म्भं । ३. च-०ष्टा मां श्रा० । प्र-०ष्टमाज्ञा० । ४. आ फ च ल₁-च । ५. आ-हृष्ट त्वं च । फ रा-०हृष्ट्या च ॥ ६. अ-०द्धिर्ममेयं महती अहं । ७. य ल₁-०द्रं । ८. अ-चीर० । फ-वीत० ॥ ९. फ-हि । १०. प्र य ल₁-प्राप्तुमर्हति राघवः । अ-हृदस्थामुपलप्स्यते । ११. आ-०रा यन्नांकैर० । फ-०रां यन्नांकैर० । च अ-०री यन्नांकैर० । १२. प्र य ल₁ ल₂-नास्ति ॥ १३. प्र य ल₁-नास्ति । १४. द्रा यं प-हस्ताग० ॥ १५. आ च म-०न्ति । रा प्र य ल₁-०न्ति । ल₂-०न्ते ॥ १६. फ-क्लिष्ट कौ० । ल₂-क्लिष्टकौ० ॥ १७. आ-०विन्यासिन्यः । १८. अ-इमाः । १९. फ-या च मे । रा प्र य म ल₁ ल₂-यावन्त्यो । — — ० । २०. फ-ताः सा ॥

मम हृद्य् अ-सित-केऽशान्तास् त्रैलोक्य-प्रवराः स्त्रियः।

३२] तास् त्वां परि-चरिष्यन्ति श्रियम् अप्सरसो यथा॥३२॥[३२

यानि वैश्रवणस्याऽऽसन् रत्नानि वि-विधानि तु।

३३] तानि लोकां च सु-श्रोणि मां च भुंक्ष्व यथा-सुखम्॥३३॥[३३

न रामस् तपसा सीते न वि-क्रमेण बलेन च।

३४] न धनेन मया तुल्यस् तेजसा यशसाऽपि च॥३४॥[३४

पिब वि-हर रमस्व भुंक्ष्व भोगान् धनानि च।

यान् प्रति-पद्य मेदिनीं वो मयि लोल लोलिते यथा।

N] सुखं हि त्वयि च संप-एस लोलन्तु बान्धवास् ते॥३५॥[३५

कुसुमित-तरु-जाल-संततानि

भ्रमर-युतानि समुद्र-तीर-जानि।

कनक-विमल-हार-भूषिताङ्गी

N] वि-हर मया सह भीरु काननानि॥३६॥[३६

इत्यार्षे रामायणे सुन्दर-काण्डे सीता-प्रलोभनं

नाम पञ्चदशः सर्गः ॥१५॥

---

१. रा प्र य व ल$_1$ ल$_2$–ममाप्यभि० । २ आ अ–०शान्ते । च–०क्षान्यम् । ३ फ अ–०स्य व० । ४. व–०स्वासुप० । अ–०स्वामभि० । ५. आ–०मसरसो ॥ ६. फ च अ–०वणे सन्ति । ७. फ च अ–च । ८ फ–ते काम सु० । च–कांचनसु० । ९. रा प्र य म ल$_1$,ल$_2$–नास्ति ॥ १०. आ–न बले न तु विक्रमे । फ अ–न बले न पराक्रमे. । च–न बले न च विक्रमे । ११. फ–०सा श्रिया । च रा प्र य म ल$_1$,ल$_2$ अ–०पि वा ॥ १२. अ–वां । १३. रा प्र य म ल$_1$ ल$_2$ अ–च । १४. रा प्र य ल$_3$–त्र । म–विर । १५. फ च रा प्र व म ल$_1$ ल$_2$ अ–ललने । १६. च रा प्र व ल$_1$ ल$_2$–त्वशमे० । चेति व्यस्तक्रमः । तस्य मौलिकी स्थितिः 'बान्धवाश्च ते' इत्येवंप्रकारिका संभाव्यते । १७. घा–स्तवचि या० ॥ १८ फ–०रयातानि । १९. फ–त्रिमलकनकहा०॥

तस्य तद् वचनं श्रुत्वा तदा रौद्रस्य रक्षसः ।
१] आर्त्ता दीन-स्वरा दीना शनैर् अ-सित-लोचना ॥१॥ [१
रावणं राक्षस-श्रेष्ठं कोप-पर्या-कुलेक्षणा । [N
N] दुःखाऽऽर्त्ता संभ्र-रुदिता वेपमाना मनस्विनी ॥२॥
तं चिन्तयित्वा वैदेही पतिम् एव पति-व्रता ।
N] तृणम् अन्तर-तः कृत्वा मत्य् उवाच शुचि-स्मिता ॥३॥ [२
नि-वर्तय मनो मत्तः स्व-जने क्रियतां मनः ।
N] न मां प्रोपयितुं शक्तस् त्वं सिद्धिम् इव पाप-कृत् ॥४॥ [३
अ-कार्यं नं मया कार्यम् एक-पत्न्या वि-गर्हितम् ।
२] कुलं सं-प्रोतया पुण्यं कुले महति जातया ॥५॥ [४
एवम् उक्त्वा तु वैदेही रावणं तं मनस्विनी ।
३] राक्षसं पृष्ठ-तः कृत्वा भूयो वचनम् अब्रवीत् ॥६॥ [५
नाऽहम् औपयिकी भार्या पर-भार्या सती तव ।
४] साधु धर्मम् अवेक्षस्व साधु साधु-व्रतं चर ॥७॥ [६
यथा तव तथाऽन्येषां रक्ष्या दारा निशा-चर ।

---

१. च-तस्य । रा प्र व म ल$_1$ ल$_2$ श्र-सीता । २. आ-०रादीन् ३. आ रा प्र व म ल$_1$ ल$_2$ श्र-०दिती । ४. फ च रा प्र व म ल$_1$ ल श्र-तप०॥ ५. आ फ श्र-सं० । ६. आ-त्रि० । ७. ल$_2$-०रितः । ८. आ-सु०॥ ९. म ल$_1$-प्रापितुं ॥ १०. आ ल$_2$-०कार्ये । ११. आ-०व्यया ।१२. रा प्र य म ल$_1$ ल$_2$-नास्ति ॥ १३. आ-च । १४ फ श्र-तप० । १५. आ-दृष्टनः । १६. आ श्र फ-रावणम् ॥ १७. आ-परतयां । १८. च-मतामिव । १९. रा प्र य म ल$_1$ ल$_2$-नास्ति । २०. व ल$_1$ ल$_2$-धर्मं । २१. प्र-धर्मयत्नं । य ल$_1$ ल$_2$-समाचर ॥ २२. ल$_2$-नेषां ।

५] आत्मानम् उपमां कृत्वा स्वेषु दारेषु रम्यताम् ॥८॥ [७
अ-तुष्टं स्वेषु दारेषु चपलं चपलेन्द्रियम् ।
६] नयन्ति नि-कृति-प्रज्ञं पर-दाराः परा-भवम् ॥९॥ [८
इह सन्तो न वा सन्ति सद्गिर् वा नाऽनु-वर्तसे । [९
७] वचो मिथ्या-प्रणीतं ते पथ्यम् उक्तं वि-चक्षणैः ॥१०॥ [१०
अ-कृताऽऽत्मानम् आ-साद्य राजानम् अ-नये रतम् ।
९] समृद्धान्य् अपि नश्यन्ति राष्ट्राणि नगराणि च ॥११॥ [११
यथेयं त्वां समा-साद्य लंका रत्नौघ-संकुला ।
८] अपराधात् तवैकस्य न चिराद् वि-नशिष्यति ॥१२॥ [१२
स्व-कृतैर् हन्यमानस्य नरस्याऽदीर्घ-दर्शिनः ।
१०] अभि-नन्दन्ति भूतानि वि-नाशं पाप-कर्मणः ॥१३॥ [१३
एवं त्वां पाप-कर्माणं वक्ष्यन्ति नि-कृतं जनाः ।
११] दिष्ट्यैवं व्यसनं प्राप्तो रौद्र इत्य् एव हर्षिताः॥१४॥[१४
नाऽहं लोभयितुं शक्या ऐश्वर्येण धनेन वा ।
१२] अनन्या राघवस्याऽहं भास्करस्य यथा प्रभा॥१५॥ [१५

---

१. प्र व म ल$_1$ ल$_2$–०मुत्तमं ॥ २. रा प्र व म ल$_1$–अनिष्टं । फ–अनिष्टां । ३. फ–परदा० ४ आ च रा प्र व म ल$_1$ ल$_2$–नियतं । ५. च रा प्र ल$_1$ ल$_2$–निष्कृ०। अ–०तं प्रातं। ६. च रा प्र व म ल$_1$ ल$_2$–०श्चापरा०। आ–दारा परा०॥७.व ल$_2$–वचो। ल$_1$–स्वन्त०।८. ल$_2$–वर्तसे। ९.आ–मिथ्यप्रणीतं। १०. ल$_2$–०थ्यं सुप्रां॥ ११. प्र–अकृतात्मा०॥ १२. फ अ–०द्धानि वि०॥१३. अ–रत्नै इव सं०। १४. आ–०नवं०। म–यं ता॥ १५. आ–०स्तत्कृतैर्। रा–०कृतं हन्य- प्र म ल$_2$–०ते ह० । व–सुकृते। ल$_1$–सुकृतं। १६. प्र–निवामं । १७. ल$_1$–…०र्मिणः । १८. च–नास्ति ॥ १९. आ–०क्ष०। २०. फ–न कृतिं । रा–न कृते । प्र–निवृतं । २१. च–नास्ति । २२. फ ल$_1$ ल$_2$–०श्वर्येण । च–हरीनं । प्र–०श्चर्येण । अ–०श्वर्येन । २३. अ–निकृति। २४.आ–आसौ । २५. अ–हर्षिताः ॥ २६. ल$_2$–नाहं । २७. रा प्र व … –अनन्या । … फ आ च रा प्र व म ल$_1$ ल$_2$–प्रभा यथा॥

तस्याऽहं लोक-नाथस्य रामस्य विदिताऽऽत्मनः । [N

१३] उप-धाय भुजं दिव्यं चन्दनाऽगुरु-संस्कृतम् ।
कथं नामोप-धास्यामि भुजम् अन्यस्य कस्यचित् ॥१६॥ [१६

१४] अहम् औपयिकी भार्या तस्यैव वसुधा-पतेः ।
व्रत-स्नातस्य विप्रस्य विद्येव विदिताऽऽत्मनः ॥१७॥ [१७

१५] साधु रावण रामेण मां समा-नैय दुःखिताम् ।
वने वासितया मैत्तं करिण्येव गजाऽधिपम् ॥१८॥ [१८

१६] मित्रम् औपयिकं कर्तुं राघवो रावण त्वया ।
वधं चाऽनिच्छता घोरं पुरीं च परि-रक्षता(?क्षितुम्) ॥१९[१९

१७] वर्जयेद् वज्रम् उत्सृष्टं वर्जयेत् कुपितोऽन्त-कम् ।
त्वद् विधेन तु सं-क्रुद्धो लोक-नाथः स राघवः ॥२०॥ [२३

१८] रामस्य धनुषः शब्दं श्रोष्यसि त्वं सु-दारुणम् ।
शत-क्रतु-वि-सृष्टस्य निर् घातम् अशनेर् इव ॥२१॥ [२४

१९] इह शीघ्रं सु-पर्वाणो ज्वलिताऽऽस्या इवोरगाः ।
इषवो नि-पतिष्यन्ति राम-लक्ष्मण-लक्षिताः ॥२२॥ [२५

२०] रक्षसां हन्यमानानाम् अस्यां पुर्यां समन्ततः ।
अ-गम्या हि भविष्यन्ति पन्थानः शर-वृष्टिभिः ॥२३॥[११] [२६

१. आ घ रा प्र य म ल₁ ल₂-सव्यं । २. आ-०सत्कृतम् ॥ ३. रा प्र य म ल₁-०नीय । ४. रा-०शि० । ५. फ अ-निस्यं । ६. आ-करेण्वेव । ७. फ अ घ रा प्र य म ल₁,ल₂-राघवं । ८. आ फ घ-वाऽ० । प्र-वधंचा० । ९. आ-मा निघृरा घो० । फ-अनिच्छता । प्र-०च्छता । १०. आ प्र य अ म-पुरी । ११. फ-०मंप्रतिरक्षता । य अ ल₁ ल₂-०रिरक्षिता ॥ १२. फ-धनुराग्र० । १३. अ-०येदपि चान्तकः । १४. फ घ रा-०पितोऽन्तकः । १५. अ-वर्जयेदपि । ल₂-०धेन च ॥ १६. आ-श्रोष्यसि । १७. फ आ घ घ-अस० ॥ १८. आ-०ण्वलिताक्षा । १९. ल₂-त्रुटितः पाठः ॥ २०. [illegible] म-पुरि । २१. आ घ-अभिगम्या । अ फ-अगंपाता । २२. ल₂-नास्ति ॥

२१] राक्षसेन्द्र महा-सर्प स रामो गरुडो महान् ।
२२पू] त्वां हनिष्यति वेगेन वैनतेय इवोरं-गम ॥२४॥ [२७
अप-नेष्यति मां भर्त्ता त्वत्तः शीघ्रम् अरिन्दमः ।
२३] अ-सुरेभ्यः श्रियं दीप्तां विष्णुस् त्रिभिर् इव क्रमैः ॥२५॥ [२८
जन-स्थाने हत-स्थाने नि-हते रक्षसां बले । [२९पू
N] तीव्रं त्वम् आप्नुया दुःखं शर्वं मार इवाऽऽतुरः ॥२६॥ [N
आलयं तु तयोः शीघ्रं गतस् त्वं नार-सिंहयोः ।
३१] गोचरं गतयोर् भ्रात्रोः शृगाल इव सिंहयोः ॥२७॥ [३०
नहि गन्धम् उपाऽऽघ्राय राम-लक्ष्मणयोस् त्वया ।
३२] शक्यं सं-दर्शने स्थातुं शुना शार्दूलयोर् इव ॥२८॥ [३१
तस्य ते वि-ग्रहस् ताभ्याम् अ-युक्तो मोहम् आ-स्थितः ।
३३] वृत्रस्येवेन्द्र-विष्णुभ्यां यथैवैकस्य नि-ग्रहः ॥२९॥ [३२
क्षिप्रं तत्र स-सैन्यस्य रामः सौमित्रिणा सह ।
३४] तोयम् अल्पम् इवाऽऽदित्सः प्राणान् आदाय यास्यति ॥३०॥ [३३

---

१. च--०रगात् । २. आ--ततः । ३. फ--त्रिदिवविक्रमैः । च अ घ--विष्णुरिव पराक्रमैः ॥ ४. च रा प्र घ म $ल_1$ $ल_2$--०नं हतं श्रुत्वा । ५. प्र--राक्षसे० । ६. $ल_1$--बलं । ७. च--तीव्रं वमा० । ८. आ--०मुपा । रा प्र--०दुःखं । अ--त्वमाप्स्यसे वा दुःखं । ९. फ--शर्वमासिवा० । च रा घ स $ल_1$ $ल_2$--शम्भोर्मार इवातुरः । प्र--शम्भोर्मारिहवातुरः । अ--पूर्णमाल इवा० । १०. रा प्र व म $ल_1$ $ल_2$--नास्ति । ११. आ--न शक्यं स्पन्दते । च--न शक्य स्पन्दने । रा प्र व म $ल_1$ $ल_2$--न शक्यं स्पन्दने । १२. आ--वने शार्दू० । रा प्र घ म $ल_1$ $ल_2$--शृगाल इव सिंहयोः । १३ रा प्र व म $ल_1$ $ल_2$--०भ्यां प्रयु० । १४. फ--मोहममाहितः । १५. आ--वृत्र० । १६. आ--तयोस्तस्य च । अ--तथा चैकस्य ॥ १७. आ--तोयम०॥

गिरिं कुवेरस्य गतम् त्वम् आलयम्
नभो-गतोऽधो[2] वरुणस्य वाऽऽलयम्[3] ।
अ-संशयं दाशरथेर् न मोक्ष्यसे
द्रुमो यथा काल-गतो महाऽशनेः ॥३१॥ [३४४]

इत्यार्षे रामायणे सुन्दर-काण्डे सीता-वाक्यं
नाम षोडशः सर्गः ॥१६॥

---

१. म-गतं यमाल्यम् । अ-गतस्त्वमुदग्रं । २. क घ ग प्र य म स, स,-०गो वा व० । म-नभोगतस्त्वं । ३. का-ग प्र य म स,स,-वाल०।४. घ-०रपिर् ।५. फ-ध्रुवं । प-द्रुमं । ६. क प-महाग्निः । ७. म-महारनः ॥

सीतायास् तद् वचः श्रुत्वा परुषं राक्षसेश्वरः ।
१] प्रत्य्-उवाच ततः सीतां वि-प्रियं प्रिय-दर्शनाम् ॥१॥ [१

यथा यथा सांत्वयिता वश्यः स्त्रीणां तथा तथा ।
२] यथा यथा प्रियं वक्ता परि-भूतस् तथा तथा ॥२॥ [२

संनि-यच्छति मे क्रोधं त्वयि कामः सम्-उत्थितम् ।
३] उन्-मार्गिणां बलाद् वेगं हयानाम् इव सारथिः ॥३॥ [३

वामः कामो मनुष्याणां यस्मिन् किल नि-बध्यते ।
४] जने तस्मिंस् त्व् अनु-क्रोशः स्नेहश् च किल जायते ॥४॥ [४

एतस्मात् कारणान् न त्वां घातयामि वराऽऽनने ।
५] वधाऽर्हाम् अव-मानाऽर्हां मिथ्या-प्रव्रजिते रताम् ॥५॥ [५

परुषाणि हि वाक्यानि यानि यानि ब्रवीषि माम् ।
६] तेषु तेषु वधो युक्तस् तव मैथिलि दारुणः ॥६॥ [६

एवम् उक्त्वा तु वैदेहीं रावणो राक्षसस् तदा ।
N] क्रोध-संरंभ-संयुक्तः सीताम् उत्तरम् अब्रवीत् ॥७॥ [७

श्रुत्वै(शृण्वे)तद् वचनं भद्रे त्वम् अ-बध्यत्वम् आ-श्रिता ।
N] भाषसे परुषाण्य् एवं वि-श्रब्धं गत-साध्वसा ॥८॥ [N

---

१. फ श्र–॰साधिपः । २. श्र–॰र्शनः ॥ ३. आ फ च रा प्र म ल$_1$ ल$_2$–शान्तव॰। ४. श्रा–शते ॥ ५. आ ल$_1$ ल$_2$–स नि॰ । ६. फ श्र–काम: । ७–फ च रा प्र व म ल$_1$ ल$_2$ श्र–॰न्थितः । ८. श्रा–॰रथिम् ॥ ९. श्रा–यत्त॰ । १०. फ–॰मैत्रमारोहो । श्रा–॰मिर माना॰ । ११. फ–न वा॥१२. म–॰पाणीह वा । ल$_2$–॰पाणि च ।१३.व–नियतानि ।१४. रा म–मे॥ १५. फ श्र–॰राक्षसेश्वरः॥ १६. श्र–॰वध्या व्यवस्थिता । १७ ... ल$_1$ ल$_2$–॰परुषं स्वेव ॥

न युक्तं[1] परुषं वक्तुम् ईश्वरे[2] ह्य् अ-प्रियाणि च ।

N] जनस्य[3] पर्षदो मध्ये प्र-भविष्णोर् वि-शेषतः ॥९॥ [N

अलङ्कारो हि नारीणां दाक्षिण्यं परम् उच्यते ।

N] दुर्लभं तच् च ते सीते कथं भर्तु(ः)[4] प्रिया ह्य् अपि(?सि)॥१०॥[N

यादृशो[5]ऽयं मम क्रोधो यथावर्तं त्वम् अव-स्थिता ।

N] वधाय[6] वै[7] सृजेयं त्वां स्त्री-भावान् न तु वर्ध्यसे[8] ॥११॥ [N

द्वौ मासौ क्षेमितव्यौ[9] मे कालस् तेऽयं मया कृतः[10] ।

७] ततः शयनम् आ-रोह मम त्वं वर-वर्णिनि[11] ॥१२॥ [८

द्वाभ्याम् ऊर्ध्वं तु मासाभ्यां भर्तारं माम् अन्-इच्छतीम्[12] ।

८] ततस् त्वां मातर्-आशाऽर्थं मूदाश् छेत्स्यन्ति खण्ड-शः॥१३॥[N

तां तर्ज्यमानां सं-प्रेक्ष्य राक्षसेन्द्रेण जानकीम् ।

१०] देव-गन्धर्व-कन्यास् ता वि-षेदुः कमलेक्षणाः[13] ॥१४॥ [१०

ओष्ठ-प्रकारैर्[14] अपरा नेत्रैऽऽकारैस् तथाऽपराः ।

११] सीताम् आ-श्वासयामासुस् तर्जितां तेन रक्षसा॥१५॥ [११

---

१. अ फ– न युक्तः परुषं वक्तुम् । प्र घ–न वक्तुं परुषं युक्तम् । २. फ–ईश्वरो ह्यप्रियाणि वा । ३. फ अ–जनस्य महतो मध्ये । प्र–जनस्य परिषदो मध्ये ॥ ४. अ–भर्तुप्रिया ह्यपि ॥ ५. फ च रा प्र घ म ल$_2$–यादृशोयं । ६.फ च रा अ–यथा च । प्र घ म ल$_1$–यथा वा । ७.आ च रा प्र घ ल$_2$–यथायावसृजेहं । फ–यथाय विसृजेहं ।८ अ–स्त्रीभावेनासि धार्यते॥९. आ फ म अ–कांक्षितव्यौ । १०. अ–यथा कृतः । ११.घ–भामकं मदिरेक्षणे ॥ १२. आ च रा प्र घ म ल$_1$ ल$_2$–ततस्त्वां राक्षसाः सर्वे तदा छेत्स्यन्ति खण्डशः । अ–मतस्या प्रातराशार्थं तदा छेत्स्यामि खण्डशः ॥ दा–मम त्वां प्रातराशार्थमारभन्ते महानसे । वं–मम त्वां प्रातराशाय सूदाश्छेत्स्यन्ति खण्डशः ॥ १३. फ अ–०दुर्विपुलेक्षणाः ॥ १४. फ–अष्ठप्र० । रा प्र घ ल$_2$ ल$_1$–दुष्प्र० । अ–भैरवैः प्रकारैः । । १५. ल$_1$–निद्राका० ॥

ताभिर् आ-श्वासिता सीता रावणं राक्षसाऽधिपम् ।
१२] उवाचाऽऽत्म-हितं वाक्यं वृत्त-शौण्डीर्य-गर्वितम् ॥१६॥ [१२
तस्य राक्षस-राजस्य सीता न मम्रुषे वचः ।
N] पुण्य-कीर्तिर् इवाऽकीर्तिं पुनः कोपाद् उवाच ह ॥१७॥ [N
नूनं न ते जनः कश्चिद् अस्ति निःश्रेयसे स्थितः ।
१३] नि-वारयति यो न त्वां कर्मणः साधु-गर्हितात् ॥१८॥ [१३
मां हि धर्माऽऽत्मनः पत्नीं शचीम् इव शत-क्रतोः ।
१४] प्राऽर्थयेताऽपि मनसा त्रिषु लोकेषु कोऽपरः ॥१९॥ [१४
राक्षसाऽधम रामस्य भार्याम् अ-मित-तेजसः ।
१५] उक्तवान् असि यद् वाक्यं क्व गतस् तस्य मोक्ष्यसे ॥२०॥ [१५
यथा दृप्तस्य नागस्य शशकः स-हयो भवेत् ।[15]
१६] तथा द्विरद-वद् रामस् त्वं नीच-शशवत् स्मृतः ॥२१॥ [१६
स त्वम् इक्ष्वाकु-नाथं तं[16] क्षिप्रं[17] प्राप्य वि-नङ्क्ष्यसि ।
१७] चक्षुषोर् विषयं तस्य न तावद् उप-गच्छसि ॥२२॥ [१७

---

१. प्र—०समौत्थधैर्यग० । य ल$_{3}$—०सर्वाटीर्यग० । ल$_{2}$—वृत्तं शौटीर्यग० । २. फ श्र—०र्षिता । ३. श्र—०वारीर्ति । फ—०वाकीर्तिः । ४. श्रा—यद्वत्तत्र पुनः पुन.॥ ५.फ घ प्र—निःश्रेयसि स्थि० । श्र—०श्रेयसः । ६. श्रा प्र य म ल$_{2}$ श्र—हि । ७ फ घ रा ल$_{3}$—०र्मणोऽस्माद्विगर्हितात् ॥ ८ श्र—तस्य । ९ फ—शचीपतेः । १०. य ल$_{3}$ ल$_{2}$—नः परः ॥ ११. घ रा म—ना०युगतोऽपि न । प्र ल$_{3}$ ल$_{2}$—युगलम्पं न ॥ १२ फ—शो हि दृप्तस्य मातङ्गः । घ—यथाप्यदृप्तस्य मा० । रा ल$_{2}$—यथा दृष्टस्य मा० । प्र घ—यथा दृष्टस्य मा० । ल$_{3}$—यथा दृष्टा च मातङ्गः । १३. फ घ रा ल$_{2}$ प्र य ल$_{3}$—शशश्च । १४. श्रा—शो हि यो मत्तमातङ्गः सिंहस्य मत्तो भवेत् । श्र—न जातु शशकौ दृष्टो मातङ्गमदवान् भवेत् । १५. श्रा—०मदतोऽधमः । श्र—०जाजकः स्मृतः । १६. श्रा रा घ फ प्र ल$_{2}$ य—त्वं । १७. श्र—क्षिप्रमिव विनंक्षसि । फ प्र ल$_{2}$ घ म—०प्य मविप्यसि । ल$_{3}$—०प्य न भिष्यसि ॥

इमे ते नयने क्रूरे वि-रूपे कृष्ण-पिङ्गले ।
१८] क्षितौ न पततः कस्मान् ममाऽनार्य निर्-ईक्षणात्॥२३॥[१८
तस्य धर्माऽऽत्मनः पत्नीं स्नुषां दश-रथस्य च ।
१९] कथं व्या-हरतो मां ते जिह्वा पाप न शीर्यते ॥२४॥ [१९
अ-संदेशाद् हि रामस्य तपसश् चाऽनु-पालनात् ।
२०] न त्वां करोम्य् अहं क्रुद्धा भस्म-साद् अथ तेजसा ॥२५॥ [२०
नाऽप-हर्तुम् अहं शक्या तस्य रामस्य धीमतः ।
२१] विधिस् तव वधाऽर्थाय वि-हितोऽयम् अ-संशयम्॥२६॥[२१
शूरेण धनद-भ्रात्रा बलैः सम्-उदितेन च ।
N] अप-वाह्य च रामं तं दार-चौर्यम् इदं कृतं ॥२७॥ [२२
सीतायास् तद् वचः श्रुत्वा रावणो राक्षसोऽधिपः ।
२२] वि-वृत्य नयने क्रूरे जानकीम् अन्व्-अवैक्षत॥२८॥ [२३
नील-जीमूत-संकाशो महा-भुज-शिरो-धरः ।
२३] सिंह-खेलं-गतिः श्रीमान् दीप्त-जिह्वाऽग्र-लोचनः॥२९॥[२४
चलाऽग्र-मुकुटः प्रांऽशुश् चित्र-माल्याऽनु-लेपनः ।
२४] रक्त-माल्याम्बर-धरस् तप्तांऽगद-विभूषणः ॥३०॥ [२५
श्रोणी-सूत्रेण महता काञ्चनेन सुसं-वृतैः ।
२६] अमृतोत्-पादने नैद्धो भुजंगेनेव मन्दरः ॥३१॥[१६] [२६

---

१. अ–मामनार्यां निरीक्षतः। २. आ–०शाद्धिरा०। रा म ल$_1$–०शारुच रा०। ३. आ–मस्मसाद्॥ ४. आ रा प्र व म ल$_1$ ल$_2$ अ–०पकर्तु०। ५. फ–असंशयः। ६. च–नास्ति। ७ फ–त्वया परोक्षं रामस्य। अ–स्वयापवाह्य रामं तं। व ल$_1$–अपवाह्य च तं रामं॥ ८. अ–०यास्तु। ९. अ–०सेश्वरः। १०.व म ल$_1$ल$_2$–०कीं तामवै०॥११.फम–सिंहसत्वग०॥१२. फ अ–पांडुरेण। १३. आ अ–सुसंवृताः। फ–सुसंस्कृतः। १४. फ–बद्धो। १५. आ–पुंजगेनेव। १६. रा–नास्ति।

तरुणाऽऽदित्य-वर्णाभ्यां कुण्डलाभ्यां वि-भूषितः ।
N] रक्त-पल्लव-पुष्पाभ्याम् अ-शोकाभ्याम् इवाऽचलः॥३२॥ [२८
अवेक्षमाणो वैदेहीं कोप-संरक्त-लोचनः ।
२७] उवाच रावणः सीतां भुजंग इव निश्-श्वसन् ॥३३॥ [३०
अ-नयेनाऽभिसं-युक्ताम् अर्थ-हीनम् अनु-व्रताम् ।
२८] नाशयाम्य् अहम् अद्य त्वां सूर्यः संध्याम् इवौजसा ॥३४॥ [३१
इत्य् उक्त्वा मैथिलीं राजा रावणः शत्रु-रावणः ।
२९] सं-दिदेश ततः सर्वा राक्षसीर् घोर-दर्शनाः ॥३५॥ [३२
एकाऽक्षीम् एक-कर्णां च कर्ण-प्रावरणाम् अपि ।
N] गो-कर्णीं हस्ति-कर्णां च लम्ब-कर्णाम् अ-कर्णिकाम् ॥३६॥ [३३
अति-मात्र-शिरो-ग्रीवाम् अति-मात्र-कुचोदरीम् ।
अति-मात्राऽऽस्य-नेत्रां च दीर्घ-जिह्वां खराऽऽननाम् । [३५
N] अ-नासिकां सिंह-मुखीं गो-मुखीं सूकराऽऽननाम् ॥३७॥ [३६पू
हयोष्ट्र-खर-वक्त्राश् च राक्षसीर् घोर-दर्शनाः ।
N] खड्ग-मुद्गर-शूलानि शोणिताऽऽक्तानि बि-भ्रतीः ॥३८॥ [N

१. फ प्र—०र्णाभ्यः । २. रा प्र व ल$_1$ ल$_2$—नास्ति । ३. म—क्रोधसं० । ४. रा प्र घ ल$_1$ ल$_2$—नास्ति । ५. आ फ च रा—०मंयुक्तं । ल$_2$—०भिसंपन्ना । अ—०संयुक्तोऽप्यर्थ० । ६. ल$_2$—०नाम् । ७. फ च रा—०नुमजन् । आ अ—०नुमते । ८. रा प्र व स ल$_1$—०नुकर्षणः । ९. आ—राक्षसी घोर० । १०. फ अ—०क्षीं चैकक० । ल$_1$—०क्षीमेकवर्णां । ११. रा प्र व म ल$_1$—गोकर्णीं हस्तिकर्णीं च लंबकर्णीं । १२. ल$_2$ घ—नास्ति ॥ १३. आ रा प्र घ म ल$_1$—०चकुचोद० । १४. आ फ—०र्घजिह्वनखाननाम् । अ—०र्घजिह्वां गजाननाम् । १५. ल$_2$—नास्ति । १६. फ—व्याघ्रसूकरनासिकाम् । व ल$_1$—गोमुखीमपुखीं सूकराननाम् । १७. फ—०वक्त्रां च सुरामांसप्रियाम् । १८. ल$_2$—नास्ति । १९. रा प्र च म ल$_1$ ल$_2$—शोभमानानि ॥ २०. अ—नास्ति ।

३०पू] नाना-प्रहरणोपेता　नाना-रूप-गुणाऽन्विताः ।
३२उ] विचित्र-माल्याऽऽभरणा　रक्त-माल्याऽनुलेपनाः ।[1]
३०उ] मांस-शोणित-दिग्धांऽगीर् मेदो-दिग्ध-कराऽऽननाः॥३९॥[2] [N
यथा मंद्-वश-गा सीता क्षिप्रं भवति जानकी ।
३३] तथा कुरुत राक्षस्यः सर्वाः क्षिप्रं समेत्य च ॥४०॥ [N
प्रति-लोमाऽनु-लोमैश् च साम दान-विभेदनैः ।
३४] आ-वर्त्तयत[5] वैदेहीं दण्डस्योद्यमनैर् अपि ॥४१॥ [N
इति प्रतिसमा-दिश्य राक्षसेन्द्रः पुनः पुनः ।
३५] कोप-मन्यु-परीताऽऽत्मा पर्य्-अगच्छत स जानकीम्॥४२॥[३९
उपाऽऽगम्य ततस् तूर्णं राक्षसी वीक्य-शालिनी ।
३६] परि-ष्वज्य दश-ग्रीवम् इद वचनम् अब्रवीत् ॥४३॥ [२९
मया क्रीडे[12] महा-राज सीतया किं करिष्यसि । [४०पू
३७] अ-कामां कामयानस्य शरीरम् उप-तप्यते ॥४४॥
इच्छन्ती कामयानस्य प्रीतिर् भवति शोभना । [४२
३८] प्रीतिम् आहुस् तु विद्वांसः कामस्य फलम् उत्तमम्॥४५॥[14] [N

---

१ अ-नास्ति । २ आ-०ननाम् । ३ ल२-नास्ति । ४ अ फ-मे वशगा । ५ फ-आतर्पयत । ६ रा प्र य म ल१-निर्बंधाद्यमनैर् । ल२-वामनै र्दमनैरपि । ७ फ अ-राम० । ८ आ-पर्यपृच्छत । प्र म ल१ ल२-गर्जं गर्जन्त । य-गर्नं धार्नन्त । ६ फ प्र य ल१ अ-उप० । १० प्र य ल१ म अ-नतं शीघ्र राक्षसीं । ११ फ-श्रमालिनी । प्र य ल१ म-०मीर्षो क्य० । अ-च ०सी सुमालिनीम् । १२ फ-रम । १३ अ-प्रयोजनम् । १४ रा प्र य ल१ल२-नास्ति॥ अत परमधिक पाठ -म-त्रिसर्गाया छपणया मानुष्यान्यमनस्कया । चलयौनया राजन् सीतया किं करिष्यसि ॥ नूनमस्या महाराजो न देवा भोगसर्जनम् । विदधुर्येन दौर्भाग्यान्न त्वामिच्छति जानकी ॥ देवगन्धर्वकन्याश्च यक्षराक्षसकन्यका । अन्याश्चैव महाराजो पौरुषेण त्वयार्जिता ॥ ताभि क्रीड महाराज जहीमामल्पचेतनम् ।

एवम् उक्तस् तया राजा स्मितं कृत्वा दशाऽऽननः ।[1] [४३पृ
३९] तप्त-काञ्चन-वर्णाऽऽभं प्र-विवेश गृहं ततः ॥४७॥ [४४उ
वे.२९स.] देव-गंधर्व-कन्याश् च नाग-कन्याश् च सर्व-शः ।
१] परि-वार्य दश-ग्रीवं[4] वि-विशुर् भवनोत्तमम् ॥४८॥ [४९
स मैथिलीं धर्म-पराम् अव-स्थितां
प्र-वेपमानां प्रति-भर्त्स्य दुःखिताम् ।
विहाय सीतां मदनेन मोहितः
N] स्वम् एव वेश्म प्र-विवेश रावणः ॥४९॥ [४६

इत्यार्षे रामायणे सुन्दर-काण्डे सीता-रावण-संवादो
नाम सप्तदशः सर्गः ॥ १७ ॥

---

१. आ—एवमुक्तस्तया । २. वं—एवमुक्तो दशग्रीवः प्रियया सोऽनुरूपया । ३. आ—नागकन्याश्च । ४. ल$_2$—ग्रीवो । ५. ल$_2$—विवेश । ६. क प्र च म ल$_1$ अ—परिभर्त्स्य । आ—प्रतिभर्त्स्य ॥ ७. राक्षसीभ्यमार्दितां ॥

इत्य्-उक्त्वा मैथिलीं राजा रावणः शत्रु-रावणः ।
N] सं-दिश्य च तथा सर्वा राक्षसीर् निर्-जगाम ह ॥१॥ [१
निष्-क्रान्ते राक्षसेन्द्रे तु पुनर् अन्तः-पुरं गते ।
२] राक्षस्यो भीम-रूपास् ताः सीतां समभि-दुद्रुवुः ॥२॥ [२
ततस् ताः सम्-उपाऽऽगम्य राक्षस्यः क्रोध-मूर्च्छिताः ।
N] परं परुषया वाचा वैदेहीम् इदम् अब्रुवन् ॥३॥ [३
पौलस्त्यानां वरिष्ठस्य रावणस्य महाऽऽत्मनः ।
N] दश-ग्रीवस्य भार्यात्वं सीते न बहु मन्यसे ॥४॥ [४
ततस् त्व् एक-जटा नाम राक्षसी वाक्यम् अब्रवीत् ।
N] आ-मंत्र्य क्रिश-ताम्राऽक्षीं सीतां कर-तलोदरीम् ॥५॥ [५
प्रजा-पतीनां षण्णां तु चतुर्थो यः प्रजा-पतिः ।
N] मानसो ब्रह्मणः पुत्रः पुलस्त्य इति वि-श्रुतः ॥६॥ [६
पुलस्त्यस्य तु तेजस्वी महर्षिर् मानसः सुतः ।
N] नाम्ना तु वि-श्रवा नाम प्रजा-पति-समः प्रभुः ॥७॥ [७
तस्य पुत्रो विशालाऽक्षि रावणः शत्रु-रावणः । [८पू
N] पुष्पोत्कटायाम् उत्पन्नश् चतुर्थः प्र-पितामहात् ॥८॥ [N

---

१. प्र—०त्र्पणः । २. फ प्र च ल$_1$ ल$_2$ श्र—नतः । ३. म—राक्षस्यो निजगाम ह ॥ ४. रा प्र च म ल$_1$—रावणे शत्रुरावणे । ल$_2$—पुरन्दरपुरे शुभे । घ—पुरन्दरपुरे गते ।५.रा—दुरात्मनः ।६. फ—भार्या तु॥७.प्र—०त्जना नाम ।८. श्रा—क्लिष्टना०॥ ९. ग$_2$—नाम्नि ॥ १०. ल$_1$—स्थितः । ११. ल$_2$—नाहि । १२. फ—विश्रवो नाम । १३. श्रा—०निसुतः॥१४. फ घ प्र च म ल$_1$,ल$_2$—पुष्पोत्क० । श्र—जातः पुष्पोत्कटायास्तु । ल$_1$—०श्रश्चतुर्थात् । १५. ल$_2$—प्रपितामहः ।

सा तस्य रक्षोऽधिपतेर् भार्याऽर्थे किं न कल्पसे ।
N] मयोक्तं चारु-सर्वाऽङ्गि वाक्यं किं नाऽनु-मन्यसे ॥९॥ [८३
ततो हरि-जटा नाम राक्षसी वाक्यम् अब्रवीत् ।
N] क्रोध-दीप्तेक्षणा क्रूरा मार्जार-सदृशेक्षणा ॥१०॥ [९
येन देवास् त्रयस्-त्रिंशद् देव-राजश् च निर्-जितः ।
N] तस्य राक्षस-सिंहस्य भार्याऽर्थे किं न कल्पसे ॥११॥ [१०
वीर्योत्-कटस्य शूरस्य सं-ग्रामेष्व् अ-निवर्तिनः ।
N] बलिनो निस-युक्तस्य भार्याऽर्थे किं न कल्पसे॥१२॥ [१२
प्रियां बहु-मतां भार्यां त्यक्त्वा राजा महा-बलः ।
N] मन्दोदरीं मनो-ज्ञां वै त्वाम् उपैति स रावणः ॥१३॥ [१३
समृद्धं स्त्री-सहस्रम् च नाना-रत्नम् च मैथिलि ।
N] अन्तः-पुरं समुत्-सृज्य त्वाम् उपैति स रावणः॥१४॥ [१४
अ-सकृद् देवता: सार्धं यक्ष-गन्धर्व-दानवैः ।
N] निर्-जिताः समरे येन स वै मूलम् उपाऽऽगतः॥१५॥ [१६
तस्य सर्व-समृद्धस्य रावणस्य महाऽऽत्मनः ।
N] किम्-अर्थं राक्षसेन्द्रस्य भार्यात्वं नाऽभि-मन्यसे॥१६॥ [१७

---

१. फ अ–भार्यात्वं । २. च–०क्तं । ३. च–०मन्यसे । ४. रा प्र थ म ल$_1$–मैथिल्ये । ल$_2$–सीताया । ५. म–०रमेदतातना । ६. [illegible] थ ल$_1$,ल$_2$–नास्ति ॥ ७ रा प्र थ ल$_1$ ल$_2$–नास्ति । ८. रा प्र थ म ल$_2$–सीते । ल$_1$–सीतां । ९. फ–भार्या भवितुमर्हसि । अ–भार्यात्वं नानुकल्पसे । १०. फ च थ म ल$_1$–वीर्योऽभिजनस्य । ११. फ म–भार्यात्वं । १२. रा प्र ल$_2$ अ–नास्ति ॥ १३. च प्र थ म ल$_2$–०मनीं । १४. रा–राजा त्यक्त्वा भार्यां । १५. फ–मनोज्ञार्थी॥ १६. आ–समृद्धः ।१७. अ–०कृद्दत्तं । १८. फ–०वंशार्थः । अ–र्थदानवाः ॥ १९. फ–समिद्धस्य । २०. च रा प्र थ म ल$_3$ ल$_2$–भार्यार्थं ॥

ततः सीतां समन्तास् ता राक्षस्यो वि-कृताऽऽननाः ।
३] परुषं परुषाऽन्-अर्हाम् ऊचुस् तां वाक्यम् अ-प्रियम् ॥१॥ [१
४पू] किं त्वम् अन्तः-पुरे सीते सर्व-भूत-मनो-हरे ।
N] चारु-रत्न-समाकीर्णे न वि-श्वससि मैथिलि ॥२॥ [N
४उ] महाऽर्हे-शयनोपेते न वासं बहु मन्यसे । [२उ
५उ] मता-हर मनो रामान् न त्वं जातु गमिष्यसि ॥३॥ [३उ
६पू] किं त्वम् आ-वसथे रम्ये दिव्यें-काम-मनो-रमे ।
N] चारु-रत्न-समाकीर्णे न वासं बहु मन्यसे ॥४[5]॥ [N
येन लोकास् त्रयः सर्वे सुर-राजश् च निर्-जितः ।
७] तस्य नैर्ऋत-राजस्य भार्याऽर्थं किं न कल्पसे ॥५॥ [N
मानुषी मानुषं कान्तं रामम् इच्छसि शोभने ।
८] राज्याद् भ्रष्टम् अ-सिद्धाऽर्थं वि-क्लवं तम् अ-निन्दिते ॥६॥[11] [५
राक्षसीनां वचः श्रुत्वा सीता पद्म-निभेक्षणा ।
९] नेत्राभ्यां वारि-पूर्णाभ्याम् इदं वचनम् अब्रवीत् ॥७॥ [६
यद् इदं लोक-विद्विष्टम् उदा-हरथ सं-गताः ।
१०] नैतन् मनसि मे[13] वाक्यं किल्बिषं सम्-तिष्ठते ॥८॥ [७

---

१. रा—अब्रवीत् ॥ २. फ घ—नेच्छसि त्वं हि ॥ ३. फ—मानुषी मानुषस्यैव पतित्वं । ४. फ च रा च म ल$_{1}$ ल$_{2}$ अ—वासं ॥ ५. ल$_{1}$—दिवि कामो मनोहरे ॥ अ—नित्यं कामं म० । ६. फ—नास्ति ॥ ७. फ घ अ—भार्यार्थं ॥ ८. फ अ—गन्तुं । ९. प्र व म ल$_{1}$ ल$_{2}$—कान्तम् । १०. फ—राजभ्रष्टम् । प्र व म ल$_{1}$—राज्याद्भ्रष्टम् । ११. फ—वैक्लव्यं त्वम् । १२. ल$_{2}$—नास्ति ॥ १३. फ प्र व म ल$_{1}$—वाक्य मे । १४. प्र व म ल$_{1}$—कलुषं ॥

यद्-भयान् न तपेत् सूर्यो भीतो यस्माच् च मारुतः ।
N] न वाति स्माऽऽयताऽपांऽगि तस्मात् त्वं न विभेषि किम् १७[१९
पुष्प-वृष्टिं वि-मुञ्चन्ति भयाद् यस्य महा-द्रुमाः ।
N] शैलाश् च शुभ्र-पानीयं जलदाश् च यथेच्छया ॥१८॥ [२०
तस्य नैर्ऋत-राजस्य राज-राजस्य भामिनि ।
N] किं त्वं न कुरुषे बुद्धिं भार्याऽर्थे रावणस्य ह ॥१९॥ [२१
एतत् साधु मया देवि भाषितं साधु-भाषिणि ।
N] गृहाण पुष्पितं वाक्यं मा भूत् ते मनसि ऽन्यथा॥२०॥ [२२
समर-शिरसि यस्य त्रस्त-विध्वस्त-चेताः
पितृ-पतिर् अपि तूर्णं मोक् पलाऽऽयिष्ट युक्तः ।
विजित-सकल-लोकं रावणं तं महेन्द्रं
N] किम् इति न बहु-मानाद् आश्रयस्यू उत्तमाऽङ्गे(ङ्गि)।२१[N

इत्यार्षे रामायणे सुन्दर-काण्डे सीता-प्रबोधनं
नामाऽष्टादशः सर्गः ॥ १८ ॥

---

१. फ अ–०याद्य तपत्यर्को । रा ल२–यद्भयात्तपते सूर्यो । २. फ–०तापांगे ॥ ३. फ–प्रमु० । व–न मु० । ४. अ–यस्मान्महाद्रुमाः । ५. फ–सुभ्र पाणियं । व–सुभ्राच्च पा०। म ल१ ल२–सुभ्राश्च पा०। अ–शुभ० । ६. आ व–०च्छत: ॥ ७. फ–०भाविनि । ८. फ रा–वै ॥ ९. फ–सा त्वमेतद्वचो । अ–सार्थकं मद्वचो । १०. फ–भून्मनसि ते ॥ ११. रा–प्रापलायिष्ट । १२. आ–मदोर्थं । व म ल१ ल२–महेच्छं । अ–महीतं । १३. फ–०यस्यानतांगि ॥ १४. अ–राक्षसीतर्जनो सर्गः । फ–रावणसीतावाक्यं । रा–सीता प्रबोधो । १५. ल१–विंशतिः सर्गः ॥

ततः सीतां समन्तात् ता राक्षस्यो वि-कृताऽऽननाः ।
३] परुषं परुषाऽनू-अर्हाम् ऊचुस् तां वाक्यम् अ-प्रियम् ॥१॥ [१
४पू.] किं त्वम् अन्तः-पुरे सीते सर्व-भूत-मनो-हरे ।
N] चारु-रत्न-समाकीर्णे न वि-श्वससि मैथिलि ॥२॥ [N
४उ] महाऽर्ह-शयनोपेते न वासं बहु मन्यसे । [२उ
५उ] महा-हर मनो रामान् न त्वं जातु गमिष्यसि ॥३॥ [३उ
६पू.] किं त्वम् आ-वसथे रम्ये दिव्ये-काम-मनो-रमे ।
N] चारु-रत्न-समाकीर्णे न वासं बहु मन्यसे ॥४॥ [N
येन लोकास् त्रयः सर्वे सुर-राजश् च निर्-जितः ।
७] तस्य नैर्ऋत-राजस्य भार्याऽर्थं किं न कल्पसे ॥५॥ [N
मानुषी मानुषं कान्तं रामम् इच्छसि शोभने ।
८] राज्याद् भ्रष्टम् अ-सिद्धाऽर्थं वि-क्लवं तम् अ-निन्दिते ॥६॥ [५
राक्षसीनां वचः श्रुत्वा सीता पद्म-निभेक्षणा ।
९] नेत्राभ्यां वारि-पूर्णाभ्याम् इदं वचनम् अब्रवीत् ॥७॥ [६
यद् इदं लोक-विद्विष्टम् उदा-हरथ सं-गताः ।
१०] नैतन् मनसि मे[13] वाक्यं किल्बिषं सम-तिष्ठते ॥८॥ [७

---

१. रा—अब्रवीत् ॥ २. फ च—नेच्छसि त्वं हि ॥ ३. फ—मानुषी मानुषस्यैव पतित्वं । ४. फ च रा ब म ल१ ल२ अ—रामं ॥ ५. ल१—दिवि धामो मनोहरे ॥ अ—नित्यं कामं म० । ६. फ—नास्ति ॥ ७. फ च अ—मार्याऽर्थं ॥ ८. फ अ—गन्तुं । ९. प्र य म ल१ ल२—कान्तम् । १०. फ—राजभ्रष्टम् । प्र व म ल१—राष्ट्राद्भ्रष्टम् । ११. फ—नैर्ऋत्यं त्वम् । १२. ल२—नास्ति ॥ १३. फ प्र व म ल१—वाक्यं मे । १४. प्र व म ल१—कलुषं ॥

न मानुषी राक्षसस्य भार्या भवितुम् अर्हति ।
N] कामं खादत मां सर्वा न करिष्यामि वो वचः ॥९॥ [८

दीनो वा राज्य-हीनो वा यो मे भर्ता स मे गुरुः । [९पू
११] राजा गुरुर् महा-तेजाः सर्वस्याऽनु-मतो यथा ।
न स शक्यः परि-त्यक्तुं मम वै दैवतं पतिः ॥१०॥ [N

१२] सीताया वचनं श्रुत्वा राक्षस्यः क्रोध-मूर्च्छिताः ।
भर्त्सयन्ति स्म परुषैर् वाक्यै रावण-चोदिताः ॥११॥ [१३

१३] अथ लीनस् तु तद् वाक्यं हनूमान् शिंशिपा-द्रुमे ।
सीतां सं-तर्जयन्तीनां राक्षसीनाम् उपाऽशृणोत् ॥१२॥ [१४

१४] ताम् अति-क्रम्य सं-रब्धा वेपमानास् ततस् ततः ।
भृशं सं-लिलिहुश् चोष्ठान् प्र-लम्ब-दशन-च्छदान् ॥१३॥ [१५

१५] ऊचुश् चैनां समा-रब्धाः प्र-गृह्याऽसि-परश्वधान् ।
नेयम् अर्हति भर्तारं रावणं राक्षसाऽधिपम् ॥१४॥ [१६

१६] सा भर्त्स्यमाना भीमाभी राक्षसीभिर् वराऽऽनना ।

---

१. आ–नामानुषी । २. ल$_1$–रक्षितुम् ॥ ३. ल$_2$–राज्यहीन॰। अ–राज्यभ्रष्टो । ४. फ–यश्चे । ५. फ–॰स्यानुम॰ । ६. फ अ–शक्यः स प॰। ७. च रा प्र य म ल$_1$ ल$_2$–ममैवं ॥ ८. आ फ–रावणचोदितैः ॥ ९. फ ल$_2$ अ–भत्स्ली॰ । १०. फ–निर्वाक्यं । ११. आ–॰मां शिंशिपाद्रु॰। फ–॰मांशिंशिपा॰ । ल$_2$–॰मान् शिंशपाद्रु॰ ॥ १२. आ–संरब्धां । १३. फ च रा प्र य म ल$_1$ ल$_2$–॰हुर्जिह्वां । १४. फ च रा प्र य म ल$_1$–॰नच्छदाः । ल$_2$ अ–॰नच्छदां ॥ १५. आ–अभ्युग् । १६. फ–॰मारब्धं । रा प्र म य ल$_1$ ल$_2$ अ–सुसंरब्धाः ॥ १७. प्र म ल$_2$ अ–॰ह्यासुप॰ । घ–॰ह्यापर॰ । ल$_1$–परिगृह्य प॰ । व–भिन्नाः—॰मिरस्ध्यान् ॥ १८. ल$_2$–॰र्त्स्यंमे न भीमाक्षी ।

स-बाष्पम् उप-सर्पन्ती शिंशिपां[2] समुपाऽऽगमत् ॥१५॥ [१७

१७] ततस् तां शिंशिपां सीता राक्षसीभिः समा-वृता ।
अभि-गम्य विशालाऽक्षी तस्थौ शोक-परिप्लुता ॥१६॥ [१८

१८] तां कृशां दीन-वदनां मलिन-क्लिष्ट-वाससम् ।
भर्त्सयाञ्चक्रिरे भीमा राक्षस्यस् ताः समन्ततः ॥१७॥ [१९

१९] ततस् तु वि-नता नाम राक्षसी भीम-निःस्वना ।
अब्रवीत् कुपिता क्रूरा कराला निर्-णतोदरी ॥१८॥ २०

२०] सीते पर्याप्तम् एतावद् भर्तृस्नेहः प्र-दर्शितम् ।
सर्वत्राऽति-कृतं भद्रे व्यसनायोप-कल्पते ॥१९॥ [२१

२१] परि-तुष्टाऽस्मि भद्रं ते कर्तव्यं मानुषं कृतम् ।
ममाऽपि वचनं पथ्यं ब्रुवन्त्याः कुरु मैथिलि ॥२०॥ [२२

२२] रावणं भज भर्तारं भर्तारं सर्व-रक्षसाम् ।
वि-क्रान्तं रूप-सम्पन्नं सुरेशम् इव वासवम् ॥२१॥ [२३

२३] दक्षिणं त्याग-शीलं च सर्वस्य प्रिय-वादिनम् । [२४
मानुषं कृपणं रामं त्यक्त्वा रावणम् आश्रय ॥२२॥

---

१. म ल$_1$—०ष्पमुखपर्यन्ता । ल$_2$—सवाष्पे मुखपर्यन्ता । २. श्रा फ य श्र च रा प्र—सिंसिपा । म—शिंशुपा । ल$_2$—शिशपा । ३ रा प्र म ल$_1$—सा समागमत् । फ च—समुपागताम् ॥ ४ श्रा—ततस्तु । श्र—ता तदा । ५ ल$_1$ श्र—शिशपा । ६ श्रा फ च ल$_2$—समावृताम् । ७ फ च—०नकृष्णवा० । रा प्र घ म ल$_1$—०नक्लिष्टगा० ॥ ८ प्र—वनिता । ९ फ रा—०मविक्रमा । श्र—०मदर्शना । १० श्रा—निर्नतो० । रा प्र व ल$_2$—निम्नतो० । म ल$_1$—निम्नितो० ॥ ११ फ श्र—भर्तृस्नेह प्र०। प्र च रा प्र व म ल$_1$ ल$_2$—भर्तुश्चिना प्रदर्शिता । १२ फ—०ग्राविष्कृत । श्र—०श्राप्यकृत ॥ १३ श्रा—अति । १४ फ च रा श्र—च वच । १५ श्रा—ब्रुवत्या । श्र—ब्रुव भकुर ॥ १६ रा प्र च म ल$_1$ ल$_2$—कुरु ॥ १७ श्र—त्यक्त्वा मैते रा० ।

२४] दिव्याऽङ्ग-रागा वैदेहि दिव्य-भूषण-भूषिता । [२५
अद्य-प्रभृति सर्वेषां लोकानाम् ईश्वरी भव ॥२३॥
२५] अग्नेः स्वाहा यथा पत्नी शची चेन्द्रस्य शोभते । [२६
२६पू] उमा देवी च रुद्रस्य सन्ध्या पूष्णो वि-राजते ॥२४॥ [N
२७उ] एवं त्वं राक्षसेन्द्रस्य भव पत्नी वराऽऽनने । [N
२८पू] किं ते रामेण वैदेहि मानुषेण गताऽऽयुषा ॥२५॥
एतद् उक्तं च मे वाक्यं यदि त्वं न करिष्यसि ।
२९] अस्मिन् मुहूर्ते सर्वास् त्वां भक्षयाम न संशयः॥२६॥ [२७
अन्या तु वि-कटा नाम राक्षसी क्रोध-मूर्च्छिता ।
३०] अब्रवीद् वचनं सीतां मुष्टिम् उद्यम्य तर्जनीम्॥२७॥ [२८
बहून्य् अ-प्रति-रूपाणि वचनानि सहाम ते ।
३१] अनु-क्रोशान् मृदुत्वाच् च स्नेहार्थं च तव मैथिलि॥२८॥ [२९
तव हेतोर् विशालाऽक्षी सर्वाः क्रियामहे यतः ।
३२] इच्छ वा रावणं सीते किं चिरेण प्रियस्व वा ॥२९॥ N
ततो हय-मुखी नाम लम्बमान-पयोधरा ।
३४] अब्रवीत् कुपिता दीना दीप्ताऽऽस्या दीप्त-लोचना॥३०॥[N
अनु-नीता त्वम् अस्माभिश् चिरं सान्त्वेन मैथिलि । [N
३०] न च नः कुरुषे वाक्यं हितं काल उप-स्थिते ॥३१॥ [३०
आ-नीताऽसि समुद्रस्य पारं मर्त्य-दुरा-सदम् ।

---

१ प्र य म ल, ल -राजन । २ आ फ च प्र य ल, ल अ-वरानन ॥ ३ रा-नास्ति ॥ ४ फ-भक्षयेयुर्न ॥ अ-भक्षयामो । ५ फ-गर्जनी । रा प्र य म ल, ल₂ अ-गर्जनी ॥ ६ आ फ अ-सहामि । ७ फ अ-त्वत्त्वयाक्रन्त ॥ ८ फ अ-चिरम् । ९ आ च रा प्र य म ल, ल अ-प्रियस्व ॥ १० च ल, ल₂-उपसु० । ११ फ अ-दीप्तमूर्दंजा ॥ १२ आ फ च रा प्र य म ल, -सान्त्वेन ॥

३६] रावणाऽन्तः-पुरं घोरं प्र-विष्टा चाऽसि मैथिलि ॥३२॥ [३१

३७उ] रावणाऽन्तः-पुरे रुद्धाम् अस्माभिश् च सु-रक्षिताम् ।

न त्वां शक्तः परि-त्रातुम् अपि साक्षात् पुरन्दरः ॥३३॥ [३२

३८] कुरुष्व हित-वादिन्या वचनं मम मैथिलि ।

N] तुल्यम् अश्रु-प्रपातेन त्यज शोकम् अन-अर्थकम् ॥३४॥ [३३

भज प्रीतिं प्र-हर्षं च त्यजेतां नित्य-दीनताम् ।

३९] सा त्वं राक्षस-राजेन सह क्रीड यथा-सुखम् ॥३५॥ [३४

जानासि च यथा भीरु स्त्रीणां यौवनम् अ-ध्रुवम् ।

४०] यावत् तन् न व्यति-क्रान्तं तावत् सुखम् अवाऽऽप्नुहि॥३६॥ [३५

उद्यानानि च सर्वाणि पर्वतोप-वनानि च ।

४१] सह राक्षस-राजेन चर त्वं मदिरेक्षणे ॥३७॥ [३६

स्त्री-सहस्राणि ते सप्त वशे स्थास्यन्ति सुन्दरि ।

४२] रावणं भज भर्तारं भर्तारं सर्व-रक्षसाम् ॥३८॥ [३७

स्त्री-दुःखं स्त्री वि-जानीते तेनाऽर्थं प्र-ब्रवीमि ते ।

N] स्त्रीणां स्त्रियो गतिर् यस्मात् तेन त्वां प्र-ब्रवीम्य् अहम् ॥३९॥ [N

उत्-पाट्य च ते हृदयं भक्षयिष्यामि मैथिलि ।

---

१. आ फ अ–रावणस्य गृहे । २. आ–त्वा म० । ३. आ घ–सुरक्षिता । ४. प्र–अत आरभ्य सर्गसमाप्ति यावत्पाठो नास्ति । ५. फ घ ल$_2$ अ–०रित्रातुं साक्षादपि । ६. अ–अलमश्रु० ॥ ७. आ–भद्र प्रीतिं । अ–भज कामं । ८. अ–नित्यदैन्यताम् ॥ ९. रा–जानामि । १०. फ च म–हि । अ–स्वयथा । ११. आ–यावच्चाद्य व्य० । ल$_2$–यावन्न तु व्य० । अ–यावच्च तदतिक्रामेत् ॥ १२. रा य म ल$_1$ ल$_2$–भज ॥ १३. फ–विजानाति तेनात्यर्थं ब्रवीमि । १४. ल$_2$–स्त्रियः स्त्रीणां । १५. फ–गतिर्यतस्तेन त्वां प्रार्थयामहे ॥ १६. फ च रा–चा ते । य म ल$_1$ ल$_2$ अ–ते वा ॥

४३] यदि मे[1] व्या-हृतं वाक्यं यथावन् न करिष्यसि ॥४०॥[३८

ततश् चण्डोदरी[2] नाम राक्षसी क्रूर-दर्शना[3] ।

४४] भ्रामयन्ती महा-शूलं वचनं चेदम् अब्रवीत्[4] ॥४१॥ [३९

इमां हरिण-लोलाऽक्षीं त्रासोत्कम्पि-पयोधराम्[5] ।

४५] रावणेन[6] हृतां दृष्ट्वा दोहदो मे महान् अभूत् ॥४२॥ [४०

यद् यकृत्-पिण्डं च हृदं(दि)यं रुधिरं च[7] स-बन्धनम्[8] ।

४६] अन्त्राण्य् अस्याः[9] शिरश् चैव खादेयम् इति मे मतिः ॥४३॥[४१

ततस् तु प्र-घसा[10] नाम राक्षसी वाक्यम् अब्रवीत् ।

४७] कण्ठम् अस्या नृ-शंसायाः पीडयामि[11] किम् एतया ॥४४॥[४२

नि-वेद्यतां ततो राज्ञे मानुषीऽयं मृतेति[12] ह[13] ।

N] अत्र[14] कश्चिन् न सं-देहः खादतेत्य्[15] एव वक्ष्यति[16] ॥४५॥ [४३

दृष्ट्वा ह्य् एतां निर्-उच्छ्वासां वैवस्वत-गतिं गताम् ।

४८] भक्ष्यताम्[17] इति मन्वानो[18] रावणो ह्य् अभि-धास्यति ।[19] [N

वि-शस्यैतां ततः सर्वाः शमी-कुरुत[20] लेशी-तः ॥४६॥[21][४४उ

---

१. फ–यदिमं व्या० । २. फ म–चन्द्रोदरी । च–छंदोदरी । रा–मंदोदरी । घ ल, ल₂–छतोदरी । ३. फ–क्रूरनिस्वना । रा–घोरद० । म–क्रोधमूर्छिता । ४. फ–महच्छूलमिदं वचनमब्रवीत् । अ–महाशूलमिदं वचनमब्रवीत् ॥ ५. घ–त्रासोत्कर्णप० । ६. ल₁–राक्षसेन ॥ ७. आ–यपरित्रं च । रा म ल₁ ल₂–पक्वच्छित्तं च । प्र च घ–यकृत् पित्तं च । ८. फ अ–क्रोडं च हृदयं । ९. आ–अंत्राणास्याः ॥ १०. आ–तपमा । फ–प्रच्वसा । रा–प्रवसा । अ–प्रथमा । ११. आ–पाटयामि ॥ १२. घ ल₁–०यते । १३. म–०पी सा । १४. फ च–च । रा घ म ल₁ ल₂–हि । १५. ल₂–अथ । १६. आ–पाद्यतेत्येव वक्ष्यथः ॥ १७. फ–भारयंमानां हि । च रा ल₁ ल₂–भजतामिति । १८. म–मर्वा नो । १९. अ–नास्ति । २०. य म ल₂–मांसं कु० । २१. फ–मागता ॥ २२. ल₁ ल₂–नास्ति ॥

ततस् त्व् अयो-मुँखी नाम राक्षसी वाक्यम् अब्रवीत् । [N
४९] वि-भंजाम समाँम् एँनां वि-वादो मे न रोचते ।
N] पेयम् आ-नीयतां क्षिप्रं माल्यं च वि-विधं बहु ॥४७॥[४] [४५
ततः शूर्प-णँखा नाम राक्षसी वाक्यम् अब्रवीत् ।[५]
५०] अयो-मुँख्या यद् एवोक्तं ममाऽप्य् एतद् वि-चक्षितम्॥४८॥[४६
सुराम् आ-नीयँतां क्षिप्रं सर्व-शोक-विनाशिनीम् ।
५१] मानुषं मांसम् आँदाय नृँत्यामोऽथ नि-कुम्भिँलाम् । [४७
५२उ] तस्माद् एताम् अव-छेँम्य भँक्षाम सहिता वयम् ॥४९॥
एवं सं-भँर्त्स्यमाना सा सीता सुर-सुतोपमा ।
५३] राक्षसीभिः सु-घोराभिर् धैँर्यं त्यक्त्वा रुरोद ह ॥५०॥ [४८
अत्युत्-कटाभिर् अ-सकृत् परि-भर्त्स्यमाना[१३]
सा राक्षसीभिर् अ-सितोत्पल-पत्त्रवाऽक्षी ।
नि-श्वँास-धूमम् अकरोत् मृग-लाञ्छनस्य
N] तुल्यं मुखं यँदृ अधिकं तत एव चाऽभूँत् ॥५१॥ [N

इत्यार्षे रामायणे सुन्दर-काण्डे लंकी-पर्वणि सीता-वर्णनं नामैकोनविंशः सर्गः ॥१९॥

---

१. फ–त्वधोमु० । च–त्वजोमु० ॥ २. आ–विभजाम: । ल$_1$–त्रुटित: पाठ: । ३. आ–समालेशाद्विवा० । रा थ म ल$_2$–ह लेशेन वि० । ४. ल$_1$–नास्ति ॥ ५. फ थ च रा म–सूर्पनखा । ६. फ–अधोमु० । च–अजमु० ॥ ७. च रा ब ल$_2$–आनयत । ८. फ अ–आसाद्य । ९. थ–नृत्यामोऽथ । १०. आ–निकुस्तिलाम् । च–निकुन्तलं । रा प्र ब म ल$_1$–यथासुखम् । ११. फ–अवष्टभ्य खादाम । थ म ल$_2$–०भ्य भक्षाम । अ–०भ्य खादाम: ॥ १२. फ–संतर्ज्यमा० ॥ १३. फ अ–हत्युत्कटाभि: परिभर्त्स्यमाना । १४. आ–निस्वासधू० । १५. ल$_2$–तदधिकं । १६. फ अ–चाभूत् ॥ १७. फ–राक्षसीविभीषणवाक्यं मा० । थ ल$_1$ ल$_2$ अ–नास्ति ॥

अथ तासु वदन्तीषु परुषं दारुणं वचः ।
N] राक्षसीष्व् अत्यं-असौम्यासु रुरोद जनकाऽऽत्म-जा॥१॥[१
सा स्नापयन्ती वि-पुलौ स्तनौ नेत्र-जल-स्रवैः ।
N] चिन्तयन्ती न शोकस्य तदाऽन्तम् अधि-गच्छति ॥२॥ [७
सर्वोपायैर् उपाऽऽक्रम्य सीतां ता रावणे-स्त्रियः ।
N] तूष्णी बभूवुर् युगपत् कृत्वाऽऽज्ञां भर्तुर् आ-हताः॥३॥ [N
सा वेपमाना सततं प्र-वाते कदली यथा ।
१] राक्षसीभ्यो भयं-त्रस्ता वि-वर्ण-वदनाऽभवत् ॥४॥ [८
तस्याः सा कम्पमानाया दीर्घा सुवि-पुलाऽसिता ।
२] कम्पिता १चिरा वेणी सर्पन्ती भुजगी यथा ॥५॥ [९
एवम् उक्ता तु वैदेही राक्षसीभिर् मनस्विनी ।
३] उवाच परम-त्रस्ता वाष्प-गद्गदया गिरा ॥६॥ [२
न मानुषी राक्षसस्य भार्या भवितुम् अर्हति ।

---

१. रा घ ल$_1$–इति तासु व०। ञ–तथा तासां वदंतीनां । म–अथ तासां वदंतीनां । २. फ ञ–बहु । ३. फ च ञ–०सीष्वस्यसौम्या सा । रा घ म ल$_1$ ल$_2$–०सीष्वतिघोरा सा । ४. प्र–अतः श्लोकादारभ्य "निरुद्धा रावणेनेह" इत्यादिश्लोकपर्यन्तं पाठो नास्ति ॥ ५. ल$_1$–संस्ना० । ञ–सौ स्ना० । ६. ञ–०स्रवे ।७. रा घ म ल$_1$–पारं चानधिग० । ल$_2$–पारमनधिग० ॥ ८. फ रा घ म ल$_1$ ल$_2$–०यैरुपक्रम्य । ९. म–राक्षसस्त्रियः । १०. ञ–नास्ति ॥ ११. फ य–नास्ति । १२. म–भयात्त्रस्ता ॥ १३. ञ–तस्याश्च । १४. य–सुविमला० । १५. आ–कम्पन्त्या कम्पिता वेणीं कम्पन्ती । फ ञ–ददर्शे कम्पिता वेणीं सर्पन्ती । १६. अतः परमधिकः पाठः—फ–सा वेपमाना ददर्शे प्रवाते कदली यथा ॥ १७. घ रा घ म ल$_1$ ल$_2$–राक्षसीनां विरूपाणां श्रुत्वा वाचः सुदारुणाः ॥

४] कामं खादत मां सर्वा न करिष्यामि वो वचः ॥७॥ [३
५पू] नि-श्वसन्त्य् अति-दुःखाऽऽर्त्ता भयोप-हत-चेतना । [१०पू
हा रामेति च दुःखाऽऽर्त्ता पुनर् हा लक्ष्मणेति च ।
११] हा श्वश्रु मम कौसल्ये हा सुमित्रे ममेति च ॥८॥ [११
२पू] एषाऽल्प-पुण्या कृपणा वि-नंक्ष्यामि यथाऽयथम् । [१४पू
५उ] आर्त्ता व्य्-असृजद् अश्रूणि मैथिली नि-ललाप च ॥९॥
लोक-प्रवादः सत्योऽयं पण्डितैः समुदा-हृतः ।
६] अ-काले दुर्-लभो मृत्युः स्त्रियो वा पुरुषस्य वा ॥१०॥ [१२
यच्च् चाऽहम् आभिः क्रूराभी राक्षसीभिर् इहाऽर्दिता ।
७] जीवामि पति-हीना तु मुहूर्त्तम् अपि दुःखिता ॥११॥ [१३
सा राक्षसी-मध्य-गता सीता सुर-सुतोपमा ।
८] न शर्म लेभे दुःखाऽऽर्त्ता रावणेन च तर्जिता ॥१२॥ [४
प्राऽवेपताऽधिकं सीता स्व-गात्रम् इव चाऽविशत् ।
९] वने यूथ-परिभ्रष्टा मृगी कौकैर् इवाऽर्दिता ॥१३॥[१८] [५
सा त्व् अ-शोकस्य वि-पुलां शाखाम् आ-लम्ब्य पुष्पिताम् ।
१०] चिन्तयामास शोकेन भर्त्तारं गत-मानसा ॥१४॥ [६

---

१. आ फ च प्र अ-विश्वम० । आ फ-०पहतचे० । ३. फ च ब म ल१ ल२-हा हा रामेति । ४. अ-शोकार्त्ता । ५. आ-स्वश्रुः म० । फ च रा-श्वश्रु म० । म-श्वश्रूमम । अ-श्वश्रु माम कौ० ॥ ६. अ-विनंक्ष्या० । ७. फ म-यथातथम् । अ-यथा तथा । ८. रा ब म ल१-एवं । ९. अ-मिथिली विचशा सती । १०. आ फ च रा ब म ल१ ल२-यत्राह० ११. अ-क्राभि रा०। १२. फ च रा ब म ल१ ल२ अ-पतिना हीना । १३. अ-०सी मध्यगंता । १४. फ-निर्जिता ॥ १५. अ-प्रवेपिता० १६. अ-गात्राण्येव चा० । १७. अ-०गी गोमायुनार्दिता । १८. रा ब ल१ ल२-नास्ति ॥

१२उ] समुद्रे-मध्ये नौः पूर्णा वायु-वेगैर् इवाऽऽहता । [१४उ
भर्त्तारं तम् अ-पश्यन्ती राक्षसी-वेशम् आ-गता ।
१३] सीदामि खलु शोकेन कूलं तोयैर् इवाऽऽहतम् ॥१५॥ [१५
तं पद्म-दल-पत्राऽक्षं सिंह-विक्रान्त-गामिनम् ।
१४] धन्याः पश्यन्ति तं रामं कृत-ज्ञं प्रिय-दर्शनम् ॥१६॥ [१६
सर्वथा तेन हीनाया रामेण विदिताऽऽत्मना ।
१५] तीक्ष्णं विषम् इवाऽऽस्वाद्यं दुर्-लभं मम जीवितम् ॥१७॥[१७
कीदृशं तु मया पापं पूर्वं देहाऽन्तरे कृतम् ।
१६] यद् इयं प्राऽऽप्यतेऽवस्था मया घोरा सु-दारुणा॥१८॥ [१८
जीवितं त्यक्तुम् इच्छामि शोकेन महताऽऽयुता ।
१७] राक्षसी-रक्षितत्वाच् च कामो नाऽवाऽऽप्यते मया ॥१९॥[१९
१८पू] धिग् अस्तु खलु मानुष्यं धिग् अस्तु पर-वश्यताम्। [२०पू
N] राक्षसी वशम् आ-पन्ना भर्त्स्यमाना सु-दारुणम् ॥२०॥ [N
१८उ] न शक्यं यत् परि-त्यक्तुं स्व-च्छन्देनाऽऽत्म-जीवितम्। [२०उ
यस्माद् अ-पौरर् दुःखैर् मां प्राप्तां नयति नोऽन्तकः॥२१॥

---

१. म-मध्ये समुद्र । २. रा थ म ल१-स्वमप० । ३. आ-०सीवसमागता । ४ अ-इवाप्लुतौ ॥ ५. रा च म ल१-सुपद्मदलप० । ल२-सपद्मदलरूपाक्ष । अ-पद्मदलरकाक्ष । ६. आ-०न्तविक्रमम् । ७. फ अ-वै । ८ फ अ-प्रियवादिनाम् ॥ ९ आ फ च रा अ-इवामाद्य । १०. घ रा य म ल१ ल२ अ-पूर्वंदेहा० ॥ ११. अ-०तु । १२. फ घ रा प्र च म ल१,ल२-०तावृता । १३. रा य म ल१ ल२-नाप्ति ॥ १४. अ-परिव० । १५. म ल१ ल२-आपन्न भर्त्स्यमान । १६. रा य अ-भिद्यात्सुदारुणा । अमगत इवाप्राय श्लोकार्धः । तु० उपरि २५ द्वा: श्लो० ॥ १७. आ-दाक्या । १८. आ-पतित्य० । अ-पतित्यक्तुमात्मच्छन्देन श्रा० ॥ १९. फ-चान्तकः ॥

१९] प्र-सक्ता सु-मुखीऽत्य्-एवं रुदती जनकाऽऽत्म-जा । [दा२८स०
अधो-मुखी वि-लपितुं वाला समुप-चक्रमे ॥२२॥ [१
२०] उन्-मत्तेव प्र-मत्तेव भ्रान्त-चित्तेव भामिनी ।
उपाऽऽवृत्ता किशोरीऽवे व्य्-अचेष्टत मही-तले ॥२३॥ [२
२१] राघवस्य प्र-मत्तस्य रक्षसा काम-रूपिणा ।
रावणेन प्र-मथ्याऽहं क्रोशन्त्य् अप-ह(ऽहृ)ता वलात्॥२४॥ [३
२२] राक्षसी-वशम् आ-पन्ना भर्त्स्यमाना सु-दारुणम् ।
वि-चिन्तयामि दुःखाऽऽर्त्ता नाऽहं शक्ष्यामि जीवितुम्॥२५॥ [४
२३] न हि मे जीवितेनाऽर्थो नैवाऽर्थैर् न वि-भूषणैः ।[12]
वसन्त्या रक्षसां मध्ये विना रामं महा-रथम् ॥२६॥ [५
२४] धिग् माम् अन्-आर्याम् अ-सतीं याऽहं तेन विना-कृता ।
यन् मुहूर्त्तम् अपीऽच्छामि जीवितुं पाप-जीविका॥२७॥ [७
२५] जीविते नास्ति मे श्रद्धा सुखे वा तं विना प्रियम् ।[17]
भर्त्तारं सागराऽन्ताया वसुधायाः प्रियं-वदम्॥२८॥ [८

---

१. अ–प्रासक्ता । रा घ ल$_1$ ल$_2$–कासुमु० । २. म–मुवन्ती जन० । अ–०री जनकात्मजा ॥ ३. च रा व म ल$_1$ ल$_2$–रुदती च । ४. आ–०री च । ५. रा–व्यवेष्टत ॥ ६. अ–रक्षिसा कामरूपिणी । ७. आ प्र अ–नास्ति । ८. फ घ रा व म ल$_1$ ल$_2$–व्यचिन्त० । ९. घ–शक्नोमि । १०. आ प्र–नास्ति ॥ ११. अ–न वार्थो मे । १२. रा घ म ल$_1$ ल$_2$–नास्ति । १३. रा व म ल$_1$ ल$_2$–वसंती ॥ १४. अ–दग्धामनार्याममती । १५. फ–मुहूर्तमपि चेच्छामि । अ–या. मुहूर्तमपी० । १६. अ–पापजीवितम् । १७. फ–नास्ति मे जीवितेन सुखं तं विना प्रियम् । अ–नास्ति मे जीवितेनार्थो सुखे वा तं विना प्रियम् । १८. ल$_1$–नास्ति ॥

२६] छिद्यंतां भक्ष्यंतां वाऽपि शरीरं वि-सृजाम्य् अहम् ।[3]
मां चिरं वि-विधं दुःखं सहेयं प्रिय-वर्जिता ॥२९॥ [९

२७] चरणेनाऽपि सव्येन न स्पृशेयं निशा-चरम् ।
किं पुना रावणं नीचं कामयेयं वि-गर्हितम् ॥३०॥ [१०

२८] मत्या-ख्यातं न जानीते आत्मानं नाऽऽत्मनः कुलम् ।
यो नृशंस-प्रभावोऽयं मां धर्षयितुम् इच्छति ॥३१॥ [११

२९] छिन्ना भिन्ना वि-भक्ता वा दीप्ते वोऽग्नौ प्र-वेशिता ।
रावणं नोप-तिष्ठेऽहं किं वि-लापेन वां चिरम् ॥३२॥ [१२

३०] ख्यात-प्राज्ञः कृत-ज्ञश् च साऽनुक्रोशश् च राघवः ।
साम्प्रतं निरनु-क्रोशः शङ्के मद्-भाग्य-संक्षयात् ॥३३॥ [१३

३१] राक्षसानां जन-स्थाने सहस्राणि चतुर्दश ।
३२पू] येनैकेन निरस्तानि स मां नाऽभ्यव-पद्यते ॥३४॥ [१४

३३उ] वि-राधो दण्डकाऽरण्ये येन राक्षस-पुङ्गवः ।
३४पू] शरेणैकेन नि-हतः स मां नाऽभ्यव-पद्यते ॥३५॥ [१६

कामं मध्ये समुद्रस्य लंकेयं दुष्प्र-धर्षणा ।
N] न तु राघव-बाणानाम् अ-प्राऽऽप्याम् उप-धारये ॥३६॥ [१७

---

१. फ–०न्यतां । २. आ–भक्षतां ३. ल$_1$–नास्ति । ४ रा घ म ल$_2$ दारुणैरीरितं । ल$_1$–दारुणं नेदृशं । अ–अचिरं न चिरं ॥ ५. फ अ–रावणं किं पुनर्नीच ॥ ६. आ–प्रख्यातस्थानो म । ७ अ–नात्मानं । ८. रा–०भावस्त्वाम्प्रध० । फ–प्रधर्षयितुमिच्छ० ॥ ९. य म ल$_1$–०ऽग्नौ वा । १०. फअ–प्रदीपिता । ११. अ–रोपतिष्ठेय । १२. फ अ–प्रलापेन । १३. आ फ च रा य ल$_1$ल$_2$ अ–पार्थिवम् ॥ १४. अ–यो गुणज्ञः कृ० । १५. फ–संघृतो । अ–संज्ञातो । १६. अ–मा ऽस्मं० १७–अ सहस्राणि जनस्थाने । १८. फ–मामभ्युपप० । १९. ल$_2$–नास्ति । २०. ल$_2$ अ–नास्ति । २१. अ–माम्युपप० । २२. अ–निरुद्धा रावणेनाहं मन्दवीर्येण वीर्यवान् ॥ २३. फ–अप्राप्येम्ययधा० । रा अ–अप्राप्येयुपधा० ॥

किं नु तत्र कारणं येन रामो दृढ-पराक्रमः ।

N] रक्षसाऽप-हृतां भार्याम् इष्टां नाऽभ्यव-पद्यते ॥३७॥ [१८

३२उ] इह-स्थां मां न जानीते शङ्के लक्ष्मण-पूर्वजः ।

३३पू] जानन् नहि स तेजस्वी धर्षणां मर्षयिष्यति ॥३८॥ [१९

३४उ] हृतेति योऽपि गत्वा मां राघवाय नि-वेदयेत् । [२०पू

N] सु-महत् तेन कल्याणं कृतं स्याल् लोक-नन्दनम् ॥३९॥ [N

गृध्र-राजोऽपि समरे रावणेन नि-पातितः । [२०उ

३५] कृतं तेन महत् कर्म मां तदाऽभ्यव-गच्छता ।

तिष्ठता रावणं-द्वन्द्वे वृद्धेनाऽपि जटायुषा ॥४०॥ [२१

३६] यदि माम् इह जानीयाद् वर्त्तमानां स राघवः ।

अद्य बाणैर् अपि क्रुद्धः कुर्याल् लोकम् अ-राक्षसम् ॥४१॥ [२२

३७] वि-धमेच् च पुरीं लंकां शोषयेच् च महोदधिम् ।

रावणस्य च नीचस्य कीर्तिं नाम च नाशयेत् ॥४२॥ [२३

३८] ततो निहत-नाथानां राक्षसानां गृहे गृहे ।

यथाऽहम् एवं रुदती प्र-भीतैव पुरी भवेत् ॥४३॥ [२४

३९] वि-नष्टां रक्षसां लंकां कुर्याद् रामः स-लक्ष्मणः ।

४०पू] नहि[13] ताभ्यां शरैः[14] स्पृष्टो मुहूर्त्तम् अपि जीवति ॥४४॥ [२५

४१उ] चिता-धूमाऽऽकुल-पथा गृध्र-मण्डल-सङ्कुला ।

---

१. ल$_3$ ल$_2$–किन्तु किं । २. फ–नाभ्युपप० ॥ ३. रा प्र ब ल$_1$–जानन्नपि स । श्रा फ–जानन्नपि हि । ४. फ–घर्षयि० । ५. अ–नास्ति ॥ ६. श्रा फ च रा प्र ध म ल$_1$ ल$_2$–तदाभ्यपग० । अ–तदाभ्युपगच्छत । ७. अ–भित्वाः–रावणं द्वन्द्वे । श्रा फ च ब म ल$_3$ ल$_2$–०णयुद्धे ॥ ८. श्रा–अभिजा० । ९. फ रा म अ–अतिक्रु० ॥ १०. श्रा–विध्वंसेम ॥ ११. रा प्र–यथाहमेवं । १२. रा प्र–प्रभावेव ॥ १३. फ–स हि । १४. अ–शरैर्दृष्टो ॥

४२पू] अ-चिरेण पुरी लंका श्मशान-सदृशी भवेत् ॥४५॥ [२६

नोऽति-दीर्घेण कालेन प्राऽऽप्स्याम्य् एतं मनो-रथम् ।

४३] दुष्प्र-स्थानं समा-ख्याति सर्वेषां हि विपर्य्-अयम्॥४६॥[२७

यादृशानि हि दृश्यन्ते लंकायाम् अ-शुभानि च ।

N] अ-चिरेणैव कालेन भविष्यति हत-प्रभा ॥४७॥ [२८

हते लंका-पतौ पापे रावणे राक्षसेश्वरे ।

N] शोषं यास्यति दुर्-धर्षा प्र-मदा वि-धवा यथा ॥४८॥ [२९

पुण्योत्सव-समृद्धाऽपि दुष्ट-सत्त्वा स-राक्षसा ।

N] वि-नंक्ष्यति पुरी लंका नष्ट-भर्त्ता यथाऽङ्गना ॥४९॥ [३०

साऽन्धकारः संमुद्-योगो (?तो) हते राक्षस-पुङ्गवे ।

N] भविष्यति संमुन्-मोक्षो मेघानां शरदीऽव मे[१३]॥५०॥ [३२

यदि नाम स शूरो मां रामो रक्ताऽन्त-लोचनः ।

N] जानीयाद् वर्त्तमानां हि रावणस्य नि-वेशने ॥५१॥[१४] [३३

अनेन तु नृ-शंसेन रावणेनाऽधमेन मे[१५] ।[१७]

N] समयो यस् तु निर्-दिष्टस् तस्य कालोऽति-वर्तते ॥५२॥[३४

---

१. प्र घ म ल$_1$ ल$_2$–तत्र दी० । २. प्र घ म ल$_1$ ल$_2$–प्राप्स्याम्येतन्मनो० । रा–प्राप्स्याम्येस म० । ३. अ–दुष्प्रस्थानो यमाख्याहि ॥ ४. अ–यादृशानां हि । रा प्र घ म ल$_1$ ल$_2$–०शानीह । ५. अ–०यामाशु भामिनि ॥ ६. आ–चापि । प्र–वापि । ७. फ–०क्षसाधिपे । अ–०क्षसाधमे । ८. रा प्र घ म ल$_1$–शोकं या० । अ–शेषं पश्यति ॥ ९. फ–नष्टविध्वस्तरा० । अ–नष्टसन्त्रस्तरा० । १०. फ अ–भविष्यति । घ म ल$_1$ ल$_2$–विनश्यति ॥ ११. आ म–०कारमिवोद्यानं । फ रा प्र घ ल$_2$–०कारमिवोद्योतं । ल$_1$–०कारमिवोद्यतं । १२. अ–महानन्दो । १३. अ–खे ॥ १४. ल$_1$–नास्ति । १५. अ–मृशं० । १६. ल$_2$ अ–च । १७. ल$_1$–नास्ति । १८. अ–०लो निवर्तते ॥

अ-कार्यं येन जानन्ति नैर्ऋताः पाप-कर्मिणः ।<br>
N] धं(धि)र्मस् तेषां महा-क्रूरो भविष्यति हि मां प्रति॥५३॥ [३५<br>
नैते धर्मं वि-जानन्ति राक्षसाः पिशिताऽशनाः ।<br>
N] ध्रुवं मां प्रातर्-आशाऽर्थे राक्षसो योजयिष्यति ॥५४॥ [३६<br>
साऽहं कथं भविष्यामि तं वीरं प्रिय-दर्शनम् ।<br>
N] रामं रक्ताऽन्त-नयनम् अ-पश्यन्ती च दुःखिता॥५५॥ [३७<br>
यदि कश्चित् प्र-दाता मे विषस्याऽद्य भविष्यति ।<br>
N] क्षिप्रं वैवस्वतं देवं पश्येयं पतिना विना ॥५६॥ [३८<br>
न जाने म्रियते रामः स वा लक्ष्मण-पूर्वजः ।<br>
N] जीवन्तौ तौ[14] न कुर्यातां कथं हि मम मार्गणम्॥५७॥ [३९<br>
नूनं ममैवं शोकेन स वीरो लक्ष्मणाऽग्र-जः ।<br>
N] देवोऽऽतिथेयं शुद्धाऽऽत्मा प्रति-भाति गतोऽनघः॥५८॥[४०<br>
धन्या देवाः स-गन्धर्वाः सिद्धाश् च परमर्षयः ।<br>
N] मम पश्यन्ति ये[23] नाथं रामं राजीव-लोचनम् ॥५९॥ [४१

---

१. अ-मानन्ति । २. रा प्र ब स ल$_1$ ल$_2$-राक्षसाः पिशिताशिनः । आ-०ताः पापकर्मणः । अ-०नाः पिशिताशनाः । ३. म-धर्मोवेवो । ४. फ-महाधातो । रा प्र ब ल$_1$ ल$_2$-महां घातो । ५. अ-नास्ति । ६. आ ब ल$_1$ ल$_2$-नैतद्धर्मं । प्र-नैतद्धर्मं । ७. रा-नैर्ऋताः पापकारिणः । प्र म ल$_1$ ल$_2$-नैर्ऋताः पापकर्मिणः । ८. प्र ल$_1$ ल$_2$ अ-०तराशार्थं ॥ ९. फ अ ल$_1$-सुदुःखिता । १०. अ-भवेदिह । ११. अ-वैवस्वतं दे० । १२. आ अ-म्रियं ते । ल$_2$-म्रियते । १३. अ-च शत्रुघ्नपू० । १४. रा प्र ब म ल$_1$ ल$_2$-न प्रकु० । फ-तौ न कुर्वन्ति । १५. आ रा प्र ब म ल$_1$ ल$_2$-मोर्ग्यं ॥ १६. ल$_2$-नूनमेव शो० । १७. अ-न । १८. रा प्र ब म ल$_2$ ल$_2$-रामो ल० । १९. अ-०तिथ्यं शुद्धात्मा । २०. आ रा प्र ब म ल$_1$ ल$_2$-प्रतीच्छति । अ-प्रतीच्छत । २१. अ-धन्याश्च देवा ग० । २२. फ ब-नास्ति । २३. अ-वै नाथं । आ फ च-ये रामं ॥

अथवा नहि तस्याऽर्थो धर्म-कामस्य धीमतः ।
N] मया रामस्य राजर्षेर् भार्यया परमाऽऽत्मनः॥६०॥ [४२
दृश्यमाने भवेत् प्रीतिर् अ-दृश्ये प्रीति-सौहृदम् ।
N] नाशयन्ति कृत-घ्नांस् तु न रामो नाशयिष्यति॥६१॥ [४३
किं नु मे न गुणाः केचित् किं वा भाग्य-क्षयो हि मे ।
N] याऽहं हीना वराऽर्हेण रामेण विदिताऽऽत्मना ॥६२॥ [४४
श्रेयो मे जीवितान् मृत्युर् वि-हीना या ह्य् अहं ततः ।
N] रामाद् उत्कृष्ट-चारित्राच् छूराच् शत्रु-निबर्हणात्॥६३॥ [४५
अथवा न्यस्त-शस्त्रौ तौ वने मूल-फलाऽशनौ ।
N] भ्रातरौ हि नर-श्रेष्ठौ चरन्तौ वन-गोचरौ ॥६४॥ [४६
अथवा राक्षसेन्द्रेण रावणेन दुर्-आत्मना ।
N] छद्मना घातितौ वीरौ भ्रातरौ राम-लक्ष्मणौ ॥६५॥ [४७
साऽहम् एवं गते काले मर्तुम् इच्छामि सर्वथा ।
N] न च मे वि-हितो मृत्युर् अस्मिन् दुःखेऽभि-वर्तते॥६६॥ [४८
धन्याः खलु महाऽऽत्मान ऋषयः सत्य-सङ्गराः ।
N] जिताऽऽत्मानो महा-भागा येषां नास्ति प्रियाऽप्रियम्॥६७॥[४९

---

१. ल₂-तस्यापि । २. प्र ल₁ अ-भार्यायाः ॥ ३. ल₂ प्र-प्रतिसौहृ० । अ-प्रीतिमौरमम् । ४. अ-कृतघ्ना ये ॥ ५. प्र-किं न रामे । ल₁-किं रामे न । ६. घ रा प्र म अ थ ल₂-सन्ति । आ-केचि । ७. प्र-तु ॥ ८. प्र घ ल₁-श्रेयान्मे । ९. फ घ रा-०तान्मर्तुं । अ-जीवनान्मृत्युः । १०. आ म ल₂ अ-विहिना । ११. फ अ-रामादुत्कृष्टचा० ॥ १२. फ अ-न्यस्तश० । रा-शस्त्रपक्षौ । १३. रा प्र घ म ल₁-०लाशिनौ । १४. आ घ रा प्र म-चरन्तौ । १५. फ अ-नास्ति ॥ १६. अ-किन्तु कर्तुं । प्र-काले [illegible] । १७. आ घ अ-०था: । ल₂-०नः । १८. आ-मेऽवाहितो मृत्युरस्मिन् । १९. रा प्र घ म ल₁-दुःखेनिव० । अ-दुःखे निव० ॥ २०. अ-धन्याश्च ते । २१. ल₂-सत्यसंगमाः । २२. अ-महात्मानो । २३. अ--प्रियं प्रि० ॥

पश्यतस् तस्य रुदतस् तप्यतश् च पुनः पुनः ।
N] प्राऽज्वालयन दाशरथेस् तानि शोक-हुताऽशनम्॥४२॥ [४१
शोचितं सु-चिरं तेन दुःखाऽऽर्त्तेन महाऽऽत्मना ।
३४] मया स वि-विधैर् वाक्यैः कृच्छ्राद् उत्थापितः पुनः ४३॥[४२
तानि दृष्ट्वा महाऽर्हाणि दर्शयित्वा मुहुर् मुहुः ।
N] राघवः सह-सौमित्रिः सु-ग्रीवम् उप-तापयेत् ॥४४॥ [४३
तवाऽदर्शन-जेनाऽऽर्ये राघवः परि-तप्यते ।
३५] महता ज्वलता नित्यम् अग्निनेवोच्च-पर्वतः ॥४५॥ [४४
त्वत्-कृते मदनश् चैव शोकश् चिन्ता च राघवम् ।
३६] तापयन्ति महाऽऽत्मानम् अग्न्य्-अगारम् इवाऽग्नयः ४६॥[४५
तवाऽदर्शन-जेनाऽऽर्ये शोकेन च वि-चाल्यते ।
३७] महा-भूमि-चलेनैव शिला-धातु-सखोऽचलः ॥४७॥ [४६
तानि रम्याणि पश्यन् स काननानि महान्ति च ।
३८] रतिं न विन्दते रामस् त्वाम् अ-पश्यन् नृपाऽऽत्मजे ४८॥[४७
सहितौ राम-सुग्रीवाव् उभाव् अकुरुतां ततः ।
N] समयं वालिनं हन्तुं तौ तवाऽन्वेषणाय च ॥४९॥ [४९

---

१. आ फ अ–पश्यतस्तानि । प्र–पश्यतो रुदतस्तस्य । २. फ–तस्य तस्य । आ–तय तस्य । ३. फ–दर्शयतम् ॥ ४. आ–यया । ५. फ–च ॥ ६. फ–उपपादयत् । म ल१–उदपादयत् । अ–उपतापयत् । ७. ल२–नास्ति ॥ ८. ल१–तावद्दर्शन० । ९. आ ल१–चतुर्भिः प० । म–चतुर्भिः परितप्यते । १०. फ–०नेवाग्निप० । च रा प्र व म ल१–नेव हि प०॥ ११. आ–०गाराय चाग्नयः । १२. अ–नास्ति ॥ १३. प्र–०जेनापि । १४. म–परिचा० । अ–तु वि० । १५. आ–०तुरिवाचलः । ल१–०तुमयोचलः॥ १६. अ–नृपात्मजः । व म–०श्यपश्यनिन्दिते । १७ अतः परमधिकः पाठः–म अ–स त्वां मनुजशार्दूलः क्षिप्रं द्रक्ष्यति राघवः । समित्रबान्धवं हत्वा रावणं जनकाऽऽत्मजे ॥ १८. अ–तदा० ।

ततो नि-हत्य तरसा रामो वालिनम् आहवे ।
२०] सर्वर्क्ष-हरि-सैन्यानां सु-ग्रीवम् अकरोत् पतिम् ॥५०॥ [५१
राम-सुग्रीवयोः सख्यं देव्य् एवं सम्-अजायत ।
N] हनुमन्तं च मां विद्धि तयोर् दूतम् इहाऽऽगतम् ॥५१॥ [५२

इत्यार्षे रामायणे सुन्दर-काण्डे सीता-सम्भाषणो
नामैकोनत्रिंशः सर्गः ॥२९॥

---

१. फ अ--०रिसिंहानां ॥ २. रा अ--त्रुटितः पाठः । ३. म ल२--०ण्डे लंकापर्वणि सी० । ४. फ अ--सर्गसमाप्तिर्नोक्ता ॥

स राज्यं प्राप्य सु-ग्रीवः समा-नीय हरीऽऽश्वरान्।
२१] त्वद्-अर्थे प्रे(?प्रै)षयत् सर्वान् दिशो दश महा-बलान्॥१॥[५३
आ-दिष्टा वानरेन्द्रेण सु-ग्रीवेण महाऽऽत्मना ।
N] अद्रि-राज-प्रतीकाशाः सर्व-तः प्र-स्थिता महीम्॥२॥ [५४
अङ्गदो नाम लक्ष्मीवान् वालि-सूनुर् महा-बलः ।
N] प्र-स्थितः कपि-शार्दूलस् त्रि-भाग-बल-संवृतः ॥३॥ [५६
वि-चिन्व दक्षिणाम् आशां स-शैल-वन-काननाम्।[४]
N] गिरि-जालाऽऽवृतां दुर्गां प्रायम् तेन वि-चिन्महे ।[५]
२२उ] त्वां देवि राघवस्याऽर्थे सर्व-तो मृगयामहे ॥४॥ [N
तेषां नो विप्र-नष्टानां विन्ध्ये पर्वत-सत्तमे ।[५७पू
क्षुधाऽऽर्त्तानां विले क्वाऽपि तृषाऽऽर्त्तानां तदा सताम्।[९] [N
N] भृशं शोक-परीतानाम् अहो-रात्र-गणा गताः ॥५॥ [५७उ
ते वयं कार्य-नैराश्याद् कालस्याऽति-क्रमेण च ।
N] भयाच् च कपि-राजस्य कालाऽतिगम-शङ्कया ॥६॥ [५८
वि-चीय गिरि-दुर्गाणि नदी-प्रस्रवणानि च ।
N] अना-साद्य पदं देव्याः प्राणाम् त्यक्तुम् उप-स्थिताः। [N
२३उ] ततस् तस्य गिरेर् मूर्ध्नि वयं प्रायम् उपाऽऽस्महे ॥७॥ [N

---

१. आ—महाहरीन् । २ घ रा ब भ ल१, ल२ अ—०बलः॥ ३. आ—०न । ४. भ—दक्षिणां दिशामास्थाय प्रेतराजेन पालिताम्। ५. फ घ रा भ ब ल१, ल२ अ—नास्ति । ६. आ—सर्वे ते । फ अ—सर्वे वै । प्र ल१, ल२—त्वां देवि ॥ ७. फ—तु । अ—वै । ८ आ—कलिस्तृषा० । ९. फ अ—क्षुधितानां निरासानां वने कस्मिंश्चिदास्यताम् ॥ १०. आ—कालान्तरविता० ॥ ११. फ—गुरुद० । १२. आ—प्रथा० ॥ १३. प्र ल१—उपस्थिताः ॥

अथ नः पर्वते विन्ध्ये निर्-आशानाम् अ-निन्दिते । [N
२४] भृशं शोकाऽर्णवे मग्नः पर्य्-अदेवयद् अङ्गदः ॥८॥ [६०३
तव नाशं च वैदेहि वालिनश् च तथा वधम् ।
२५] प्रायोप-वेशम् अस्माकं वि-नाशं च जटायुषः ॥९॥ [६१
तेषां नः स्वामि-सन्देशे निर्-आशानां मुमूर्षताम् ।
N] कार्य-हेतोर् इवोपेतः शकुनिर् वेदम् अब्रवीत् ॥१०॥ [६२
गृध्र-राजस्य सोदर्यः संपातिर् नाम वीर्यवान् । [६३पृ
२६] यवीयान् केन मे भ्राता हतः क्व च वि-नाशितः॥११॥ [६४पृ
शशंस चाऽङ्गदस् तस्मिन् जन-स्थाने महद्-वधम् ।
२७] राक्षसेनाऽति-कायेन त्वां च तत्राऽप-वाहिताम् ॥१२॥ [६५
जटायुषश् च सम्पातिर् वधं श्रुत्वाऽति-दुःखितः ।
२८] त्वाम् आ-चष्ट वराऽऽरोहे वसन्तीं रावणाऽऽलये॥१३॥[६६
तस्य तद् वचनं श्रुत्वा सम्पातेः प्रीति-वर्द्धनम् ।
N] अङ्गद-प्रमुखास् तूर्णं ततः संप्रस्थिता वयम् ॥१४॥[६७
त्वद्-दर्शन-कृतोत्साहा हृष्टाः पुष्टाः प्लव-गमाः ।[12]
विन्ध्याद् उत्-पत्य सं-हृष्टाः सागरस्योत्तरं गिरिम्॥१५॥[६८
अथाऽहं हरि-सैन्यस्य सागरं प्रेक्ष्य सीदतः ।[13]
२९] त्वद्-दर्शन-कृतोत्साहः पुप्लुवे शत-योजनम् ॥१६॥ [७०
इयं लंका मया रात्रौ दृष्टा पै राक्षसाऽऽकुला ।

---

१. आ—सन्देशास्थिरा० । २. आ—विहस्येवत् । ३. अ—०निर्वेदाग्र० ॥ ४. अ—जवी० । ५. अ—कस्मिश्च कारणे ॥ ६. अ—०दश्वासौ । म ल१ ल२ अ—०दस्तस्ये । ७. आ—महाव०॥ ८. आ—श्रुत्वैव दुः० ॥ ९. अ—०नः । १०. अ—नगेशं प्र० ॥ ११. ल१—दृष्टाः । १२. अ—नास्ति । १३. क्रिया साकांक्षत्वं त्विह द्र० । अत्र दा—'विन्ध्यादुत्थाय संप्राप्ताः सागरस्यान्तमुत्तरम्' इति —

N] रावणश् चाऽपि सं-हृष्टस् त्वं च शोकेन पीडिता ॥१७॥ [७१
N] कुञ्जरो नाम वैदेहि गिरीणाम् उत्तमो गिरिः ।
४०उ] तस्माद् गच्छति गो-कर्णं पर्वतं केसरी हरिः ॥१८॥ [८०
स तु देवर्षिभिर् जुष्टं पिता मम महा-कपिः ।
४१] तीर्थं नदी-पतेः पुण्यं शङ्ख-सादनम् उत्तमम् ॥१९॥ [८१
तस्याऽहं क्षेत्र-जः पुत्रो जातो वातेन मैथिलि ।
४२] हनुमान् इति वि-ख्यातो लोके स्वेनैव कर्म्मणा ॥२०॥ [८२
वि-श्वासाऽर्थं तु ते देवि भर्त्तुर् उक्ता मया गुणाः ।
४३] यथा मां त्वं कपिं व्यक्तं मन्येथा जनकाऽऽत्म-जे ॥२१॥ [N
एतत् ते सर्वम् आ-ख्यातं यथा-वृत्तम् अ-निन्दिते ।
N] अभि-भाषस्व मां देवि दूतो दाशरथेर् अहम् ॥२२॥ [N-
तं मां राम-कृताऽऽदेशं त्वन्-निमित्तम् इहाऽऽगतम् ।
N] सुग्रीव-सचिवं देवि बुद्ध्यस्व पवनाऽऽत्म-जम् ॥२३॥ [N
हतो गजो येन च शङ्ख-सादने
कपि-प्रवीरेण महर्षि-चोदनात् ।[12]
ततस् तु वायु-प्रभवोऽस्मि मैथिलि
N] प्र-भावतस् तत्-प्रतिमोऽस्मि वानरः ॥२४॥ [८९
प्र-ब्रूहि सर्वं हृदि यत् स्थितं ते
मां वोऽचिरेण त्वम् अ-निन्द्य-रूपे ।

---

१. अ–रावणोऽपि च । २. च–संहृष्टस्त्वं । ३. आ–॰तः । अ–॰ताम् ॥ ४. आ–केशरी ॥ ५. आ–॰र्षिनिर्दिष्टः । प्र–मत्तदेव॰ । ६. फ–तस्य केसरिणः ॥ ७. फ–च वैदेहि । रा व ल₁–तु वै देवि । अ–तु वैदेहि । ८. अ–सन्यस्व ॥ ९. घ–त्रुटितः पाठः । १०. रा प्र व म ल₁ ल₂–जनकात्मजे ॥ ११. अ–ह्तोऽसुरे मंथनि । १२ घ–त्रुटितः पाठः । रा प्र य ल₁ ल₂–नास्ति । १३ रा प्र य म ल₁ ल₂–अहं तु । अ–तस्यान्वये वा॰ । १४. फ–भिषाः

यावद् ब्रवीम्य् उग्र-जवेन गत्वा
N] प्रियं प्रिया तेऽधिगतेति रामम् ॥२८॥[1] [N

इत्यार्षे रामायणे सुन्दर-काण्डे लंका-पर्वणि सीता-दर्शने
हनुमद्-वाक्य नाम त्रिंशः सर्गः[3] ॥ ३० ॥



१.–फ–प्रिय प्रियं ते ह्यधिगम्य । २ रा प्र व ल$_1$ ल$_2$–नास्ति ॥
३. ख$_1$–इति सुन्दरकाण्डे हनुमद्वाक्य नाम सर्गः । फ–०काण्डे उद्योगपर्वणि सवितासम्भाषणं नाम । घ–०दर्शने हनुमत्भाषणं नाम ॥

८] सत्य-धर्म इवाऽकम्प्यः स त्वां कौशल्यम् अब्रवीत् ॥७॥'[N
भूयश् चाऽपि महा-तेजा हनुमान् मारुताऽऽत्म-जः ।
N] अब्रवीत् प्र-श्रितं वाक्यं सीता-प्रत्यय-कारणम् ॥८॥ [N
कुशली देवि काकुत्स्थः सर्व-शस्त्र-भृतां वरः ।
N] गुरोर् आ-राधने युक्तो लक्ष्मणश् च सु-लक्षणः ॥९॥ [७४
तस्य कार्यवतो देवि भर्तुस् तव हिते रताः ।' [७५पृ
N] सुखम् आ-लोकयन्त्य् अन्ये हरयः सङ्ग-चारिणः ॥१०॥[N
मत्-सहायाः परे वीरा वेलायां समव-स्थिताः ।[N

---

१. अतः परमधिकः पाठः— च रा प्र ब म ल१ ल२ अ-प्रियो यस्य च सौमित्रिः सौमित्रेश्चैव यः प्रियः । सुहृद्वा वानरेन्द्रस्य स त्वां कौशल्यमब्रवीत् ॥ भ्राता कनीयान् रामस्य सुमित्रा येन सुप्रजा । प्रणम्य शिरसा पादौ स त्वां कौशल्यमब्रवीत् ॥ पितृवत् पश्यते रामं त्वां च पश्यति मातृवत् । यो नित्यमरविन्दाक्षि स त्वां कौशल्यमब्रवीत् ॥ तस्य तद्वचनं श्रुत्वा वानरस्य महात्मनः । मुमोच दुःखिता सीता शोकोष्णं नेत्रजं जलम् ॥ अशोभन्त ततश्चास्या नेत्राभ्यामश्रुबिन्दवः । फुल्लाभ्यामिव पद्माभ्यां पतन्तस्तोयबिन्दवः ॥ सापमृज्यायते नेत्रे कराभ्यां कल्याणवती । उपपन्नैरभिज्ञानैर्दूतं तमवगच्छती ॥ च रा प्र म ल१ ल२-सर्गसमाप्तिर्दृश्यते ॥ २. ल१-अनघ् । ३. फ-हनू० ॥ ४. अ-ते भर्ता सर्वलोकहिते रतः ॥ ५. क्ष-सर्वहि० । ६. अ-गाहिन । ७. च रा प्र ब म ल ल अ-लोकम्॥८. क्ष-सुवले स०। अ-सागरं समुपस्थितम् । फ-०यां समुपस्थितम ।

---

१. ल१ ल२-०त्रेश्चापि । २. च ब म ल२ अ-यो नाथो । ल१-त्रिनाथ ॥ ३. अ-सुप्रता ॥ ४. रा प्र च म ल ल१ ल२-०र्थं । ५. च रा प्र प्र म ल१ ल२-पतंतोस्या । ६. च रा प्र ब म ल१ ल२ अ-प्रसन्नास्तो० ॥ ७. ब म-साप्रमृ० । अ-०मृज्य ततो । ८. रा च-०पते । ल२-०यती । ९. रा ब म-नं चाभिगच्छती । ल१ ल२-नं चाप्यगच्छत । अ-तमवरोपच्छत ॥

स शोकाऽऽर्त्ताम् अ-शोक-स्थो ददर्श हनुमान् कपिः ।
१] वि-मुक्तां किं-नरेणेव किं-नरीं जनकाऽऽत्म-जाम् ॥१॥ [N
तां नि[2]-शाम्य विशालाऽक्षीं क्षितौ क्षिति-रजश्-चिताम् ।
२] बाष्प-सन्दिग्धया वाचा पुनर् वचनम् अब्रवीत् ॥२॥ [N
दूतोऽहम् अनु-अवद्याऽङ्गि लंकां प्राप्तो नृपाऽऽज्ञया ।
३] त्वद्-अर्थं प्रेपितस् तेन राघवेण महाऽऽत्मना ॥३॥ [N
सा तस्य वचनं श्रुत्वा मानुपस्येव भाषितम् ।
४] अकरोत् कपिम् आ-श्रित्य न वि-षादं न वि-स्मयम् ॥४॥[N
तथा ब्रुवाणं वैदेही वानरं रावणं-क्षये ।
५] नाऽभ्य्-अभाषत शोकेन हर्षेण च जडी-कृता ॥५॥ [N
स मुहूर्त्ताद् कपि-श्रेष्ठो हनुमान् मारुताऽऽत्म-जः ।
६] नि-पत्य चरणौ मूर्ध्ना कीर्त्तयामास राघवम् ॥६॥[6] [N
समुद्र इवाऽक्षोभ्यो हिमवान् इव निश्-चलः ।

---

१. फ-शोकार्त्तां तामशो० । रा प्र घ म ल$_1$ ल$_2$ ञ-०र्त्तामशोकार्ह्या ॥ २. ञा-तामिशम्य । फ च-उमिशाम्य ॥ ३. ञा-मापतः ॥ ४. रा ब-रावणालये । ल$_1$-रावणे क्षये । ५. ञ-शास्त्रकोविदः । ६. अतः परमधिकः पाठः—फ रा प्र च घ ञ म ल$_1$ ल$_2$—यशसा तपसा चैव वीर्येण च विशां पतिः । युक्तो योगवतां श्रेष्ठः स त्वां कौशल्यमब्रवीत् ॥ ७. च रा प्र घ म ल$_1$-चञ्चलः ।

---

१. घ-तपसां । रा प्र घ म ल$_1$ ल$_2$-च सतां ॥

८] सत्य-धर्म इवाऽकम्प्यः स त्वां कौशल्यम् अब्रवीत् ॥७॥[1] [N
भूयश्[2] चाऽपि महा-तेजा हनुमान् मारुताऽऽत्म-जः ।
N] अब्रवीत् प्र-श्रितं वाक्यं सीता-प्रत्यय-कारणम् ॥८॥ [N
कुशली देवि काकुत्स्थः सर्व-शस्त्र-भृतां वरः ।
N] गुरोर् आ-राधने युक्तो लक्ष्मणश् च सु-लक्षणः ॥९॥ [७४
तस्य कार्यवतो देवि भर्तुस् तव हिते रताः ।[3] [७५पू
N] मुखम् आ-लोकयन्त्य् अन्ये हरयः सङ्ग-चारिणः ॥१०॥[N
मत्-सहायाः परे वीरा वेलायां समव-स्थिताः ।[N

१. अतः परमधिकः पाठः— च रा प्र व म ल$_1$ ल$_2$ अ-प्रियो यस्य च सौमित्रिः सौमित्रेश्चैव यः प्रियः । सुहृद्वा वानरेन्द्रस्य स त्वां कौशल्यमब्रवीत् ॥ भ्राता कनीयान् रामस्य सुमित्रा येन सुप्रजा । प्रणम्य शिरसा पादौ स त्वां कौशल्यमब्रवीत् ॥ पितृवत् पश्यते रामं त्वां च पश्यति मातृवत् । यो नित्यमरविन्दाक्षि स त्वां कौशल्यमब्रवीत् ॥ तस्य तद्वचनं श्रुत्वा वानरस्य महात्मनः । मुमोच दुःखिता सीता शोकोष्णं नेत्रजं जलम् ॥ अशोभन्त ततश्चास्या नेत्राभ्यामश्रुबिन्दवः । फुल्लाभ्यामिव पद्माभ्यां पतन्तस्तोयबिन्दवः ॥ सापमृज्यायते नेत्रे कराभ्यां कल्याणवती । उपपन्नैरभिज्ञानैर्दूतं तमवगच्छती ॥ च रा प्र म ल$_1$ ल$_2$-सर्गमनाक्षिदर्श्यते ॥ २. ल$_1$-अन्यश् । ३. फ-हर्० ॥ ४. अ-ते भर्ता सर्वलोकहिते रतः ॥ ५. आ-सर्वैहि० । ६. अ-नाशिन । ७. च रा प्र व म ल ल अ-लोक्य॥८. आ-सुवले म०।अ-लावनं यमुपस्थितम्। फ-०यां समुपस्थितम ।

१. ल$_1$ ल$_2$-०त्रेश्चापि । २. च व म ल$_2$ अ-यो नायरे । ल$_1$-विख्याता ॥ ३. अ-सुव्रता ॥ ४. रा प्र व म ल ल$_1$ ल$_2$-०स्यं । ५. च रा प्र प्र म ल$_1$ ल$_2$-पतंतोस्या । ६. च रा प्र व म ल$_1$ ल$_2$ अ-प्रसन्नास्तो० ॥ ७. व म-मामृ० । अ-०मृज्य ततो । ८. रा व-०पते । ल$_2$-०यती । ९. रा व म-तं चाधिगच्छती । ल$_1$ ल$_2$-तं चाध्यगच्छत । अ-तमकरोच्छतः ॥

N] अहम् एकस् तु सं-प्राऽऽप्तः सम्पाति-वचनाद् इह ॥११॥ [७८उ
मयेयम् अ-सहायेन चरता काम-रूपिणा ।
N] दक्षिणा दिक् समा-क्रान्ता देवि त्वाम् अनु-मार्गता ॥१२॥ [७८
दिष्ट्योऽद्य हरि-सैन्यानां त्वन्-नाशम् अनु-शोचताम् ।
N] अप-नेष्यामि सं-तापं तवाऽभि-गमनाद् अहम् ॥१३॥[1] [७७
दिष्ट्याऽहं वानरान् सर्वान् हरीणाम् ईश्वरं च तम् ।
N] दृष्ट्वा देवीऽति वक्ष्यामि दृष्ट्वा रामं च साऽनु-जम् ॥१४॥ [N
दिष्ट्या च न व्य्-अर्थम् इदं मम सागर-लङ्घनम् ।[8] [७८पू
राघवश् च महा-वीर्यः क्षिप्रं त्वाम् अभि पत्स्यते ।[11]
N] स-मित्र-बान्धवं हत्वा रावणं राक्षसाऽधिपम् ॥१५॥ [७९
सुवर्णस्य सुवर्णस्य सुवर्णस्येह सुन्दरि ।[13]
N] प्रेपितं रामचन्द्रेण सुवर्णस्याऽङ्गुलीयकम् ॥१६॥[14] [N
राम-नामाऽङ्कितं चेदं दिव्यं पश्याऽङ्गुलीयकम् । [दा२६,२उ
N] समा-श्वसिहि भद्रं ते क्षीण-दुःख-फला ह्य् असि ॥१७॥ [३पू
गृहीत्वा प्रेक्षमाणा तद् भर्तुः कर-विभूषणम् । [४पू
N] मुमोच हर्ष-जं वारि स-व्रीडितम् अधो-मुखी ॥१८॥ [N

---

१. फ-एव सुम० ॥ २. अ-मयेयम् । ३. अ-स्वामेव मा० ॥ ४. अ-दिष्ट्यसंहरिर्सिंहानां । च रा य म अ-दिष्ट्यार्क्षहरीसिंहानां । ५. अ-नास्ति ॥ ६. च-०नुगम् ॥ ७ फ-नानर्थकम् । ल₂-न् वास्यर्थम् । ८. अतः परमधिकः पाठः—फ च रा य प्र म ल₁ ल₂अ-अद्य प्राप्स्याम्यहं दिष्ट्या त्वद्दर्शनकृतं यशः। तदाश्वसिहि भद्रन्ते क्षीणदुःखासि मैथिलि ॥ फ-यशसा तपसा चैव वीर्येण च विशांपतिः । ९. फ-राघवः म । १०. च रा प्र य म ल₁ ल₂-नास्ति । ११. फ प्र ल₁ ल₂-०र्णस्य च । रा य-०र्णस्यैव । १२. प्रा फ-भाविनि । रा च प्र ल₁ ल₂-मैथिलि । १३. च म अ-नास्ति । १४. अ-नास्ति ॥ १५. अ-रामरामा० । १६. प्र ल₁ ल₂-वैदेहि ॥

---

१. च रा प्र य म ल₁ ल₂-अहं प्राप्स्यामि दिष्ट्याद्य । अ-प्राप्स्याम्यद्य त्वहं दिष्ट्या । २. च रा य प्र म ल₁-भामिनि ॥

तच् छ्रुत्वा मधुरं वाक्यं सीता राम-गुणाऽन्वितम् ।
नेत्राभ्यां कृष्ण-ताराभ्यां मुमोचाऽऽनन्द-जं जलम् ।'
N] भर्त्तारम् इव सं-प्राऽऽप्य जानकी मुदिताऽभवत् ॥१९॥ [४
चारु तद् वदनं तस्यास् ताम्र-शुक्लाऽसितेक्षणम् ।
N] हर्षोद्-अग्रं बभूवाऽथ राहु-मुक्त इवेन्दु-राट् ॥२०॥ [८
ततः सा ह्रीमती बाला भर्त्तृ-व्यसन-कर्षिता ।
N] रुदती शोक-हर्षाभ्यां मुदिता वाक्यम् अब्रवीत् ॥२१॥ [N.
कुशली यदि काकुत्स्थः किं तव सागर-मेखलाम् ।
N] न निर्-दहति कोपेन युगाऽन्ताऽग्निर् इवोत्थितः ॥२२॥ [१२
अथवा शक्ति-मन्तौ तौ सुराणाम् अपि नि-ग्रहे ।
N] ममैव तु न दुःखानाम् अस्ति मन्ये विपर्य्-अयः॥२३॥ [१४
सा राम-सङ्कीर्तन-नष्ट-शोका
रामस्य शोकेन समान-शोका ।
शरन्-मुखे साऽम्बुद-चन्द्र-लेखा
N] निशेव सा राज-सुता बभूव ॥२४॥ [४७
'हते रिपौ वीत-भया यथा शची
भवेत् प्र-तीता सुर-राज-विक्रमैः ।
तथैव सा वायु-सुतेन हर्षिता
N] बभूव सीता परि-पूर्ण-मानसा ॥२५॥ [N

इत्यार्षे रामायणे सुन्दर-काण्डे हनुमत्सीता-समागमेऽङ्गुलीय-प्रदानं नामैकत्रिंशः सर्गः ॥ ३१ ॥

---

१. च–नास्ति । २. अ–संप्राप्तं ॥ ३. अ–साध्वी सती ॥ ४. फ–भर्त्तुः शोकेन क० । ५. आ–कामह० । ६. फ–हर्षिता ॥ ७. फ च रा प्र व ल$_1$ ल$_2$ अ–न । म–तु । ८ फ–शक्तिमन्तौ । ९. आ–विग्रहे ॥ १०. रा प्र व म ल$_1$ ल$_2$–रामस्य संकी० । आ–००न जातशोका । ११. अ–सा रामशो० । १२. फ० हतेषु दैत्येषु भयाद् । १३. च प्र व म ल$_1$ ल$_2$–यथाभवत् । रा–भवेत् । १४. च रा प्र व म ल$_1$ ल$_2$–शची ॥ १६. रा–उत्तरकाण्डे । १७. फ रा प्र व म – [illegible]

१९पू] सा तु वि-श्वासिता तेन हेतुभिश् चोप-दंर्शिता ।
१४उ] उप-पन्नैर् अभि-ज्ञानैर् दूतं तम् अव-गैच्छती ॥१॥ [N
१५उ] अ-तुलं चाऽऽगैता हर्षं प्र-हर्षेणैवं भामिनी ।
वाष्प-संरुद्ध-नयना कपिं तं समुद्-ऐक्षत ॥२॥ [N
१६] सा दृष्ट्वा चै हनूमन्तं वि-नीतं संहताऽञ्जलिम् ।
N] मुमोचाऽऽनन्द-जं वाँष्पं गद्गदं मधुराऽक्षरम् ॥३॥ [N
वाष्प-सन्दिग्धया वाचा शोक-हर्ष-विमिश्रया ।
१७] उवाच वचनं चेदं हरिं हरिण-लोचना ॥४॥ [N
यजेयं देवताः काले यस्याऽर्थे प्लवगोत्तम ।
१८] दिष्ट्या मे म्रियते भर्त्ता दिष्ट्या म्रियते(ऽते)लक्ष्मणः॥५॥[N
परि-तुष्टा चिरं श्रुत्वा रोम-कौशल्य-संकथाम् ।
१९] लक्ष्मणस्य च वीरस्य प्र-शंसं चं मारुतिम् ॥६॥ N
कपे त्वाम् अभि-नन्दामि चिरं जीव सुखी भव ।
२०] साऽनु-जः कुशली भर्त्ता येन मेऽद्य नि-वेदितः ।
२१पू] बलेन यशसा चैव वर्धस्व मेंजेयाऽपि च ॥७॥ [N
कपिं चैव हनूमन्तं वि-नीतवद् उप-स्थितम् ।

---

१. फ-चैव सांत्वनैः । प-०देशिते । रा प्र य म ल१ ल२-०दोशितैः ।
२ फ प रा य अ-०च्छत । प्र म ल१-चाध्यगच्छत । ल२-चाधिगच्छति ॥
३. ल२-पा गता । अ-घ गता । ४. फ-हर्षेणैव च । अ-०र्षेण च । ५ अ-नास्ति । ६. फ-दृष्ट्वा च तं । ७. प-बाष्पं । ८. प य प्र म ल१ ल२-यजेदं । ९. प रा प्र य म ल१ ल२-ध्रायति ॥ १०. प्र य म ल२-चिरात् । ल१-प्रियं । ११. म ल१-पीता की०। १२. प रा य म ल१ ल२-०संमाथ ॥
१३. प रा प्र प म ल१ ल२-प्रभयापि ॥

N] परि-तुष्टा प्रियं श्रुत्वा प्र-शशंस पुनः पुनः ॥८॥ [६उ

२१उ] विक्रान्तस् त्वं समर्थस् त्वं प्राज्ञस् त्वं वानरोत्तम ।
येनाऽयं रक्षसां वासस् त्वयैकेन प्र-धर्षितः ॥९॥ [७

२२] शत-योजन-विस्तीर्ण (?:) सागरो मकराऽऽलयः ।
विक्रम-श्लाघनीयेन क्रमता गोष्-पदी-कृतः ॥१०॥ [८

२३] न हि त्वां प्राकृतं मन्ये वानरं वानरर्षभ ।
यस्य ते नास्ति सं-त्रासो रावणान् नाऽपि सं-भ्रमः॥११॥ [९

२४] अर्हसि त्वं कपि-श्रेष्ठ मया समभि-भाषणम् ।
परीऽऽक्ष्य प्रेषितस् तेन रामेण विदिताऽऽत्मना ॥१२॥ [१०

२५] प्रेषयिष्यति मेधावी न रामो ह्य् अ-परीऽऽक्षितम् ।

२६पू] परा-क्रमम् अ-विज्ञाय मत्-सकाशं विशेष-तः॥१३॥ [११
अ-विन्ध्यो नाम मेधावी राक्षसो धर्म्म-सम्मतः ।

N] तद्-वाक्याद् अेव-गच्छामि राम-सुग्रीवयोर् अहम् ॥१४॥ [N
सख्यं वालि-वधं चैव सु-ग्रीवैश्वर्यम् एव च ।

N] कपि-राघव-सम्बन्धात् त्वां च दूतम् अवैम्य् अहम् ॥१५॥[N

२६उ] दिष्ट्या च कुशली रामो धर्माऽऽत्मा धर्म-वत्सलः ।

२७पू] लक्ष्मणश् च महा-तेजाः सुमित्राऽऽनन्द-वर्द्धनः॥१६॥ [१२

N] कच्चिन् नाऽन्य-मना रामः कच्चिन् मां तारयिष्यति ।[13] [२१उ

२९पू] कच्चित् पुरुष-कारं वै कुरुते पार्थिवाऽऽत्म-जः॥१७॥[14] [१६उ

---

१. श्र-रमता ॥ २. फ-वानरं मन्ये प्राकृतं । ३ म ल, ल-०णादपि । श्र-०णान्नास्ति ॥ ४. फ श्र-०से च । ५. फ श्र-यदसि ॥ ६ फ श्र-दुर्दर्शं । ७. श्र-०क्रमं स वि० ॥ ८ फ च रा प्र व म श्र-वृद्धसं० ल, ल-युद्धसं० । ९. ल, ल-अधिग० ॥१०. [illegible] प्र व म ल, ल-कर्पे राघ० ॥ ११. फ च श्र-कच्चिन्न परितप्यते । १२. इतोऽग्रे फ च श्र-उत्तराणि कच्चिदिति च मू० पा० १८-शोत्तरार्ध-१९-शपूर्वार्धमूलाविह पठन्ति । १३. श्रा-०पकाराय । फ श्र-०पकारेण । १४. च-नास्ति ॥

२७उ] कच्चिन् न व्यथते रामः कच्चिन् न परि-तप्यते ।
उत्तराणि तु कार्याणि कुरुते पुरुषोत्तमः ॥१८॥[1] [१५

२८] कच्चिन् न दीनः सं-भ्रान्तः कार्येषु न वि-मुह्यति ।
N] कच्चिन् नोत्सा इवोग्रेण भारेण परि-पीदति ॥१९॥[2] [N

२९उ] द्वि-विधं त्रि-विधोपायम् उपायं कच्चिद् आ-स्थितः ।[4]
वि-जिगीषुश् च हृष्टश् च कच्चित् कर्माणि चोच्छ्रितः ॥२०॥[१७

३०] यस् तु नाऽऽरभते किञ्चिन् नरो दैव-परायणः ।[7]
क्षिप्रं भवति निर्-द्रव्यः पलाऽयन-परायणः ॥२१॥ [N

३१] कच्चिन् मित्राणि लभते मित्रैश् चाऽभ्युप-गम्यते ।
कच्चित् कल्याण-मित्रैश् च मित्रैश् चाऽपि पुरस्-कृतः २२ [१८

३२] कच्चिद् आ-शास्ति देवानां प्रसादं पार्थिवाऽऽत्म-जः ।
कच्चित् पुरुष-कारं च दैवं च प्रति-पद्यते ॥२३॥ [१९

३३] कच्चिन् न विगत-स्नेहो वि-वासान् मे नरर्षभः ।
३४पू] कच्चिन् मां व्यसनाद् अस्माद् सु-घोराद् उद्-धरिष्यति ।
३८उ] वक्ष्यते सौपकैश् चैनां त्वयि प्रति-गते पुरीम् ॥[11]२४॥ [N

३४उ] सुखानाम् उचितो नित्यम् अ-सुखानां च नोचितः ।

---

१. प्र—नास्ति । अत्र मूला० १७-शपूर्वार्धान्त्यं टि० द्र० ।
२. घ रा ब प्र म ल$_1$ ल$_2$—०परिपीडितः । ३. फ अ—नास्ति ॥ ४. फ—त्रिविधं । ५. रा—नास्ति । अतः परमधिकः पाठः—आ रा ब म ल$_1$ ल$_2$—अविनाशीव हृष्टश्च कच्चित्कर्माणि चोच्छ्रितः ।
६. अ—०षु प्रहृष्टश्च । ल$_1$—०षु च हृष्टश्च । ७. फ घ म अ—न च दैवपरायणः । रा प्र घ ल$_2$—न च दोषपरायणः ॥ ८. अ—देवे प० ॥ ९. य प्र म ल$_1$ ल$_2$—नास्ति । १०. फ घ रा प्र य म ल$_1$ ल$_2$ अ—चाप्युप० । ११. अ—०ण वा रामो । १२. ल$_2$—मित्रैरपि ॥ १३. रा—०प्यावग० । १४. फ—०स्नेहः प्रवा० । १५. प्रल$_1$ ल$_2$—मेदिनीपतिः । अ—०साच्च नर० । १६. फ अ—०त्तारयिष्यति । १७. म—०कैलंका । १८. आ म—पुनः ॥ १९. घ रा प्र य ल$_1$ ल$_2$ अ—नास्ति ॥ २०. आ—नोचितम् ।

दुःखम् उत्तरम् आ-साद्य कच्चिद् रामो न शोचति ॥२५॥[1] [२१
३५] मत्-निमित्तं च मानाऽर्हः कच्चित् तापेन राघवः । [२३पू
N] बहु-शः खिद्यते वीरः सोऽद्य भूमि-पतेः सुतः ॥२६॥ [N
३६उ] यदि जीवति काकुत्स्थः किम् अर्थं रावणाऽऽलयम् ।
न निर्-दहति कोपेन युगाऽन्ताऽग्निर् इवोत्थितः ॥२७॥ [N
३७] किम् अर्थं मर्षयति मां रिपु-संस्थाम् अरिं-दमः ।
३८पू] न रावण-विनाशाय प्र-यत्नम् उप-तिष्ठते[5] ॥२८॥ [N
कच्चित् स नाथो मम राज-पुत्रः
सर्वस्य लोकस्य च लोक-नाथः[6] ।
मां वीरं-नाथां[7] बलवद्-गृहीताम्[8]
३९] अ-नाथवद् वेत्स्यति[9] चिन्तयानः ॥[10] २९॥ [N
कच्चिन्[11] न[12] तद्[13] सोम[14]-समान-वर्णं
तस्याऽऽननं पद्म-समान-गन्धम् ।
मया विना शुष्यति शोक-दीनं[14]
४०] जलाऽत्यये पद्मम् इवाऽऽतपेन ॥३०॥ [२८
धर्मोप-देशात् त्यजतश्[15] च राज्यं
मां चाऽप्य् अरण्यं[16] नयतः पदातेः ।
नाऽऽसीद् व्यथा तस्य न भीर् न शोकः[17]

---

१. च रा प्र ब ल$_1$ ल$_2$–नास्ति ॥ २. फ–मोहितः । ३. फ ब–अदरमायास्यते । च रा प्र ब म ल$_1$ अ–अल्पमायस्यते ॥ ४. च–०पे॥ ५. च रा प्र ब म ल$_2$ अ–०तिष्ठति ॥ ६. फ अ–धर्मनाथः । ७. अ–धाय रामो बलवान् । ८. ल$_1$–अत आरभ्य सर्गसमाप्तिं यावत्त्रुटितः पाठः । ९. आ–वेत्स्यति । फ–तप्श्यति शोकदीनः । १०. अ–लङ्कां प्रविश्यानय शोकदीनाम् ॥ ११. आ–कच्चित्तु । १२. अ–तत्पद्म० । १३. फ च अ–०मांधि । १४. म–०दीनाम् ॥ १५. म–०तः स्वरा० । फ–०श्च राष्ट्रम् । १६. म अ–०रण्ये नयतः पदार्ति । १७. म–भीतिशोकः ।

४१] कच्चित् तु धैर्याद् यतते यथावत् ॥३१॥ [२०

न तस्य माता न पिता नै चाऽन्यः

स्नेहाद् वि-शिष्टोऽस्ति मया समो वा ।[२०पू

स्नेहाद् अ-मर्षाच् च सयं निमित्तात्

N] न व्याधिम् ऋच्छत्य् अमराऽधिपाऽऽभः ॥[2]३२॥[N

श्रुत्वा त्व् असौ माम् इह वर्तमानां

वि-क्रम्यते कच्चिद् अ-दीर्घ-कालात् ।[N

तावद् ध्य् अहं दूत जिजीविषेयं[10]

४२] यावत् प्रियस्य शृणुयां प्र-वृत्तिम् ॥३३॥[२०उ

कच्चिन् महाऽऽत्मा न परा-जिताऽऽत्मा

कच्चिन् न दैवं कुरुते प्र-माणम् ।

मनो हि यस्योद्-वहतीऽव भारं

N] तस्याऽग्रतो दैवम् अनुप्र[14]-याति ॥३४॥ [N

उक्तः स परुषं पूर्वं मूर्खया प्रेरितो मया ।

४३] गतो राम-गतं मार्गं कच्चिज् जीवति लक्ष्मणः ॥३५॥ [N

कौशल्यायास् तथा देव्याः कच्चित् सह सुमित्रया ।

N] अभीऽऽक्ष्णं श्रूयते तत्र कुशलं भरतस्य च ॥३६॥ [२२

४४पू] कच्चिच् छृणोति कौशल्या सुमित्रा वाऽप्य् अनामयम् ।

---

१. फ म–भ्रियते । २. रा प्र ब ल$_2$–नास्ति ॥ ३. च–तथान्ये । ४. आ–०निमित्तम् । ५. आ–इच्छेद् । ६. म–०धिपोपि ॥ ७. रा प्र म ल$_2$–श्रुत्वाप्यसौ । ८. रा ब प्र अ–विक्रमते । ९. आ रा प्र ब अ–०कालम् । १०. आ–तावद्धि दूत प्रजिजीविषेयं । ११. ल$_2$–प्रियस्य यावत् ॥ १२. अ–भावम् ॥ १३. अ–पूर्वं परुषं । १४. फ–प्रेषितो । १५. रा प्र ब ल$_2$–०रामगतिं । १६. च–मार्गात् । १७. म ल$_2$–काम० । १८. आ–शृणुते ॥ १९. फ–०च्छ्रूयत कौशिल्या । अ–०च्छ्रूयेति । म ल$_2$–०च्छ्रूयत कौसल्या । २०. फ–०मया ।

N] कच्चिद् धर्मेण शासन्तं स्तुवन्ति भरतं प्रजाः ॥३७॥ [N

४४उ] कच्चिद् अक्षौहिणी-युक्तो भरतो वाऽप्यु अ-मर्षितः ।
ध्वजिन्या मन्त्रिभिर् गुप्तः क्षिप्रम् एष्यति मत्-कृते ॥३८ [२४

४५] वानराणां पतिः श्रीमान् सु-ग्रीवः कच्चिद् एष्यति ।
N] मत्-कृते हरिभिः सार्द्धं वृतो दन्त-नखाऽऽयुधः ॥३९॥ [२५

कच्चित् स लक्ष्मणः श्रीमान् सुमित्राऽऽनन्द-वर्द्धनः ।
४६] अस्त्र-विच् छर-जालेन रक्षांसि प्र-मथिष्यति ॥४०॥ [२६

रौद्रेण कच्चिद् अस्त्रेण रामेण नि-हतं युधि ।
४७] द्रक्ष्यामि रावणं क्षुद्रं स-मेणं रण-मूर्द्धनि ॥४१॥ [२७

कच्चिद् रामो महा-बाहुः शोकेन महताऽऽवृतः ।
N] अ-पक्षः पक्ष-वान् व्योम विहङ्ग इव चोर्ध्व-पतेत् ॥४२॥ [N

इतीऽव चेदं वचनं महाऽर्थं
कपि-प्रवीरं मधुराऽर्थम् उक्त्वा ।
श्रोतुं पुनस् तस्य वचो यथोक्तं
N] रामेण रम्यं वि-रराम रामा ॥४३॥ [३१

इत्यार्षे रामायणे सुन्दर-काण्डे लङ्का-पर्वणि हनूमत्समागमे सीता-वाक्यं
नाम द्वात्रिंशः सर्गः ॥३२॥

---

१. अ-संयुक्तं । २. फ अ-नराः ॥ ३. अ-॰णीं भीमां । फ-॰णीभिर्मा । ४. फ-भरतश्चाप्यम॰ । ५. आ-तत्कृते । ६. प्र-मह्रते ॥ ७. अ-त्रुटितः पाठः ॥ ८. प-प्रसमिष्यति । रा प्र ब म ल२-शमयिष्यति ॥ ९. अ-क्रुद्ध । १०. फ-पतितं । रा-सूवं यं । अ-निहतं ॥ ११. आ-॰वृतः । १२. फ-अपक्षपक्षीवद् । आ-अपक्षपक्ष॰ । अ-॰क्षः कच्चिदाकाशे वि॰ । १३. फ-योत्पतेत् । प्र-चोत्सृजे । अ-नापतेत् ॥ १४. फ अ-इत्येव देवी । प्र-इत्येव चे॰ । १५. म-महार्हम् । १६. फ-यथावदुक्तम् । १७. आ-रामेण राम । फ-रामार्थमयं । अ-रामार्थयुक्तं ॥ १८. रा-इत्यार्षे । अ-इत्यार्षे रामायणे ॥

एवम् उक्तः शुभं वाक्यं सीतया मारुताऽऽत्म-जः ।[2]

१] इदं मधुरया वाचा प्रत्य्-उवाच कृताऽञ्जलिः ॥१॥ [N

न तावद् देवि जानीते त्वाम् इह-स्थां स राघवः । [३३पू

२] धक्ष्यते सायकैस् त्व् आशु लंकां प्रति-गते मयि ॥२॥ [N

वि-क्षुम्भयित्वा बाणौघैर् अ-गाधं वरुणाऽऽलयम् ।

३] करिष्यति रिपोर् लंकां प्र-सह्य हत-राक्षसाम् ॥३॥ [३५

९उ] त्वाम् एव तु विशालाँऽक्षि रामो ध्यायति निश्-श्वसन् ।

स्वप्तु-कामस्य रामस्य निद्रा नैवोप-जायते ॥४॥ [N

१०] न भक्षयति मांसानि न देवि मधु सेवते । [४१पू

शयानः स्थण्डिले शय्यां भक्तम् अश्नाति चाऽष्टमे ॥५॥ [N

११] न च कामान् न सं-रम्भान् न भयान् नाऽर्थ-गर्धतः ।[12]

आ-हारम् आ-हारयते प्राऽऽप्ते काले तथाऽष्टमे ॥६॥ [N

१२] मतिमान् अपि काकुत्स्थो वीरैश् चाऽपि वि-शेषतः ।

त्वद्-वियोगज-शोकेन वि-क्लैवं(?च)सम(?म)-पद्यते ॥७॥ [N

---

१. आ प्र–उक्ता शुभं वाक्यं सीता । २. $ल_1$–अत आरभ्य सर्ग-समाप्तिं यावत्त्रुटितः पाठः । ३. फ–इदं मधुरमारेभे वक्तुं वचनमुत्तमम् ॥ ४. फ–वै विजानाति । ५. रा–०केनाशु । प्र व म $ल_2$ अ–०कैराशु ॥ ६. प्र घ म $ल_2$–पुरीं ॥ ७. फ अ–०लाक्षीमनुध्या० । $ल_2$–०लाक्षीं रामो । ८. फ–निद्राप्यभिजायते ॥ ९. रा व म $ल_2$–दधिमध्वादि नैव च । १०. फ–रात्रिनयति भक्ष्येदा । च रा प्र व म $ल_2$–रकन् ॥ ११.आ–०र्थगृद्धितः । १२.अ–न कामाच्च संरम्भाद्भया हीनो रघूत्तमः ॥ १३. आ–वीर एव । १४. आ फ–विह्वलः । १५. आ फ प्र–०ममद्यत ॥

१३] न शौर्ये नाऽस्त्र-कौशल्ये नाऽपि ज्ञाने महा-मतिः ।
सम्पदं विन्दते देवि त्वद्-गतेनाऽन्तर्-आत्मना ॥८॥ [N

१४] वि-लपन् सततं भीरुः शोचंश् चै बहु-धा भृशम् ।
जीवितं निन्दते नित्यं कुले जन्म च सर्वदा ॥९॥ [N

१५] धिङ् ममाऽस्त्राणि दिव्यानि धिग् वीर्यं धिक् परा-क्रमम् ।
धिग् जन्म मे कुले तेषाम् इक्ष्वाकूणां महाऽऽत्मनाम् ॥१०॥ [N

१६] यत्र मे रक्षसा भार्या प्राणैर् इष्ट-तमा प्रिया ।
हृताऽव-मन्य तृणवत् कृतं मे सर्व-था कुलम् ॥११॥ [N

१७] नैव दंशान् न मशकान् नाऽन्यांश् चैव सरीसृपान् ।
राघवोऽपनयेद् गात्रात् तव नाम-व्रतं चरन् ॥१२॥ [४२

१८] नित्यं ध्यान-परो रामो नित्यं शोक-परायणः ।
नित्यं चिन्तयते चाऽपि त्वद्-गतेनाऽन्तर्-आत्मना ॥१३॥ [४३

१९] नित्यं निद्रा-वशो रामः सुप्तोऽपि पुरुषर्षभः ।
सीतेति मधुरां वाणीं व्या-हरन् स्म वि-बुध्यते ॥१४॥ [४४

---

१. च–नापि कौ० । अ–०स्ये न रात्रौ न च भोजने । फ–नाऽस्त्रशस्त्रे च न गतौ न च भोजने । २. फ–सुखं विन्दति वैदेहि। च अ–०दं संविदते । रा ब प्र म ल$_2$–संबुध्यते ॥ ३. आ–शोकश्च । ४. आ–कृतम् । रा प्र ब म ल$_2$–तथा । ५. अ–निन्दते॥ ६. फ–धिग्मो शस्त्राणि । रा–धिङ्नामास्त्राणि । ७.म–नास्ति । ८.आ–धिक् जन्म कुले । फ–धिग्धिग्जन्म कुले॥ ९. फ–प्राणैः प्रियतरा सती । अ–प्राणैरपि गरीयसी । १०.आ–हृता च मन्ये । च–०वमानाच्च तृ०। रा प्र ब म ल$_2$–वमानात् । ११. ल$_2$–तृणवद्धतं ॥ १२. आ–नान्याश्चैव । रा च म ल$_2$–न्वन्यांश् । आ–नान्यांश्चापि । १३. फ च रा प्र ब म ल$_2$–०वो वारयत्यङ्गात् ॥ १४. च–ध्यानप०। रा प्र ब म ल$_2$–जपप० । १५. अ–चिन्तापरः ॥ १६. फ–त्वामेव चिन्तयन् । १७. म ल$_2$–सुप्तो हि । १८. फ–प्रतिबुध्यते ॥

२०] दृष्ट्वा फलं वा पुष्पं वा यच् चाऽन्यत् स्त्रीमनो-हरम् ।
वहु-शो हा प्रियेत्य्-एवं निःश्वास-बहुलोऽब्रवीत् । [१९
२१] हा जानकीऽति निग्-भस्य बाष्प-पूर्ण-मुखोऽभवत् ॥१५॥ [N
त्वाम् एव ध्यायति सदा विशालाऽक्षि स राघवः ।
N] क्षिप्रं माऽऽप्स्यसि वैदेहि रामं पद्म-दलेक्षणम् ॥१६॥ [N
स एव नित्यं बहु-शो वि-चिन्त्य
त्वाम् एव सीतेत्य् अभि-भाषमाणः ।
धृत-व्रतो राज-सुतो महाऽऽत्मा
N] तवोप-लम्भाय कृत-प्रयत्नः ॥१७॥ [४६
उदितम् अपि निशासु वीऽऽक्ष्य चन्द्रं
प्रकृति-सुखं च सु-श्रीतलांऽशु-जालम् ।
मदन-वश-गतो वि-हाय निद्रां
२२] नयति गिरिं नयनैः शशाऽङ्कम् अलम् ॥१८॥ [N

इत्यार्षे रामायणे सुन्दर-काण्डे हनुमद्-वाक्यं
नाम त्रयस्त्रिंशः सर्गः ॥३३॥

---

१. फ-पुष्पं फलं वारि । घ रा प्र ष म ल२-फलं तु पु० । २. ख्रा फ-यद्ग-न्यस्त्री० । ३. आ-०शोकं प्रियो नित्यं । ४. फ-०बहुलस्तदा । ५. फ-हा मांनित्यनवयाङ्गि हा प्रसादसुखदर्शने । ६. अ-वाक्ति ॥ ७. अ-पतत्र प्याति । ८. आ-क्षिप्रमाप्स्यसि ॥ ९. च रा व म ल२-सुषशीत० । प्र-ष सुशीतलांशुजालम् । १०. आ-०ति च न० । ११. ल२-इति सुन्दरकाण्डे । १२. म-षट्त्रिंशः । १३. अ-इत्यार्षे रामायणे सीतासमनुरागवर्णनं नाम सर्गः ॥

सीता तद् वचनं श्रुत्वा पूर्ण-चन्द्र-निमाऽऽनना ।
१] हनूमन्तम् उवाचेदं धर्म्मार्थ-सहितं वचः ॥१॥ [१
अमृतं विष-सम्पृक्तं त्वया वानर भाषितम् ।
२] यच् च नाऽन्य-मना रामो यच् च शोकेन वाध्यते॥२॥[२
ऐश्वर्ये वा सु-विस्तीर्णे व्य्-असने वा सु-दारुणे ।
३] रज्ज्वेव पुरुषो बद्धः कृताऽन्तेनोप-नीयते ॥३॥ [३
विधिर् नूनम् अ-संहार्यः प्राणिनां प्लवगोत्तम ।
४] सौमित्रिं मां च रामं च व्य्-असनैः पश्य मोहितान्॥४ [४
शोकस्याऽस्य कदा पारं राघवोऽधि-गमिष्यति ।
५] प्लवमानः परि-श्रान्तो हता(ंत-)नौः सागरे यथा॥५॥ [५
राक्षसानां क्षयं कृत्वा घातयित्वा च रावणम् ।
६] लंकाम् उन्-मूलितां कृत्वा कदा द्रक्ष्यति मां पतिः॥६॥ [६
स वाच्यः सं-त्वरस्वेति यावद् एव न पूर्यते ।
७] अयं सं-वत्सरः कालस् तावद् हि मम जीवितम् ॥७॥ [७
वर्त्तते दशमो मासो द्वौ तु शेषौ प्लवं-गम ।
८] रावणेन नृ-शंसेन समयोऽयं कृतो मम ॥८॥ [८
९] विभीषणेन च भ्रात्रा मम निर्-यातनं प्रति ।
१०पू] अनु-नीतः स्वयं तेन न च तां कुरुते मतिम् ॥९॥ [९

---

१. घ व म--०संसृष्टं । रा ल$_1$ ल$_2$--संसृष्टं । अ--संयुक्तं । २. फ घ प्र म ल$_1$ ल$_2$--शोकपरायणः ॥ ३. म--०ने । ४. रा च प्र म ल$_2$--नास्ति ॥ ५. आ--यमम: । अ--अयन्तं । ६. रा प्र व म ल$_1$ ल$_2$--मम वाक्येन । आ--संवत्सरश्चेति ॥ ७. ल$_1$ ल$_2$--मासौ । ८. प्र--मासौ । ९. फ--समयो यः ॥ १०. फ--सौम्येन । ११. फ--भ्रात्रा । १२. फ--कृतवान् ॥

मम प्रति-प्रदानं हि[1] रावणस्य न रोचते ।
११] राघवं मार्गते संख्ये[2] मृत्युं-काल-वशं गतः[3] ॥१०॥ [१०
विभीषण-सुता ज्येष्ठा नन्दा नाम महा-कपे[4] ।
१२] तया ममैवम्[5] आ-ख्यातं मात्रा प्र-हितया[6] स्वयम् ॥११॥ [११
अ-विन्ध्यो[7] नाम मेधावी विद्वान् राक्षस-पुङ्गवः ।
१३] धृतिमान् शीलवान् वृद्धो रावणस्य सु-सं-मतः[8] ॥१२॥ [१२
रामात् क्षयम् अनु-प्राप्तं रक्षसां प्रत्य्-अवेदयत् ।
१४] न च तस्यापि[9] दुष्टात्मा शृणोति वचनं हितम् ॥१३॥ [१३
आ-शंसामि[10] हरि-श्रेष्ठ क्षिप्रं मां प्राप्स्यते पतिः[11] ।
१५] अन्तर्-आत्मा हि मे शुद्धस् तस्मिंश् च बहवो गुणाः ॥१४॥ [१४
उत्साहः पौरुषं सत्त्वम् आ-नृशंस्यं कृत-ज्ञता ।
१६] वि-क्रमश् च प्र-भावश् च सन्ति वानर राघवे ॥१५॥ [१५
चतुर्दश सहस्राणि राक्षसानां जघान यः[12] ।
१७] जन-स्थाने विना भ्रात्रा शत्रुः कस् तस्य नोद्-विजेत् ॥१६॥ [१६
न स शक्यस् तुलयितुं व्य्-असनैः पुरुषर्षभः ।[13]
१८] अहं तस्यानुभाव-ज्ञा शक्रस्येव यथा शची ॥१७॥ [१७

---

१. फ–॰पादनं तस्मै । २. म–संख्यं । ३. फ–मृत्युं का॰ ॥ ४. अ–ज्येष्ठा कन्या नदी नाम विभीषणसुता कपे । ५. फ–ममैतद् । ६. फ–प्रेषितया ॥ ७. ल$_2$–अवध्यो । ८. च ध म ल$_2$–सुसंगतः । प्र–वशं गतः ॥ ९. अ–नस्यातिदु॰ ॥ १०. आ–आशंसेहं । ११. फ अ–क्षिप्रमेष्यति राघवः । १२. च रा प्र व म ल$_1$ ल$_2$–नास्ति ॥ १३. फ–सः । १४. रा प्र व म ल$_1$,ल$_2$–गण्यते । १५. रा व म ल$_2$–॰नेन नरर्षभः । प्र–वानरर्षभः । १६. फ–नासौ चालयितुं शक्यो धैर्यतः पुरुषर्षभः । ल$_1$–विजेतुं न ॥ शक्यस्तु [illegible] ॥ [illegible] १२–श्लोके यावद् पाठो नास्ति ॥

शर-जालांऽशुभिः शूरः कपे रामं-दिवाकरः[1] ।
१९] वि-धमिष्यति[2] स क्षिप्रं तद् रावण-तमो महत् ॥१८॥[3] [१८
इति सं-भाषमाणां[4] तां रामाऽर्थे शोक-कर्षिताम् ।
२०] अश्रु-सम्पूर्ण-वदनाम्[5] उवाच हनुमान् कपिः ॥१९॥ [१९
श्रुत्वा मम वचो देवि क्षिप्रम् एष्यति राघवः[6] ।
N] चमूं वि-कृष्य[7] महतीं हर्य्-ऋक्ष-गण-संकुलाम् ॥२०॥ [२०
तत्र यद्य् अन्तरा मृत्युर् यदि देवाः[8] सहाऽसुराः[9] ।
N] स्थास्यन्ति युधि रामस्य स तान् अपि वधिष्यति ॥२१॥ [N
तवाऽदर्शन-जेनाऽऽर्थे शोकेन समभि-प्लुतः ।
N] न शर्म लभते रामः सिंहाऽर्दित इव द्विपः ॥२२॥ [N
दुर्दुरेण[10] च ते[11] देवि शपे मूल-फलेन वा ।
N] मलयेन च विन्ध्येन मेरुणा मन्दरेण च ॥२३॥[11] [N
यथा[12] सु-नयनं वल्गु बिम्बोष्ठं चारु-कुण्डलम्[13] ।
N] क्षिप्रं द्रक्ष्यसि[14] रामस्य पूर्ण-चन्द्र-निभाऽऽननम्[15] ॥२४॥ [N
N] क्षिप्रं द्रक्ष्यसि वैदेहि रामं प्र-स्रवणे[16] गिरौ ।
२४उ] शत-क्रतुम्[17] इवाऽऽसीनं नाक-पृष्ठस्य मूर्द्धनि ॥२५॥ [N

---

१. आ–रामो दि० । २. ल$_1$–विजेष्यति । ३. आ–दिधिक्षति स तु क्षिप्रं रावणः प्रभवत्तमः । च रा प्र व म ल$_2$–वधिष्यति स तु क्षिप्रं रावणं नरपुङ्गवः ॥ ४. आ–संभाषमानान्तु । च रा प्र ष म ल$_1$ ल$_2$–संजल्पमानां तां । ५. रा प्र ल$_1$–अस्रसं० । म–अस्रुसं० । ६. आ–द्रक्ष्यति राघवं ७. आ–प्रकृष्य । प्र व म–विकृष्टां । ल$_1$ ल$_2$–प्रकृष्टा ॥ ८. ल$_1$–चा स्म । ९. आ–महीसुरा० ॥ १०. च–शपे केशरिणं । ११. रा प्र व म ल$_1$ ल$_2$ नास्ति ॥ १२. रा व म–सीते । १३. फ–बिम्बोष्ठं चारुकुण्डलमण्डितम् । रा व म–बिम्बौष्ठं चा० । १४. फ–सुखं । १५. म ल$_1$ ल$_2$–०निभं सुखम् । अ–निभानने ॥ १६. आ–प्रस्र० । १७. फ–शक्रतुल्यम् ॥

N] अथवा मोक्षयिष्यामि दुःखाद् आशु सुहृज्-जनान् ।
पृष्ठम् आ-रोह मे देवि मा भूत् कालस्य पर्ययः ॥२६॥ [२१

२५] त्वय्य् अहं पृष्ठ-लीनायां सं-तरिष्यामि सागरम् ।
२५ज] शक्तिर् अस्ति हि मे वोढुं लंकाम् अपि स-काननाम् ॥२७॥ [२२

अहं त्वां वक्र-केशाऽन्ते रामायाऽद्यैव भामिनि ।
२१] प्राऽऽपयिष्यामि देवेभ्यो हव्यं हुतम् इवाऽनलः ॥२८॥ [२३

द्रक्ष्यस्य् अद्यैव वैदेहि राघवं सह-लक्ष्मणम् ।
२२] व्यवसाय-समायुक्तं दैव-युक्तेन कर्मणा ॥२९॥ [२४

त्वद्-दर्शन-कृतोत्साहम् आश्रम-स्थं महा-बलम् ।
२४] पुरं-दरम् इवाऽऽसीनं नग-राजस्य मूर्द्धनि ॥३०॥ [२५

पृष्ठम् आ-रोह मे देवि मा वि-शङ्कस्व शोभने ।
२५] योगम् अन्व्-इच्छ रामेण शशाऽङ्केनेव रोहिणी ॥३१॥ [२६

N] सैव-कान्तिर् इव चन्द्रेण सूर्येणेव[2] महा-प्रभा ।
२६पू] मत्-पृष्ठम् अधि-रोहस्व तरे शोक-महाऽर्णवम् ॥३२॥ [२७

न हि मे सम्प्र-यातस्य त्वाम् इतो नयतोऽम्बरे ।
२७] अनु-गन्तुम् अमी शक्ताः सर्वे लंका-निवासिनः ॥३३॥ [२८

---

१. फ अ—दुःखार्तामसु॰ । आ—दुःखाद्धा सद्य॰ । २. रा म—पृष्ठमारुह । प्र—क्षिप्रमारोह । ल$_1$ ल$_2$—क्षिप्रमारुह । ३. फ—॰कविपर्ययः । ४. च—त्रुटितः पाठः । ५. फ—समासाद्यैव भाविनि । अ—॰पाद्यैव भाविनि । ६. च रा प्र ब म ल$_2$—व्यवसायमिवासह्यं । अ—॰दैव-प्रोक्तेन । ७. ल$_1$—नास्ति ॥ ८. अ—आगमस्थं ॥ ९. प्र ब म ल$_1$—आरुह । १०. च—त्रिदांक सुशोभने । फ अ—विचारय शो॰ ॥ ११. फ—स्वका॰ । १२. ब ल$_1$ ल$_2$—॰णेशातपप्रभा । १३. फ—॰स्व स्वं । १४. ल$_1$ ल$_2$—रम-शोकं । आ—रमकोशं । १५. अ—त्वां गृहीत्वा वरानने । च—इत आरभ्य ३४-दाश्लोकं यावत् त्रुटितः पाठः । १६. आ—अनुगन्तुं न ते । रा ब प्र म ल$_1$ ल$_2$—अनुगन्तुमिमे । अ—अनुगन्तुं गतिम् ॥

यथैवम् इह सं-प्राप्तस् तथैव हि न संशयः ।[1]
२८] यास्यामि पश्य वैदेहि त्वाम् उद्यम्य विहायसि ॥३४॥ [२९
अथ चेत् संशयो देवि मम पृष्ठेऽधि-रोहणे ।
२९] नृ-पक्षि-मृग-जातीनां कस्य रूपं करोम्य् अहम् ॥३५॥ [N
मैथिली तु हरि-श्रेष्ठं भीमं भीम-पराक्रमम् । [३०पू
३०] अब्रवीत् सा शुभं वाक्यं वाक्य-ज्ञा वाक्य-कोविदम् ॥३६॥ [N
तद् वानर-वचः श्रुत्वा जानकी जल-जेक्षणा । [N
N] ईषद्-उत्थित-सर्वाऽङ्गी हनूमन्तम् अथाऽब्रवीत् ॥३७॥ [३०उ
हनुमन् दूरम् अध्वानं कथं मां वोढुम् अर्हसि ।
N] तद् एवं खलु ते मन्ये कपित्वं हरि-यूथ-प ॥३८॥ [३१
कथम् अल्प-शरीरस् त्वं माम् इतो नेतुम् इच्छसि ।[12]
३१] सकाशं मानवेन्द्रस्य भर्तुर् मे प्लव-गर्षभ ॥३९॥ [३२
३२] सीतायास् तद् वचः श्रुत्वा हनुमान् प्लवगोत्तमः ।
चिन्तयामास लक्ष्मीवान् देव्या परि-भवं कृतम् ॥४०॥ [३३
N] न मे जानीते सत्त्वं प्र-भावं वाऽसितेक्षणा ।
३३उ] तस्मात् पश्यतु वैदेही यद् रूपं परमं मम ॥४१॥ [३४
N] दर्शयामास वैदेह्याः स्व-रूपम् अरि-मर्दनः । [३५उ

---

१. फ–यथैवाहमनुप्राप्तस्तथैवाहमसंशयः । २. प्र म ल१ ल२–नयामि । ३. फ [illegible] च–विहायसा ॥ ४. आ–पृष्ठस्य रोहणे । ५. फ–मृगपक्षमृग० । च रा–नृपक्षमृग० ॥ ६. फ–हनूमन्तं । ७. अ–अब्रवीच्च ॥ ८. रा–उवाच ह ॥ ९. फ अ–इच्छसि । १०. प्र च म ल२–वदेवत् । ल१–त्रुटितोऽयं पादः । ११. ल१ अ–कपि स्वद्बुद्धास्थितम् ॥ १२. ल१–नास्ति । १३. अ–मनुजे० । १४. आ–भर्तुः प्लवगसत्तम । १५. ल१ ल२ अ–०जानासि । १६. आ–प्रभावमसि । च प्र व म–रूपश्चैव शुचिस्मिता । १७. रा प्र च म ल१ ल२–स्वं पश्य वैदेहि ॥ १८. ०पं परम० ।

से तस्मात् पादपाद् धीमान् आ-प्लुत्य प्लवगोत्तमः ॥४२॥

३३] ततो वर्द्धितुम् आ-रेभे सीता-प्रत्यय-कारणात् । [३६
विन्ध्य-मन्दर-संकाशो बभौ दीप्ताऽनल-प्रभः ॥४३॥

३४] अग्रतो व्यव-तस्थे स सीताया वानरर्षभः । [३७
N] हरिः पर्वत-संकाशस् ताम्र-वक्त्रो महा-बलः ॥४४॥

N] वज्र-दंष्ट्र-नखो भीमो वैदेहीम् इदम् अब्रवीत् । [३८
स-पर्वत-वनोद्देशां साऽट्टि-प्राकार-तोरणाम् ।

३५] लंकाम् अपि स-नाथां नेतुं वै शक्तिर् अस्ति मे ॥४५॥[३९
तद् अव-स्थाप्यतां बुद्धिर् अलं देवि वि-क्षयां ।

३६] वि-शोकं कुरु वैदेहि राघवं सह-लक्ष्मणम् ॥४६॥ [४०
तं दृष्ट्वाऽचल-संकाशम् उवाच जनकाऽऽत्म-जा ।

३७] पद्म-पत्र-विशालाऽक्षी मारुतस्यौरसं सुतम् ॥४७॥ [४१
तव सत्त्वं (ऽत्वं) बलं चैव सं-जानामि महा-कपे ।

३८] वायोर् इव गतिं चैव तेजश् चाऽग्नेर् इवाऽद्भुतम् ॥४८॥ [४२
प्राकृतः कः कथं चेमां भूमिम् आ-गन्तुम् अर्हति ।

३९] उदधेश् चाऽप्र-मेयस्य पारं वानर-पुङ्गव ॥४९॥ [४३
जानामि नयने शक्तिं गमने चाऽपि तेऽनघ ।

---

१. प्र—तस्तस्मात् पादपाद्धी०। फ—तस्माद्देशाद्वाप्लुत्य । रा प्र घ म ल$_2$—०द् पादपाद्धीमान् । २. फ—निपत्य । च ल$_1$ ल$_2$—अप्लुत्य ॥ ३. रा प्र घ म ल$_1$ ल$_2$—वृद्धस्वमा०। ४. श्रा—०कारां । ५. च रा प्र घ म ल$_1$ ल$_2$—व्यवतिष्ठस्याः । ६. रा प्र च म ल$_1$ ल$_2$—वानरोत्तमः ॥ ७. फ—दंष्ट्रा-नखो । घ रा प्र घ म ल$_1$ ल$_2$—वज्रदंष्ट्रानखो । ८. फ—पद्मा० । श्र—साट्टप्राकारगोपुरम् । ९. फ—०नाथां च ॥ १०. रा प्र घ म ल$_1$—बुद्धिर्मम सागरलङ्घने । ल$_2$—बुद्धिं म० । फ—०वि दिक्षया ॥ ११. फ श्र—भूमिमा०। १२. फ श्र—गमने । १३. फ—नयितुं मां महाकपे । रा घ म ल$_1$—गमनेऽपि च । श्र—नयने चापि ।

४०] अवश्यं सम्प-यार्या ते कार्य-सिद्धिर् निर्-आमया॥५०॥ [४४
अ-सह्यं मे कपि-श्रेष्ठ त्वया गन्तुं विहायसा ।
४१] वायु-वेग-सवेगस्य वेगो मां मोहयेत् तव ॥५१॥ [४५
अहम् आकाशम् आ-पन्ना ह्य् उपर्य्-उपरि सागरम् ।
N] प्र-पतेयं हि ते पृष्ठाद् भयाद् वेगेन गच्छतः ॥५२॥ [४६
पतिता सागरे चाऽहं तिमि-नक्र-झषाऽऽकुले ।
४२] भवेयम् आशु वि-वशा यादसाम् अन्नम् उत्तमम्॥५३॥ [४७
ततो मां पतितां तत्र हरि-श्रेष्ठ महाऽर्णवे ।
N] भक्षयेयुः मत्ति-भयाद् ग्राहाः सागर-वासिनः ॥५४॥ [N
न शक्ष्यामि त्वया गन्तुं सर्व-शत्रु-विनाशन ।
N] कलत्र-वति संदेहस् त्वय्य् अपि स्याद् अनन्तरम्॥५५॥ [४८
ह्रियमाणां तु मां दृष्ट्वा राक्षसा भीम-विक्रमाः ।
N] अनु-गच्छेयुर् आ-दिष्टा रावणेन दुर्-आत्मना ॥५६॥ [४९
तैः सम्यग् आ-वृतः क्रुद्धैः शूल-मुद्गर-पाणिभिः ।
N] भवेस् त्वं संशय-प्राऽऽप्तो मया वीर कलत्र-वान्॥५७॥ [५०
साऽऽयुधा बहवो व्योम्नि राक्षसास् त्वं निरा-युधः ।
N] कथं शक्ष्यसि सं-यातुं मां चैवं परि-रक्षितुम् ॥५८॥ [५१
युध्यमानस्य रक्षोभिस् ततस् तैः क्रूर-कर्मभिः ।

१. फ—०योष्ठ । २. च रा प्र ब म ल१ ल२—नास्ति ॥ ३. फ—अशक्यं मे कपिवर । ४. फ—मोहयेद् ध्रुवम् । ५. फ—प्रयाणे वेपनं याता ॥ ६. फ—निरालम्बा ह्यनुत्तमम् । ब—०साम्भक्ष्यमुत्तमम् ॥ ७. फ—जलभवा । ८. फ—शक्यामि । च रा प्र ब म ल१ ल२—शक्नोमि । ९. रा प्र ष म ल१ ल२—यातुं ॥ १०. फ—०माणाञ्च । ११. च—०सीर्मी० । १२. फ अ—सम्परिवृतः । म—संपरावृतः । १३. ल२—क्रुद्धः ॥ १४. रा प्र ब म—शक्नोसि । १५. ल१ ल२—मां यातुं । संयतेः पर्यायत्वेन संपातेरयं प्रयोगो द्र० । १६. अ—चापि ॥

N] प्रे-पतेयं हि ते पृष्ठाद् मयाऽऽर्त्तो कपि-सत्तम॥५९ ॥ [५२
अथ रक्षांसि भीमानि महान्ति बलवन्ति च ।
N] कथंचित् सं-पराये त्वां नयेयुः कपि-कुञ्जर ॥६०॥ [५३
अथवा युध्यमानस्य पतेयं पृष्ठतश् च ते ।
N] पतितां च नयेयुर् मां राक्षसा भीम-विक्रमाः ॥६१॥ [५४
मां वा हरेयुस् त्वत्-पृष्ठात् ते वि-शसेयुर् अथाऽपि च ।
N] अ-व्यवस्थौ च दृश्येते युद्धे जय-पराजयौ ॥६२॥ [५५
अहं वा यद् वि-पद्येयं रक्षोभिर् अति-पीडिता ।
N] त्वत्-प्रयत्नो हरि-श्रेष्ठ किं भवेद् हि प्र-योजनम् ॥६३॥ [५६
कामं त्वम् अपि पर्य्-आप्तो नि-हन्तुं सर्व-राक्षसान् ।
N] गन्तुं समीपं रामस्य मत्-तो हीयेत राघवः ॥६४॥ [५७
माम् आ-दाय हि रक्षांसि नयेयुर् अ-बलां क्वचित् ।
N] यत्र मां नाऽभि-जानीयुर् हरयो न च राघवः ॥६५॥ [५८
मयि जीवति श्रेयः स्याद् राघवस्य महाऽऽत्मनः । [६०प्
N] तस्मिन्न् इक्ष्वाकु-वंशस्य प्राणाः सक्ता महाऽऽत्मनि ॥६६ [N
अ-प्राऽऽप्नुवन् मां काकुत्स्थः प्राणान् अपि परि-त्यजेत् ।
N] रामं नि-पतितं दृष्ट्वा न भवेल् लक्ष्मणो ध्रुवम् ॥६७॥ [N

---

१. फ—संप० । प्र म ल१ ल२—प्रपेतयमहं ॥ २. आ—अभि र० ॥
३. ल२—जयेयुः । ४. [illegible] घ प्र म ल१—कपिसत्तम । ५. आ—विप्रुलस्य ।
६. रा प्र घ म ल१ ल२—मां नयेयुस्ते ॥ ७. रा प्र घ म ल१ ल२—हरेयुः । आ फ च—०स्त्वद्गात्राद्वि० । ८. च रा प्र घ म ल१ ल२—विपमेयुर् । फ च—विपमे युध्यतोऽपि वा । ९. घ—नास्ति ॥ १०. फ अ—अभिगर्जिता । च—०वर्जिता । ११. आ—त्रिम० ॥ फ अ—त्रुम० । १२. फ—म किं प्रंयेत । रा प्र घ—त्वत्तो हीयेत॥१३. फ—अथवा ।१४. च—त्रुटितः पाठः। १५. फ—यत्र मां नाभि० । १६. आ—०यः क्वापि । फ—०यो वापि । १७. घ—नास्ति॥ १८. आ—मम जीवितमाप्त्य । प्र घ— ल१ ल२—मम जीवितमज्ञाय । १९. आ फ च रा प्र घ—[illegible] । २०. आ—ममात्मनि ॥ २१. आ—०यात् ॥

धर्माऽऽत्मा भ्रातरौ श्रुत्वा वैवस्वत-गतिं गतौ ।
N] कथं जीवेन् महा-तेजा भरतो भ्रातृ-वत्सलः ॥६८॥ [N
तेषां प्राण-विपर्यासे किं शेषं स्यान् महाऽऽत्मनाम् ।
N] शत्रुघ्नस्य महा-बाहोस् तथा राज-कुलस्य च ॥६९॥ [N
तौ निर्-आशौ ममाऽर्थाय शोक-सन्ताप-कर्पितौ ।
N] सह सर्वैर् हरिभिस् त्यजेतां प्राण-संग्रहम् ॥७०॥ [६१
एवम् अन्यतराऽभावे मम चेह तवाऽपि वा ।
N] अदर्शनं गुणोदर्कं न तेऽहम् पृष्ठम् आ-रुहे ॥७१॥ [N
तस्य धर्म-प्रधानस्य पत्न्या रामस्य वानर ।
४३] पृष्ठे पुं-नामधेयस्य न युक्तम् अधि-रोहणम् ॥७२॥ [N
न युक्तो गात्र-संस्पर्शः पुरुषस्य ममाऽनघ ।
४४] भर्तुः शक्ति पुरस्-कृत्य रामाद् अन्यस्य वानर ॥७३॥ [६२
यद् अहं गात्र-संस्पर्शं रावणस्य बलाद् गता ।
४५] अन्-ईशा किं करिष्यामि अ-नाथा वि-वशा ह्य् अहम् ७४॥[
किन्तु रामो दश-ग्रीवम् इह हत्वा स-राक्षसम् । [६
सत्त्व-ज्ञो राक्षसानां च रघु-वंश-विवर्द्धनः ।
४७] इतो युक्तो हि मां नेतुं लक्ष्मणेन समं वि-भुः ॥७५॥ [

१. फ—०वर्तं । अ—०पुरं । २. फ ब—या ॥ ३. आ—०र्यं दे । ४. क सर्वैर्हरिभिः सार्द्धं । ५. च रा प्र व म ल$_{1}$ ल$_{2}$—स्त्यजेथाः ॥ ६. रा प्र ब ल$_{1}$—तव चैव ममापि । अ—तव चेह ममापि । ७. फ—अनेवक्ष्य गु० । ८. ल$_{2}$ नास्ति ॥ ९. फ अ—मया ॥ १०. ब ल$_{1}$ ल$_{2}$—त्रुटितः पाठः । ११. म—विस्कृत्य । १२. रा प्र ब ल$_{1}$ ल$_{2}$—नास्ति ॥ १३. आ—वर्तं । १४. रा प्र ल ल$_{2}$—नास्ति । १५. फ—अनेन । आ—आनीता । १६. अ—विनाथा १७. फ—राक्षसामन्तः । १८. फ—सह प्रभुः । १९. रा प्र ब म ल$_{1}$ ल$_{2}$ नास्ति ॥

श्रुतश् च दृष्टश् च मया परा-क्रमो
महाऽऽत्मनस् तस्य रणाऽवमर्दिनः ।
न देव-गन्धर्व-भुजङ्ग-राक्षसा
N] भवन्ति रामेण समा हि सं-युगे ॥७६॥ [६५

सम्-ईक्ष्य तं सं-यति चित्र-कार्मुकं
महा-बलं वासव-तुल्य-विक्रमम् ।
स-लक्ष्मणं को वि-षहेत राघवं
N] हुताऽशनं दीप्तम् इवाऽनिलेरितम् ॥७७॥ [६६

स-लक्ष्मणं राघवम् आजि-मर्द्दनं
ककुभिनं मत्तम् इव व्यव-स्थितम् ।
सहेत को वानर-मुख्य सं-युगे
N] युगाऽन्त सूर्य-प्रतिमान् शरान् क्षिपन्त(म्)७८॥[६७

'त्वं मे कपि-श्रेष्ठ स-लक्ष्मणं पतिं
स-यूथपं क्षिप्रम् इहोप-पादय ।
चिराय रामं प्रति शोक-कर्षितां
४८] कुरुष्व मां वानर हर्ष-संयुताम् ॥७९॥ [६८

इत्यार्षे रामायणे सुन्दर-काण्डे सीता-वाक्यं
नाम चतुस्त्रिंशः सर्गः ॥३४॥

१. फ–श्रुताश्च दृष्टाश्च । २. प्र घ म ल, ल२–महापराक्रमो । फ–०या पराक्रमा । ३. रा प्र घ म ल, ल२–०मर्द्दने ॥ ४. आ–समीक्षितुं । ल२–समाहितं । ५. फ अ–संप्रति । ल२–स्वर्पति । ६. फ–०कार्मुकम् । ७. फ–भाधिमर्षितं । ८. फ–नवं गजं । अ–क: कुञ्जरं । ९. आ–समाक्षिपन् । फ घ रा प्र घ म ल, ल२–क्षिपन् शरान् ॥ १०. फ–क्षिप्र. रामेकं हि । ११. फ–०षीरितम् ॥ १२. फ–हनुमत्सम्भाषणो । फ रा प्र व स–सीताहनूमत्संवादो । स, स२–हनुमत्सीतासम्वादो । १३. ल, ल२–षट्त्रिंशः ॥

ततः स कपि-शार्दूलः शाले-ताल-शिलाऽऽयुधः ।
१] सीताम् उवाच तच् छ्रुत्वा वाक्यं वाक्य-विशारदः ॥१॥[१
अनुं-रूपं त्वया देवि भाषितं प्रियें-दर्शने ।
२] सैदृशं स्त्री-स्वभावस्य साध्वीनां नियमस्य च ॥२॥ [२
स्त्रीत्वान् न त्वं समर्था वै सागरं व्यैति-वर्तितुम् ।
३] माम् अधि-ष्ठाय विस्तीर्णं शत-योजनम् आयतम् ॥३॥ [३
द्वितीयं कारणं यच् च ब्रवीपि प्रिय-दर्शने ।
४] रामाद् अन्यस्य नाऽर्हापि सं-स्पर्शम् इति जानकि ॥४॥ [४
तवैतंत् सदृशं वाक्यं पत्न्यांस् तस्य महाऽऽत्मनः ।
५] का ह्य् अन्या त्वाम् ऋते देवि ब्रूयाद् वचनम् ईदृशम् ॥५॥ [५
श्रोष्यतीऽदं स काकुत्स्थः सैर्वं निरव-शेष-तैः ।
६] चेष्टितं यत् त्वया देवि भाषितं च ममाऽग्र-तः ॥६॥ [६
कारणैर् बहुभिर् देवि राम-प्रिय-चिकीर्षया ।
७] स्नेहात् प्रैस्कन्न-मनसा मयैतत् समुदा-हृतम् ॥७॥ [७

---

१. प्र म ल$_1$ ल$_2$—साल० । श्र—हनुमान्मारुतात्मजः । २. फ—धर्मार्थसहितं वचः । ३. श्र—युक्त० । ४. फ—शुभ० । ५. श्र—ईदृशी ॥ ६. फ च—हि । ७. च—व्यप० । ८. आ—सागरं शतयोजनम् ॥ ९. फ श्र—कमलेक्षणे ॥ १०. रा द—न चैतत्स० । म—एतत्ते स० । श्र—एतत्ते देवि सदृशं पत्युस् । ११. श्रा—रामस्य । १२. च ग$_1$—स्वदत्ते भूयात्त्वेद् । रा म—त्वदृते भूयात्सीते । प्र—त्वामृते भूयात्सीते ॥ १३. प्र—सर्वदा ते विचेष्टितम् । ल$_1$—मर्वं सन्ततस्तवेप्सितम् । १४. श्र—नास्ति । १५. फ—धर्म्यं ॥ १६. फ—प्रस्कन्द० । रा म—प्रसन्न० । प्र व ल$_1$ ल$_2$ श्र—प्रक्लिन्न० ॥

लंकायां दुष्प-वेशत्वात् दुस्-तरत्वान् महोदधेः ।
N] सामर्थ्याद् आत्मनश् चैतन् मया संमुदा-हृतम् ॥८॥[3] [८
यदि नोत्सहसे गन्तुं मया सार्द्धम् अ-निन्दिते ।
९] अभि-ज्ञानं प्र-यच्छ त्वं जानीयाद् राघवो हि यत्॥९॥ [१०
उवाच वचनं चेदं वाष्प-गद्गदिताऽक्षरम् ।
१०] एवम् उक्ता हनुमता सीता सुर-सुतोपमा ॥१०॥ [११
इदं श्रेष्ठम् अभि-ज्ञानं ब्रूयास् तथ्यं मम प्रियम् ।[10]
३१] शैलस्य चित्र-कूटस्य पादे पूर्वोत्तरे तदा ॥११॥ [१२
तापसाऽऽश्रम-वासिन्या(ः)माऽऽस्यं मूल-फलाऽ शने।
३२] यत्र सिद्ध-सम्मते देशे मन्दाकिन्याम् अ-दूरतः॥१२॥ [१३
तेषूऽपवन-खण्डेषु नाना-पुष्प-सुगन्धिषु ।
३३] वि-हृत्य सलिल-क्लिन्ना तवाऽङ्केऽहम् उपाऽऽविशम् ॥१३॥१४
मनःशिला-मयं भाले तिलकं मे कृतं त्वया ।
३४] तदा दाशरथेस् तावद् एवं चिह्नं ब्रवीमि ते ॥१४॥ [N

---

१. आ-०यां । २. फ घ रा प्र म ल$_1$ ल$_2$ अ-चैव मयैतत् स०। ३. अतः परमधिकः पाठः—घ रा प्र म ल$_1$ अ-इच्छामि त्वां समानेतुमद्यैव रघुनन्दने । गुरुस्नेहेन भक्त्या च न त्वया समुदाहृतम् ॥ ४. फ-याहं । ५. म ल$_1$ ल$_2$ अ-प्रतीच्छ । ६. फ-०वो यथा । म-०घो यत् । ल$_1$ ल$_2$-हि तम् । अ-०वोपि यत् । ७. फ अ-हनुमन्तं सा । रा प्र घ म ल$_1$-वचनं मन्दं । ८. आ फ अ-०बुद्धिता० । ९. आ-सुरतो-पमा ॥ १०. फ-इदं चैवाप्यभिज्ञानं प्रयास्त्वं दयितं मम । ११. ल$_1$-पूर्वत्तरे ॥ १२. रा प्र घ म ल$_1$ ल$_2$-प्राशं। अ-प्रास्य । १३. आ-०फलोदके । रा प्र घ म ल$_1$ ल$_2$ अ-०फलोदकं । १४. अ-तत् ॥ १५. आ-वरयोपवन-गृहेषु । १६. आ-विहिता सलिलक्लिन्ना शचीकेहम् ॥ १७. रा घ म-पकं । १८. म ल$^1$ अ-ब्रवीपि मे ।

तुष्यन्तीऽवं प्र-हृष्टेन तदाऽहं लालिता त्वया ।
N] पर्यायेणैवं सुप्ता च तवाऽङ्के लक्ष्मणाऽग्र-ज ॥१५॥ [N
रोहिनं-मांसं-विभक्तं मे वायसः परि-खादति ।
३५] तदाऽहं लोष्टम् उद्यम्य वारयामि स्म वायसम् ॥१६॥ [१५
रोपयन्न् एवं काको मां तत्रैव परि-पीडयन्न् ।
३६] न चाऽप्य् उपाऽऽरमन् मांसं भक्षयन् बलि-भोजनः॥१७॥[१६
उत्-कर्षन्त्याश् च वसनं क्रुद्धायाम् तस्य पक्षिणः ।
३७] कृष्यमाणे च वसने त्वयोपेक्षा कृता मयि ॥१८॥ [१७
त्वयाऽव-हसिता चाऽहं क्षतात् परम-लज्जिता ।
३८] भक्ष्य-गृद्धेन काकेन वि-क्षता त्वाम् उपाऽऽगता ॥१९॥ [१८
आसीनस्य च ते श्रान्ता पुनर् उत्सङ्गम् आऽविशम् ।
३९] रुदती च म-हृष्टेन त्वयाऽहं लालिता पुनः ॥२०॥ [१९

---

१. आ म अ-तुष्यतीव । २. अ-त्वयाहं । आ-तदा संला०। ३.अ-पुनः॥ ४. आ-०नैव । फ अ-०वेन प्रसुप्ता । ल$_1$-खण्डितः पाठः ॥ ५. फ म अ-रोही मांसं वि० । ल$_1$-खण्डितः पाठः । ६. च रा प्र ब ल$_2$-०से । ७. अ-मसि० । आ फ-परिखादितः । ८. फ अ-तमहं । प्र-सदहं । ९. प्र-वारयामास वायसम् । रा-वारयामि सविस्मयम् । फ अ म-वारयामि स्म सर्वशः ॥ १०. फ-रोदयन्नेव । रा-रोपयानिव । प्र ब म-रोपयानिव । अ-रोपयत्येव । ११. च रा प्र ब म ल$_1$ अ-मे । १२. च रा ल$_1$ प्र म अ-०डीयते । ब-पर्यडीयत । १३. फ-तस्याप्यपहरन्मांसं प्रसह्य ॥ १४. रा प्र च म ल$_1$-०त्याश्च वसनं क्रुद्धायां । १५. ब प्र म ल$_1$ ल$_2$-भ्रममाणे । अ-भ्राम्यमाणे । १६. रा प्र च ल$_1$ल$_2$-त्वया प्रहसितं । १७. फ-क्रुद्धा विपारिधावती । ब प्र ल$_1$-०मतर्जिता । १८. आ-क्षतात् गृ०। फ-भक्ष गृ०। च प्र-भक्ष्यमृद्धेन । रा ब-भक्ष्यदष्टेन । १९. आ-तुदन्ती । च रा प्र ब म ल$_1$ ल$_2$ अ-रुदती । २०. फ-०गमम् ॥ २१. आ-विश्रं-स्ता । २२. आ-०नीव । २३. अ-त्वया संला० ॥

वाष्प-पूर्ण-मुखी दीना चक्षुषी परि-मार्जती ।[२०पू
N] परि-श्रान्ता च सुप्ता च राघवाऽङ्के सुखं ह्य् अहम् ॥२१॥
पर्यायेण च सुप्तस् त्वं ममाऽङ्के भरताऽग्र-ज ।[२१
N] ततः सुप्त-विबुद्धां मां तवोत्सङ्गात् समुत्-थिताम् ॥२२॥
N] वायसः पुनर् आ-गम्य वि-ददार स्तनाऽन्तरे ।[२२
४१पू] लक्षिताऽहं त्वया तत्र वायसेन प्र-कोपिता ॥२३॥ [२०उ
आशी-विष इव क्रुद्धः श्वसन् वाक्यम् अभाषथाः ।[२५उ
नखाऽग्रैः केन ते भीरु स्तनयोर् अन्तरं क्षतम् ।
N] कः क्रीडति स-रोषेण पंच-वक्रेण भोगिना ॥२४॥ [२६
निर्-ईक्षमाणश् च ततो वायसं तम् अपश्यथाः ।
N] नखैः स-रुधिरैस् तीक्ष्णैर् माम् एवाऽभि-मुखं स्थितम् ॥२५॥ [२७
पुत्रः किल स शक्रस्य वायसः पततां वरः ।
N] धराऽन्तर-गतः शीघ्रः पवनस्य गतौ समः ॥२६॥ [२८
ततस् तस्मिन् महा-बाहो क्रोध-संरक्त-लोचनः ।
N] वायसेऽकुरुथाः क्रूरां मतिं मतिमतां वर ॥२७॥ [२९
४१उ] तस्योद्-हृत्य त्वयेषीका क्षिप्ता वै वर-पाणिना ।
४२पू] ब्रह्मणोऽस्त्रेण सं-धाय स(?सा) प्र-जज्वाल वै तदा ॥२८॥ [३०
N] विक्षेपोऽस्य प्र-दीप्तां ताम् इषीकां वायसं प्रति ।[३१पू
४२उ] अनु-पक्तम् तया काको जगाम वि-विधां गतिम् ।
खे पतन् स इमांल् लोकान् भयाद् अनु-चचार ह ॥२९॥ [३२

---

१. रा प्र घ ल$_2$ श्र—॰मार्जिना। ल$_1$—॰मार्जना ॥ २. प्र—लालिताहं। श्र—उपेक्षिताह ॥ ३. आ—श्वसन्वाक्यमभाषित। घ—॰वाक्यमभाषथाः। ४. आ—अन्तरे। ५. ल$_1$—वारितं ॥ ६. फ—उदा वायसमवेक्ष्य च। ७. श्र—सरु-धिरस्तीक्ष्णैर। ८. आ श्र—॰मुखे॥ ९. आ—वरदपा॰। १०. घ म—ब्रह्मणास्त्रे॰॥ ११. आ—स तां प्रदीप्तां चिक्षेप। १२. फ—तदा। प्र म—त्वया। १३. आ—तेऽस्त्रम् इमं लोकम् ॥

४३] यः सं वर्षति पर्जन्ये डीयते पृषतांऽन्तरे ।
४४पू] तस्यैषीकां त्वया क्षिप्तां छायेवाऽन्व्-अपतद् द्रुतम् ॥३०॥ [N
N] सं पित्रा च परि-त्यक्तः सुरैः सर्वैश् च वायसः ।
४४उ] परि-क्रम्य स लोकांस् त्रींस् त्वाम् एव शरणं गतः ॥३१॥ [३३
N] तं त्वं नि-पतितं भूमौ शरण्यः शरणाऽऽगतम् । [३५पू
परि-घूर्णं त्रि-पर्वं च तं त्वम् आ-गतम् उक्तवान् ॥३२॥
४५] अ-मोघोऽयम् इषुर् मुक्तः किम् अहं घातयामि ते । [३६
४६पू] तेनैकं नयनं त्यक्तं तद् इषीकाऽभ्य्-अघातयत् ॥३३॥ [३७पू
स ते तथा नमस्-कृत्य राज्ञे दशरथाय च ।
N] त्वया वीर वि-सृष्टः सन् प्रति-पेदे स्वम् आलयम् ॥३४॥ [३८
४६उ] मत्-कृते काक-मात्रेऽपि ब्राह्मम् अस्त्रम् उद्-ईरितम् ।
कस्माद् यो मां हरेत् तस्य त्वं क्षमेथा मही-पते ॥३५॥ [३९
४७] एवम् अस्त्र-विदां श्रेष्ठः सत्त्व-वान् बल-वान् अपि ।
४८पू] किम्-अर्थम् अस्त्रं दिव्यं वै न योजयसि राघव ॥३६॥ [४२
४९उ] न देवा न च गन्धर्वा नाऽसुरा न मरुद्-गणाः ।
राघवस्य रणे वेगं शक्ताः सर्वे सम्-आसितुम् ॥३७॥ [४४
५०] तस्य वीर्यवतः कश्चिद् यद्य् अस्ति मयि सं-भ्रमः ।
किं त्वं न सायकैस् तीक्ष्णैः क्षयं नयसि राक्षसान् ॥३८॥ [४५
५१] भ्रातुर् आ-देशम् आ-दाय लक्ष्मणो वा परं-तपः ।

१. प्र थ ल$_1$ ल$_2$—स्म । २. घ रा प्र थ म ल$_1$ ल$_2$—वृहदन्तरे । अ—वृषभान्तरे । ३. फ—॰पोऽन्वपा क्षिप्त । ४. म—छायेवानुगता ज्वलन् । अ—वायुवेगाः पतङ्गिः । ५. प्र ल$_2$—तदैव । म—शक्रेण ॥ ६. फ—पातिडीनो । प्र च म ल$_1$ ल$_2$ अ—पातितं । ७. फ—त्रिपर्वा च । रा प्र च म ल$_1$ ल$_2$ अ—विपण्णश्च ॥ ८. अ—॰काम्यमानयत् ॥ ९. ल$_1$—॰मिदं श्रेष्ठं । १०. फ घ रा प्र थ म ल$_1$ ल$_2$ अ—रक्षस्सु ॥ ११. फ घ रा प्र च म ल$_1$—तव राम । १२. फ—प्रतिसमा॰ ॥ १३. अ—संयतः ॥

कस्य हेतोर् न मां वीरः परि-त्रायेते सु-व्रतः ॥३९॥ [४६

५२] यदि तौ पुरुष-व्याघ्रौ वाय्व्-अग्नि-सम-तेजसौ ।
सुराणाम् अपि दुर्-द्धर्षौ किम्-अर्थं माम् उपेक्षतः ॥४०॥ [४७

५३] ममैव दुष्-कृतं किञ्चिन् महद् अस्ति न संशयः ।
समर्थाव् अपि तौ यस्माद् उपेक्षेते परं-तपौ ॥४१॥ [४८

५४] स वाच्यो राघवः श्रीमान् पूर्ण-चन्द्र-निभाऽऽननः ।
प्रणाम-पूर्वं सौहार्दात् समा-गम्य सुहृत्-प्रियः ॥४२॥ [N

५५] कुरुष्व त्वं महोत्साहं कृपां मयि नरर्षभ । [४०पू

४९पू] आनृ-शंस्यं परो धर्मस् त्वत्-त एव श्रुतो मया ॥४३॥ [४१

जानामि त्वां महोत्साहं महा-सत्त्वं महा-बलम् । [४२पू

५६] महेष्वासं महा-प्राज्ञं महा-वेगम् अरिं-दमम् ॥४४॥ [N

अपार-पारम् अ-क्षोभ्यं गाम्भीर्ये सागरोपमम् । [४३

५७] कौशल्या लोक-गोप्तारं सुषुवे त्वां मनस्विनी ॥४५॥

५८पू] तं मद्-अर्थे सुखं पृच्छेः शिरसा चाऽभि-वादयेः ॥४६॥ [५६

५९उ] सं-चयं सर्व-रत्नानां प्रियाश् च परमाऽङ्गनाः ।
ऐश्वर्यं हि विशालायाः पृथिव्या योऽवाऽमन्यत ॥४७॥ [५७

---

१. च प्र ब म ल₁ ल₂—०त्रायति राघवः । रा—०त्रायेत राघवः । ब—०त्रायति सर्वतः ॥ २. च—दुर्धर्षौ किमर्थं मामुपेक्षितः । ३. फ—मन्ये । ४. रा प्र ष म ल₁—यौ द्वौ मामुपेक्षेयां (तां) । फ—तौ यस्मो नावेक्षेते सुदुःखितां ॥ ५. फ—प्रणम्य ॥ ६. फ ल₁—महासत्वं महाबलम् । अ—मयि नरेश्वर । ७ फ अ—श्रुतं । ८.च रा प्र य ल₁ ल₂—नास्ति ॥ ९.ल₁—कुरुष्व । १०. रा प्र ष ल₁—नास्ति । ११. फ— महाबहुं महाप्राज्ञं वेगवन्तमरिन्दमम् ॥ १२.—मपराजितम् । १३. फ—लोकहर्त्तारं । घ—लोकगुसारं । १४. म ल₁ अ—०येय । १५. फ ष म ल₁ अ—मनस्विनम् ॥ १६. आ—त्वं मदर्थे ममापृच्छे । फ अ—तं ममार्थे । १७. आ म म—०दयन् । ष ल₁—०दनम् ॥ १८. आ—परमं गताः । फ अ—परमांगणाः । च रा ष—परमं गताः । १९. फ रा म—०र्थे । २०. फ—च विशालयां पृथिव्यां ॥

६०] पितरं मातरं चोभौ सं-मान्याऽभि-प्रणम्य च ।
अनु-प्रजितो रामं सु-मित्रा तेन सु-प्रजा ॥४८॥ [५८

६१] अनु-क्रोशेन धर्माऽऽत्मा त्यक्त्वा सुखम् अन्-उत्तमम् ।
अन्व्-अगच्छत काकुत्स्थं भ्रातरं पालयन् वने । [५९

६२] सिंह-स्कन्धो महा-बाहुर् मनस्वी प्रिय-दर्शनः ॥४९॥ [६०पू
वृद्धोप-सेवी लक्ष्मी-वान् शक्तः[1] चाऽबहु-जल्पकः । [६१पू

६३] राज-पुत्रः प्रियो राज्ञः सेदशः श्वशुरस्य मे[2] ॥५०॥
मतः प्रिय-तरो नित्यं[3] मम रामस्य लक्ष्मणः । [६२

६४] पितृ-वद् वर्तते रामे मातृ-वद् वर्तते मयि ॥५१॥ [६०उ
ह्रियमाणां तदा वीरो न मां वेत्ति स लक्ष्मणः । [६१उ

६५] योज्यते[4] धुरि यस्यां तु तामं वद्-वहति धुर्य-वत् ।

६६पू] रामे-प्रिये हि सन्न् एव तचम आर्यम् अनु-स्मरन्॥५२॥[६३
साऽसुराः सह-गन्धर्वा भुजङ्ग-नर-देवताः ।

N] नि-हन्यात् समरे क्रुद्धः किं पुना रावणं रणे ॥५३॥ [N

६६उ] मृदुर् दान्तः शुचिर् दक्षः प्रियो रामस्य लक्ष्मणः ।
स मद्-वाक्येन कुशलं वक्तव्यो लक्ष्मणस् त्वया[11] ॥५४[६४

६७] अ-प्रमत्तेन काकुत्स्थे भवितव्यं त्वयेति च ॥

---

१. फ-प्रसाप । २. प्र च म ल१-नित्यं ॥ ३. फ घ-मद्गुणश्चेति ॥ ४. प्र-शान्तवत् । ५. रा प्र च म ल१-सहदेवाधिपस्य च । श्रा-श्वशुरस्य ॥ ६. फ-प्रसौ । प्र-संगो । ल१-संगी । च प्र-नित्यमङ्गं । म-नित्यमङ्गो ॥ ७. प्र ल१-युज्यते । ८. फ-स समुद्वहते ध्रुवम् ॥ ९. फ च रा-रामस्नेहादवसन्नेव । प्र ल१-०स्नेहादवसन्ने च । प्र-०स्नेहावसन्तेव । च म-०स्नेहाद्वसन्नेव ॥ १०. श्रा-ससुरासुरगन्धर्वाः ॥ ११. फ-स ते मद्वचनाद्वाच्यः कुशलं वनेचरः । रा प्र म प्र-मद्वाक्यात्कुशलं वाच्यस्त्वया वानरपुङ्गव । ल१-मद्वाचा कुशलं वाच्यस्त्वया वानरपुङ्गव ॥

उत्थायोत्थाय वक्तव्यो वचनं लक्ष्मणो मम ॥५५॥ [N

६८] कुशलं लक्ष्मणं दृष्ट्वा सुग्रीवं च महा-बलम् । [N

इदं ब्रूयास् तु मे नाथं शूरं रामं पुनः पुनः ॥५६॥ [६६उ

६९] जीवितं धारयिष्यामि यावन् मासो भविष्यति ।

ऊर्द्ध्वं मासान् न जीवेयं सत्यम् एतद् ब्रवीमि ते ॥५७॥ [६७

७०] रावणेनोप-रुद्धां मां नि-कृत्य प्राकृताम् इव ।

त्रातुम् अर्हसि मज्जन्तीं वराह इव मेदिनीम् ॥५८॥ [६८

७१] सीतायास् तद् वचः श्रुत्वा हनुमान् इदम् अब्रवीत् ।

सर्वं करिष्यते रामो यावद् इच्छसि मैथिलि ॥५९॥ [N

७२] यत् तु रामोऽभि-जानीयाद् अभि-ज्ञानम् अ-निन्दिते ।

प्रीति-सञ्जननं तस्य तद् प्र-दातुम् इहार्हसि ॥६०॥ [N

७३] सा निर्-ईक्ष्य ततः सर्वं वेण्युद्-ग्रथितम् उत्तमम् । [N

ततो वस्त्र-गतं मुक्त्वा दिव्यं चूडा-मणिं शुभम् ।

७४] प्र-देयो राघवायेति सीता हनुमते ददौ ॥६१॥ [६९

प्रति-गृह्य ततो वीरो मणिं वेणी-शयं शुभम् ।

N] अंगुल्यां योजयामास न ह्य् अस्य माऽभवद् भुजे ॥६२॥ [७०

---

१. फ घ-वचनात् ॥ २. फ-लक्ष्मणे ॥ ३. फ घ-मासं दशरथात्मज । घ-०सो गमिष्यति । आ-यावन्मासं भ० । ४. ल₁-मासं । ५. आ-सत्यं प्रतिशृणोति मे ॥ ६. फ-नश्यन्तीं पृथिवीमिव राघवः । घ-पाताले पतन्तीमिव मे० ॥ ७ प्र म ल₁ घ-तु ॥ ८. फ-०तुं ममार्हसि । ९. घ रा प्र ष म ल₁ ल₂ घ-वेणीप्र० । १०. फ घ रा प्र ष म ल₁ ल₂ घ-वेणीं मुक्त्वा ददौ तस्मै । ११. फ-चूडामणिरयं हनूमते ॥ १२. फ-प्रदेय । १३. फ घ रा प्र घ-मुरगुलोपमा । १४. म-नास्ति ॥

१०]　　पयो-धरः शैलम् इवोग्र-वृष्टिभिः ॥२२॥ [२२

स ताञ् शरांस् तस्य वि-मोक्षयन् कपिश्

　　चचार वीरः पथि वायु-सेविते ।

शराऽन्तरे मारुतिर् एष निप्-पतन्

११]　　मनो-जवः सं-यति चंड-विक्रमः ॥२३॥ [२३

तम् आच-चाणाऽऽसनम् आहवोन-मुखं

　　समो-चरन्तं नि-शितैः शरोत्तमैः ।

अवैक्षताऽऽत्तं बहु-मान-चक्षुषा

१२]　　जगाम चिन्तां च स मारुताऽऽत्म-जः ॥२४॥ [२

ततः शरैर् भिन्न-भुजाऽन्तर-च्छविः

　　कपिः कुमारेण महाऽऽत्मनाऽग्र-तः ।

महा-भुजः कर्म-विशेष-तत्त्व-विद्

N]　　व्य्-अचिन्तयत् तस्य रणे पराऽऽक्रमम् ॥२५॥ [२

अ-बालवद् बाल-दिवाकर-प्रभः

　　करोत्य् अयं कर्म महद् महा-बलः ।

न तावद् अस्याऽऽहव-कर्म-शोभिनः

१३]　　प्र-मापणे मे मतिर् आशु जायते ॥२६॥ [२६

अयं महाऽऽत्मा च महांश् च वीर्य-तः

　　समा-हितश् चाऽऽशु-गतिश् च सं-युगे । [२७पू

---

१. फ-इवाश्मवृष्टिभिः ॥ २. फ अ-मारुतवद्विनिष्पतन् ॥ ३. फ-आहवप्रियं । ४. फ अ-समापतन्तं । आ-समं चरन्तं । रा प्र व म ल१ ल२-समाचरन्तं । ५. प्र-अचक्षताऽऽत्तं । ६. फ-चिन्तामय ॥ ७. फ प्र व म ल१ ल२ अ-०ना नदन् । रा-०ना नुदन् । ८. आ-विचित्रयं-स्तस्य ॥ ९. च रा प्र व ल१ ल२-प्रमापणे ॥ १०. च रा प्र व म ल१ ल२-वीर्यवान् ।

महच् च कर्माऽप्रतिमं सम्-ईहते

N] न बाल-भावं समरेऽनु-वर्तते ॥२७॥ [N

अ-संशयं कर्म-गुणोदयाद् अयं

स-नाग-यक्षैर् मुनिभिः स-चारणैः । [२७३

पराऽऽक्रमोत्साह-विवृद्ध-मानसः

१४] सम-ईक्ष्यते स प्र-मुखे व्यव-स्थितः॥२८॥

पराऽऽक्रमो ह्य् अस्य मनांसि कम्पयेत्

N] सुराऽसुराणाम् अपि शीघ्र-कारिणः । [२८

न खल्व् अयं नाऽभि-भवेद् उपेक्षितः

पराऽऽक्रमो ह्य् अस्य रणे वि-वर्द्धते॥२९॥

प्र-मापणं त्व् एव ममाऽस्य रोचते

१५] न वर्द्धमानोऽग्निर् उपेक्षितुं क्षमः । [२९

इति प्र-वेगं च परस्य कीर्तयन्

स्व-कर्म-योगं च वि-धाय वीर्यवान् ॥३०॥

वधे कुमारस्य महा-बलस् तदा

N] चकार बुद्धिं हनुमान् महा-कपिः । [३०

स तस्य तान् अष्ट हयान् महा-जवान्

समा-हितान् भार-सहान् वि-वर्तिनः ॥३१॥

१. आ—महांश्च । २. आ—समरे तु व० ॥ ३. म—कर्मगुणैर्महोदयः । फ च रा भ ब ल$_1$ ल$_2$—०णोदयोदयः । ४. फ अ—मुनिभिश्च वा० । ५. आ—समीक्षते । ६. फ—मस्समराग्रमास्थितः ॥ ७. ल$_2$—नापि भवेद् । ८. प्र—०क्रमस्त्वस्य । ९. रा—प्रवर्द्धते ॥ १०. अ—हत्युग्रवेगं । फ—इति प्रमेयं । ११. फ—बलस्य । १२. रा ब—सुकर्म० ॥ १३. फ—युद्धं । १४. फ—०बलः । अ—०मतिः । १५. च रा भ ब म ल$_1$ ल$_2$—उग्रजवान् महाबलान् । १६. च रा भ ब म ल$_1$ ल$_2$—०रसमाधिवर्तिनः । अ—०रसहांस्तरस्विनः ॥

रथे नि-युक्तान् नि-जघान वाजिनस्

N]     तलैश् च वालैश् च कपिर् महा-बलः । [३१

ततस् तलेनाऽभि-हतो महा-रथः

    स तस्य पिंगाऽधिप-मन्त्रिणा सुतम् ॥३२॥

प्रभग्न-नीडः सं-युगाऽऽत्त-कूबरः

१६]     पपात भूमौ हत-वाजि-सारथिः । [३२

स तं परि-त्यज्य महा-रथो रथं

    स-कार्मुकः खड्ग-धरोऽभि-पुप्लुवे ॥३३॥

तपोऽभि-योगाद् ऋषिर् उग्र-विग्रहो

१७]     वि-हाय देहं मरुताम् इवाऽऽलयम् (ये) । [३३

ततः कपिस् तं वि-चरन्तम् अम्बरे

    पतत्रि-राजाऽनिल-सिद्ध-सेविते ॥३४॥

स मारुतिर् मारुत-वेगवीम् तदा

१८]     करेण जग्राह च पादयोर् दृढम् । [३४

स तं समा-विध्य सहस्र-शः कपिर्

    महोरगं क्रुद्ध इवाऽण्डजेश्वरः ॥३५॥

कुमारम् अहं मविकीर्ण-भूषणं

१९]     विनिष्-पिपेषाऽऽशु-गतिर् मही-तले । [N

स भग्न-बाहूऽऽरु-कटी-शिरोधरः

    क्षरन् असृङ् निर्-मथिताऽस्थि-लोचनः ॥३६॥

---

१. रा म--०मद: । २. घ रा पं म स$_1$ स$_2$ च--स हि । प्र-ह्येन ॥ ३. भा--०मीषु । ४. फ--०निक्षेपाणम् । रा प्र प म स$_1$ स$_2$ ञ--०नित्यं स्यात् । ५. अ--०गंमदो ॥ ६. भा--०मनवान्... । ७. मा-इवो-दितेश्वरः ॥ ८. रा प्र घ म स$_1$ स$_2$--०मर्मि ॥

विमुक्त-सन्धिः[1] प्रविकीर्ण-बन्धनो
२०] हतः क्षितौ वायु-सुतेन
महा-कपिर् भूमि-तले नि-पात्य[2] तं
N] चकार रक्षोऽधि-पतेर् महद् भयम् ॥३७॥ [३६

महर्षिभिश् च प्र-वरैर्[3] महा-व्रतैः
सम्-एत्य भूतैश्[4] च स-यक्ष-पन्नगैः ।
सुरैश् च सेन्द्रैर्[5] भृश-जात-विस्मयैर्
२१] हते कुमारे स[6] कपिर् निर्-ईक्षितः ॥३८॥ [३७

स तं नि-हत्या[7]ऽमर-वीर-दुर्जयं
कुमारम् अक्षं क्षत-जोपमेक्षणः[8] ।
तद् एव वीरो[9]ऽथ जगाम[10] तोरणं
२२] कृत-क्षणः काल इव प्रजा-क्षये ॥३९॥ [३८

इत्यार्षे रामायणे सुन्दर-काण्डेऽक्ष-वधो[11]
नाम त्रयश्चत्वारिंशः सर्गः ॥४३॥

---

१. आ–०सन्ध्यः । २. आ–निर्मथ्य । फ–निपिष्य । अ–निपिष्य । प्र-निपातितं ॥ ३. आ–चक्रधरैर् । म ल$_1$ ल$_2$–चक्रचरैर् । ४. च रा ब प्र म ल$_1$ ल$_2$–यक्षैश्च सभूतपन्नगैः । ५. अ–सेन्द्रैस्तु भृशं जयोदयैः । ६. फ–बहुभिर् ॥ ७. प्र ब म ल$_1$ ल$_2$ अ–निहत्यासुरवी० । ८. च प्र ब म ल$_1$ ल$_2$–क्षतजेक्षणं कपिः । आ–क्षतजोपमेक्षणं । ९. च रा प्र ब म ल$_1$ ल$_2$–वीरः प्रतिगृह्य ॥ १०. ल$_2$–इति । ११. च रा प्र ब म ल$_1$–०ण्डेऽक्ष-कुमारवधो ॥

## [चतुश्चत्वारिंशः सर्गः]



ततस् तु रक्षोऽधिपतिर् महाऽऽत्मा
हनूमताऽक्षे नि-हते कुमारे ।
मनः समा-धाय विवृद्ध-रोषः
१] समा-दिदेशेन्द्रजितं रणार्थे ॥१॥ [१
त्वम् अस्त्र-विच् छस्त्र-विदां वरिष्ठः
प्रसन्न-बुद्धिः समरेष्व् अ-धृष्यः ।
सुरेषु सेन्द्रेषु च दृष्ट-कर्मा-
२] पितामहाऽऽराधन-सञ्चिताऽस्त्रः ॥२॥ [२
तवाऽस्त्र-बलम् आ-साद्य नो सुराः स-मरुद्-गणाः ।
३] अन्ये च त्रिषु लोकेषु सं-युगेऽधि-गताः शमम् ॥३॥ [३
भुज-वीर्याऽभि-गुप्तश् च तपसा चाऽभि-रक्षितः ।
४] देश-काल-विधि-ज्ञश् च त्वम् एव मति-स(१म)त्तम ॥४॥ [४
न तेऽस्त्य् अ-साध्यं समरेषु कर्मणां
न तेऽस्ति तुल्यं मति-दर्शनेषु च ।[१३]

---

१. च प्र ल१—॰तेर् । २. प्र—महात्मना । ३. च रा व प्र म ल१—
तमिन्द्रकल्पं । श्र—नदिन्द्रकल्पं । ४. च श्र—सरोपात् । रा प्र व म ल१
ल२—सरोपः । ५. फ—॰मृच्छस्त्रभृतां । प्र च म ल१—विच्चास्त्रविदां ।
६. च-रा प्र व म ल१ ल२—समरेऽप्रधृष्यः । श्र—समरेषु युक्तः । ७. फ—
न सुराः । च श्र—सासुराः । रा प्र व ल१ ल२—ससुराः । म—नासुराः ।
८. म श्र—अन्येषु । ९. फ—॰गेषु गताः । च रा व—॰गेऽभिगताः । श्र—॰गे न
गताः । १०. ल१ ल२—श्रियं । ११. श्र—॰गुप्तैश्च । १२. व ल१ ल२—कर्मणा ।
१३. च प्र व म ल१ ल२—न तेऽस्त्यकार्यं मतिदृष्टपूर्वं । रा—न तेऽस्त्यकार्यं-
मतिदृष्टपूर्वं ।

विमुक्त-सन्धिः प्रविकीर्ण-बन्धनो<br>
२०] हतः क्षितौ वायु-सुतेन राक्षसः ।<br>
महा-कपिर् भूमि-तले नि-पात्य तं<br>
N] चकार रक्षोऽधि-पतेर् महद् भयम् ॥३७॥ [३६

महर्षिभिश् च प्र-चरैर् महा-व्रतैः<br>
सम्-एत्य भूतैश् च स-यक्ष-पन्नगैः ।<br>
सुरैश् च सेन्द्रैर् भृश-जात-विस्मयैर्<br>
२१] हते कुमारे स कपिर् निर्-ईक्षितः ॥३८॥ [३७

स तं नि-हत्याऽमर-वीर-दुर्जयं<br>
कुमारम् अक्षं क्षत-जोपमेक्षणः ।<br>
तद् एव वीरोऽथ जगाम तोरणं<br>
२२] कृत-क्षणः काल इव प्रजा-क्षये ॥३९॥ [३८

इत्यार्षे रामायणे सुन्दर-काण्डेऽक्ष-वधो<br>
नाम त्रयश्चत्वारिंशः सर्गः ॥४३॥

---

१. आ–॰सत्वः । २. आ–निर्मथ्य । फ–निपिष्य । अ–निपिष्य । प्र निपातित ॥ ३. आ–चक्रधैरर् । म ल₁ ल₂–चक्रचैरर् । ४. च रा घ प्र म ल₁ ल₂–यक्षैश्च सभूतपन्नगैः । ५. अ–सेन्द्रैस्तु भृशं जयोदयैः । ६. फ–प्रभुभिर् ॥ ७. प्र घ म ल₁ ल₂ अ–निहत्यासुरवी॰ । ८. च प्र घ म ल₁ ल₂–क्षतजेक्षण कपिः । आ–क्षतजोपमेक्षण । ९. च रा प्र य म ल₁ ल₂–धीरः प्रतिगृह्य ॥ १०. ल₂–इति । ११. च रा प्र य म ल₁–॰वधेऽक्ष कुमारवधो ॥

## [चतुश्चत्वारिंशः सर्गः]



ततस् तु रक्षोऽधिपतिर् महाऽऽत्मा
हनूमताऽक्षे नि-हते कुमारे ।
मनः समा-धाय विवृद्ध-रोषः
१] समा-दिदेशेन्द्रजितं रणार्य ॥१॥ [१

त्वम् अस्त्र-विच् छस्त्र-विदां वरिष्ठः
प्रसन्न-बुद्धिः समरेष्व् अ-धृष्यः ।
सुरेषु सेन्द्रेषु च दृष्ट-कर्मा
२] पितामहाऽऽराधन-सञ्चिताऽस्त्रः ॥२॥ [२

तवाऽस्त्र-बलम् आ-साद्य नौ सुराः स-मरुद्-गणाः ।
३] अन्ये च त्रिषु लोकेषु सं-युगेऽधि-गताः शमम् ॥३॥ [३

भुज-वीर्याऽभि-गुप्तश् च तपसा चाऽभि-रक्षितः ।
४] देश-काल-विधि-ज्ञश् च त्वम् एव मति-स(?म)त्तम ॥४॥ [४

न तेऽस्त्य् अ-साध्यं समरेषु कर्मणां
न तेऽस्ति तुल्यं मति-दर्शनेषु च ।[11]

---

१. व प्र ल$_1$—॰वेर् । २. प्र—महात्मना । ३. च रा व प्र म ल$_1$—तमिन्द्रकल्प । श्र—तदिन्द्रकल्पं । ४. च श्र—सरोपात् । रा प्र व म ल$_1$ ल$_2$—सरोपः । ५. फ—॰सृष्टसमृता । प्र व म ल$_1$—विच्चाक्षविदा । ६. च रा प्र व म ल$_1$ ल$_2$—समरेऽप्रधृष्यः । श्र—समरेषु युक्तः । ७. फ—न सुराः । च श्र—सासुरा. । रा प्र व ल$_1$ ल$_2$—ससुराः । म—नासुराः । ८. म श्र—अन्येषु । ९. फ—॰गेषु गताः । च रा व—॰गेऽभिगताः । श्र—॰गे न गताः । १०. ल$_1$ ल$_2$—श्रियं । ११. श्र—॰गुप्तैश्च । १२. व ल$_1$ ल$_2$—कर्मणा । १३. च प्र व म ल$_1$ ल$_2$—न तेऽस्त्यकार्यं मतिदृष्टपूर्वं । रा—न तेऽस्त्यकार्य-मतिदृष्टपूर्वं ।

न चाऽपि कश्चित्[1] त्रिपु सं-ग्रहेपु
[५] [2]व्यति-क्रमेद् [3]अस्त्र-बलं बलं च ।
[4]ममाऽनु-रूपं [5]सु-महद् बलं ते
[६पू] पराऽऽक्रमश् चाऽर्थ-परिग्रहश् च ।[5]
[6]भवन्तम् आ-साद्य रणाऽव-मर्दे
[७] [7]मनः शमं गच्छति निश्चिताऽर्थम् ॥६॥[8] [६
नि-हताः किं-कराः सर्वे जम्बु-माली च राक्षसः ।
७] अमात्य-पुत्रा वीराश् च पंच-सेनाऽग्र-गाम् तथा ॥७॥ [७
अक्षः कुमारोऽति-बलो दुर्-धरश् च महा-बलः । [८उ
८] न [9]चे ते समरे कश्चित् तुल्योऽस्ति रिपु-सूदनः ॥८॥ [N
न [10]चैवं [11]सारता [12]तेपु[13] यथा त्वयि महा-द्युते । [९
९] तस्माद् गच्छाऽद्य [14]पुत्र त्वं युद्धाय वि-जयाय च ॥९॥ [N
[15]इमं त्वं अ-धृष्यं [15]परमं बलेपु
कपेः प्र-भावं च पराऽऽक्रमं च ।[16]

---

१. च ल, ल$_2$ अ रा प्र–वेत्ति । २ रा प्र किंचिद् । ३. च रा प्र ष म ल, ल$_2$–न वेदयत्तेऽस्त्र० अ–न वेद यन्नेऽस्त्रबलाबलं । ४. फ च रा प्र ष म ल, ल$_2$ अ–तपसो । ५. रा प्र ष–पराक्रमं शास्त्रपरिग्रहं च । म ल, ल$_2$–पराक्रमं चास्त्रपरिग्रहं च । ६. आ–नन्वेवम् । रा प्र ष ल, ल$_2$–न त्वेवम् । अ–त्वमेवम् । ७. आ जनः । ८. आ–०र्थः । ९. अतः परमाधिकः पाठः–आ रा प्र ष म ल, ल$_2$–सर्वेपु कार्येपु समर्थनीया । बुद्धिस्त्वयावेह महानुभावः । पुनश्च प्र–निहत्य रक्षांसि बहूनि संयुगे कुमारमक्षं च विनाश्य वानरः । यभीतवद्गर्जति तस्य निग्रहं त्वयाशु रक्षोवर संविधीयताम् । १०. रा प्र ष म ल, ल$_2$–०गा हताः । ११. फ–तु । १२. फ–यमे । १३. रा प्र प म ल, ल$_2$ च–सारतेपु । १४. फ–वै पुत्र । १५. फ च–भवं दृश्यः परमो । च प्र ष म ल, ल$_2$–इमं दृश्यं । १६. फ–कपेः प्रभावश्च पराक्रमश्च ।

त्वम् आत्मना चैव सम्-ईक्ष्य सर्वं
१०] कुरुष्व वीर्यं स्व-गुणाऽनु-रूपम् ॥१०॥ [१०

बलाऽव-मर्दम् त्वयि सं-निविष्टे
यथा न गर्हेयुर् उदार-सत्त्वाः ।
तथा सम्-ईक्ष्याऽऽत्म-बलं परं च
११] प्रज्ञा-कृते कर्म समा-रभस्व ॥११॥ [११

न खल्व् इयं मतिर् मह्यं (?) यत् त्वां सं-प्रेषयाम्य् अहम् ।
१२] इयं तु राज-धर्माणां क्षत्रियाणां गतिर् मता ॥१२॥ [१४

नाना-सत्त्वैश् च सं-ग्रामे त्वया सार्द्धम् अरिं-दम ।
१३] अवश्यम् एव योद्धव्यं कार्यस्य (?श्च) नि-जयो रणे ॥१३॥ [१५

ततः पितुस् तद् वचनं नि-शम्य
प्रदक्षिणी-कृत्य च तं महाऽऽत्मा ।
चकार भर्तारम् अ-दीन-सत्त्वो
१४] रणाय वीरः प्रतिपन्न-बुद्धिः (?म्) ॥१४॥ [१६

ततस् तैस् तैर् गुणैर् इष्टैर् इन्द्र-जित् प्रति-पूजितः ।
N] युद्धोद्यम-कृतोत्साहः सं-ग्रामं प्रत्य्-अपद्यत ॥१५॥ [१७

श्री-मान् पद्म-पलाशाऽक्षः स रक्षोऽधि-पतेः सुतः ।
N] निर्-जगाम महा-वेगः समुद्र इव पर्वणि ॥१६॥ [१८

---

१. रा प्र थ म ल१ ल२—चै प्रसमीक्ष्य । २. फ—स्वमात्मनइव प्रसमीक्ष्य सत्त्वं । ३. प्र म ल१ ल२—कार्यं । ४. अ—मवलानु० । ५. आ—संनिकृष्टे । ६. फ—समीक्ष्य ममवलं । ७. फ—पराक्रमं । च रा प्र थ म ल१ ल२ प्रजाकृतं । ८. आ च रा प्र थ म ल१ ल२ अ—च । ९ आ—क्षत्रियस्य । १०. फ च रा प्र थ म अ—काम्यश्च । ल१ ल२—कस्यचित् । ११. आ—प्रदक्षिण रक्षसुतः प्रमाथान् । च अ—प्रदक्षिणं रक्षसुतः प्रभावः । १२. आ—तैः स्वैर । १३. आ—समपद्यत । १४. फ—नियुक्तो ? । अ—सुक्षुभे स । १५. फ—महाभागः । च प्र म ल१ ल२—०वेगः । १६. फ—पर्वसु ॥

स पक्षि-राजोत्तम-तुल्य-वेगैर्
[1]व्याघ्रैश् चतुर्भिः शित-तीक्ष्ण-दंष्ट्रैः ।
[2]रथं समा-युक्तम् असंग-वेगं
१५] समा-रुरोहेन्द्र-जिद् इन्द्र-कल्पः ॥१७॥ [१९

४४स.] स रथी धन्विनां श्रेष्ठः शूरः शस्त्र-भृतां वरः ।
१] रथेनाऽऽदित्य-वर्णेन तं वानरम् उपाऽद्र[3]वत् ॥१८॥ [२०
स तस्य रथ-निर्घोषं ज्या-स्वनं कार्मुकस्य [4]च ।
२] नि-शम्य तु हरि-श्रेष्ठः[5] संप्र-हृष्ट-तरोऽभवत् ॥१९॥ [२१
[6]महत् स [7]चापम् आ-दाय सित पीतांश् च सायकान् ।
N] हनूमन्तम् अभि-[8]प्लुत्य जगाम युधि वानरम् ॥२०॥ [२२

तस्मिंस् ततः संयुग-जात-हर्षे
रणाय निर्-गच्छति- बाण-पाणौ ।
दिशश् च सर्वाः कलुषी-र्बभूवुर्
N] मृगाश् च रौद्रं[9] बहु-धा वि-नेदुः ॥२१॥ [२३
समा-ययुस् तत्र तु[10] नाग-यक्षा
महर्षयश् चक्र-चराश् च सिद्धाः ।
ततः समा-स्त्य तु पक्षि-संघा
N] वि-नेदुर् उच्चैः परम-प्रहृष्टाः २२॥ [२४

आ-यान्तं स-रथं दृष्ट्वा शूरम् इन्द्र-जितं हरिः ।
३] ननाद च महा-नादं व्य्-अवर्धत [11]च वेग-वान् ॥२३॥ [२५

१. रा प्र ब म ल$_1$ ल$_2$–सिंहैश् । अ–व्याडैश् । २ आ–रथे ॥
३. फ–०पागमत् । च रा प्र म ल$_1$ ल$_2$ अ–०पाक्रमत् । ४. आ–तु। च–वत् ।
५. फ–हरिशार्दूलः । ६. ल$_1$ ल$_2$–स महच्चापम् । ७. फ–०द्रुत्य । ८. रा प्र ब म ल$_1$ ल$_2$–प्रदिशश्च नेदुः । अ–कलुषा ब० । ९. ल$_1$ ल$_2$ अ–रौद्रा ।
१०. फ रा प्र ब म ल$_1$ ल$_2$–च । ११. आ–स ॥

इन्द्र-जित् तु रथं दिव्यम् आ-स्थितश् चित्र-कार्मुकः ।
४] धनुर् वि-स्फारयामास तडित्-स्फूर्जित-निस्वनम् ॥२४॥ [२६

ततः समेताव् अति-तीक्ष्ण-वेगौ
महा-बलौ तौ रण-निर्विशंकौ ।
कपिश् च रक्षोऽधि-पतेश् च पुत्रः
५] सुराऽसुरेन्द्राव् इव बद्ध-वैरौ ॥२५॥ [२७

स तस्य वीरस्य महा-रथस्य
धनुष्-मतः सं-यति सम्-मतस्य ।
शर-प्रवेगं वि-तथं प्र-कुर्वंद्
६] चकार मार्गे पितुर् अ-प्रमेयः ॥२६॥ [२८

ततः शरान् आयत-तीक्ष्ण-शल्यान्
सु-पत्रिणः काञ्चन-चित्र-पुंखान् ।
मुमोच वीरः पर-वीर-हन्ता
N] समन्त-तो वज्र-निपात-वेगान् ॥२७॥ [२९

स तस्य तं स्यन्दन-निस्वनं च
मृदङ्ग-भेरी-पणव-प्रणादम् ।
नि-शम्य शब्दं पुनर् उत्-पपात
N] वि-कृष्यमाणस्य च कार्मुकस्य ॥२८॥ [३०

शराणाम् अन्तरेष्व् आशु न्य्-अवर्तत महा-कपिः ।
N] हरिस् तस्याऽति-वेगस्य मोहयंल् लक्ष(?क्ष्य)-संग्रहम् २९ [३१

शराणाम् अग्र-तस् तस्य पुनः समभि-वर्तत ।
७] प्र-सार्य हस्तौ मति-मान् उत्-पपाताऽनिलोपमः॥३०॥ [३२

---

१. आ-०स्वन: । २. घ रा प्र व म ल$_2$-नृद्द० । ३. आ-विपुलं च तत्र । ४. फ-०वेगान् । ५. फ च रा प्र द अ-त्त् । फ अ-०पटहस्वनं च । घ रा-०पटहप्रमाणम् । प्र म ल$_1$ ल$_2$-०पटह प्रणा० । ७ फ-अन्तरे ह्याशु । ८. फ-पुनरेवाभ्यव० । रा प्र व म ल$_1$ ल$_2$-पुनश्चैवाभ्यव० ॥

तावु उभौ वेग-सम्पन्नौ रण-कर्म्म-विशारदौ ।
८] सर्व-भूत-मनो-ग्राहि चक्रतुर् युद्धम् उत्तमम् ॥३१॥ [३३

हनूमतो वेद न राक्षसोऽन्तरं
न मारुतिस् तस्य महाऽऽत्मनोऽन्तरम् ।
परस्परं दुर्वि-षहौ बभूवतुः
९] . समा-गतौ मारुत-तुल्य-विक्रमौ ॥३२॥ [३४

ततः स लक्ष्ये प्रवि-हन्यमाने
शरेषु घोरेषु च सं-पतत्सु । [३५पू
जगाम चिन्तां महतीं महाऽऽत्मा- [३५[उ]
N] ऽवि-गाहयंस् तस्य कपेः प्र-वेगम् ॥३३॥ [N

स तं सम्-ईक्ष्याऽप्रति-वीर्य-वेगं
महा-कपिं मारुत-तुल्य-वेगम् ।
मतिं चकाराऽऽशु ततो महाऽऽत्मा [N
N] समाधि-संयोग-समाहिताऽऽत्मा ॥३४॥ [३५[उ]

दिव्याऽस्त्र-योगेन वि-नाशनाय
N] यदा न मृत्युर् जनितोऽस्य तेन । [N
तदा मतिं राक्षस-राज-सूनुश्
चकार तस्मिन् हरि-वीर-मुख्ये ।
अ-वध्यतां तस्य कपेः सम्-ईक्ष्य
१०] कथं नु कुर्याद्(ऽम)इति नि-ग्रहांऽर्थम् ३५ [३६

ततः पैतामहं वीरः सोऽस्त्रम् अस्त्र-विदां वरः ।
N] सं-दधे सुमहा-तेजास् तं हरि-प्रवरंप्रति ॥३६॥ [३७

---

१. फ–सर्वरूपम० । २. म ल$_1$ ल$_2$ अ–निर्विषयौ । ३. रा प्र ब म ल$_1$ ल$_2$–समेत्य तौ । ४. च–०मीमवि० । ५. आ–लक्षे । ६. आ प्र ब म ल$_1$ ल$_2$–प्रतिह० । ७. आ–०वीर्यवेगं । ८. फ अ–नास्ति । ९. फ अ–ततो । १०. फ–नियच्छेयमितिम० । ११. आ–स्म म० ॥

अ-वध्यं सर्व-भूतानां तद् अस्त्रं न बबन्ध तम् ।

N] अस्त्रं तद् वि-तथं दृष्ट्वा स जगर्ह पिता-महम् ॥३७॥ [N

अथाऽऽगस ततो ब्रह्मा मारुताऽऽत्म-जम् अब्रवीत् ।

माऽनृतं मद् वचः कार्षीर् ग्रहणं गच्छ वानर ।

N] एवम् उक्तोऽथ हनुमांल् लक्ष(?क्ष्य)-भूतः स्थितो गतः ३८ [N

अ-वध्योऽयम् इति ज्ञात्वा शस्त्रेणाऽस्त्र-शास्त्र-वित् ।

N] बबन्ध युधि वि-क्रान्तं मारुताऽऽत्म-जम् इन्द्र-जित् ॥३९॥ [३८

स ततो ब्रह्मणोऽस्त्रेण बद्धः कपि-वराऽऽत्म-जः ।

११] अभवन् निर्वि-चेष्टश् च पपात धरणी-तले ॥४०॥ [३९

ततस् तु वि-ज्ञाय महाऽस्त्र-बन्धं

प्रभोः प्र-भावाद् वि-गतोग्र-वेगः ।

पिता-महाऽनु-ग्रहम् आत्मनश् च

N] वि-चिन्तयामास हरि-प्रवीरः ॥४१॥ [४०

ततः स्वायंभुवैर् मन्त्रैर् ब्रह्माऽस्त्र-प्रतियन्त्रितः ।

N] हनुमांश् चिन्तयामास वर-दानं पिता-महात् ॥४२॥ [४१

न मेऽस्य बन्धस्य नै शक्तिर् अस्ति

वि-मोक्षणे लोक-गुरोः प्रसादात् ।

अवश्यम् एवं वि-हितस् तु मन्त्रो

N] मयाऽऽत्म-योनेर् अनु-वर्तितव्यः ॥४३॥ [४२

सं वीर्यम् अस्त्रस्य कपिर् विचार्य

तथाऽऽत्म-शक्तिं परि-चिन्त्य धीरः ।

पिता-महाऽनु-ग्रहम् आत्मनश् च

---

१. फ च रा प्र व ल$_1$ ल$_2$ अ-नास्ति । २. म-एवमुक्तस्तथेत्युक्त्वा । ३. फ अ-तमस्त्रेणास्त्र० । घ रा प्र व म ल$_1$ ल$_2$-तमस्त्रेणास्त्रशस्त्रभृत् । ४. फ-विक्रान्तो । ५. आ-०चेष्टस्तु । ६. आ-बद्धं । ७. आ-विगतप्रयोगः । घ प्र-विगतः प्रयोगः । ८. आ-०मन्त्रितैः । ९. आ-च । १०. ल$_1$-वीर्यं स मन्यत । ११. स-विदित्वा । १२. आ-पितामहाज्ञामनुवर्तते स्म ।

N] पिता-महाऽऽज्ञाम् अनु-वर्तते स्म ॥४४॥ [४३
अस्त्रेण चाऽपि बद्धस्य भयं मम न जायते ।
N] पितामह-महेन्द्राभ्यां रक्षितस्याऽनिलेन च ॥४५॥ [४४
ग्रहणं चाऽपि रक्षोभिर् महन् मे गुण-दर्शनम् ।
N] राक्षसेन्द्रेण सं-वादस् तस्माद् गृह्णन्तु मां परे ॥४६॥ [४५
स निश्चिताऽर्थः पर-वीर-हन्ता
समीक्ष्य-कारी विनिवृत्त-चेष्टः ।
पैरैः प्र-सह्योऽभि-गतैर् नि-गृह्य
N] बभूव तैस् तैः परि-भर्त्स्यमानः ॥४७॥ [४६
ततस् तु ब्रह्मणोऽस्त्रेण स बद्धो वानरर्षभः ।
११] अभवन् निर्वि-चेष्टश् च वि-षण्णश् चैव लज्जया ॥४८॥ [N
तथा तं राक्षसा दृष्ट्वा निर्वि-चेष्टम् अरिं-दमम् ।
१२] बबन्धुः पाश-बन्धैश् च द्रुम-चीरैश् च मारुतिम् ॥४९॥ [४७
स रोचयामास पुनः स्व-बन्धं
प्र-सह्य वीरैर् अभिनिर्-गृहीतः ।
कौतूहलान् मां युधि राक्षसेन्द्रो
N] द्रष्टुं व्यव-स्येद् इति निर्वि-चेष्टः ॥५०॥ [४८
स बद्धस् तेन बन्धेन वि-मुक्तोऽस्त्रेण वीर्य-वान् ।
N] अस्त्र-बन्धो हि सामान्यं न बन्धम् अनु-वर्तते ॥५१॥ [४९

---

१. ल१—न मम विद्यते । म ल२—मम न विद्यते । २. आ—माहात्म्ये गुण उत्तमः । च—माहात्म्यैर्गुणवत्तरम् । रा प्र व म ल१ ल२—मामेभिर्गुणवत्तरम् । ३. आ—परः । ४. च—प्रसस्ताभि० । रा प्र व—प्रशस्ताभि० । म ल१ ल२—प्रशस्ताभि० । ५. आ—निर्विचेष्टाभिर्विष० । ६. रा म—तं तथा । ल१ ल२—ततः तं । ७. आ—रोपया० । फ—रोधया० । च रा प्र व म ल१ ल२—रोपया० । ८. आ—पुनश्च बद्धं । च—पुनः स्वबंधनं । ९. आ—धीरैर् ॥

अथेन्द्र-जित् तं द्रुम-चीर-बद्धं
  सम्-ईक्ष्य वीरः कपि-राज-मुख्यम् ।
वि-मुक्तम् अस्त्रेण जगाम चिन्तां
N] न चन्यम् अन्यं ह्य् अनु-वर्ततेऽस्त्रम् ॥५२॥ [५०

अहो महत् कर्म कृतं निर्-अर्थं
  न राक्षसैर् मन्त्र-कृतिर् हि शक्या ।
पुनश् च नाऽस्त्रे प्र-हतेऽस्त्रम् अन्यत्
१४] प्र-वर्तते सं-यति तत् खलु स्मं ॥५३॥ [५१

अस्त्र-बन्ध-विमोक्षं तु हनुमान् नाऽव-बुध्यत ।
१५] कृष्यमाणो हि रक्षोभिस् तैश् च बन्धैर् नि-पीडितः ॥५४॥ [५२

हन्यमानस् तु तैः[11] क्रूरै राक्षसैः काष्ठ-मुष्टिभिः ।
१२] समीपं राक्षसेन्द्रस्य समा-कृष्यत वानरः ॥५५॥ [५३

अथेन्द्र-जित् तं प्रसम्-ईक्ष्य मुक्तं
  शस्त्रेण बद्धं द्रुम-चीर-बन्धैः ।
व्य्-अदर्शयत् तत्र महा-बलं तं[15]
N] हरि-प्रवीरं स-गणाय राज्ञे ॥५६॥ [५४

तं मत्तम् इव मातंगं बद्धं [16]कपि-वरोत्तमम् ।

---

१. आ–विचार्य । २. फ–अन्यस्तु० । ३. आ–निरर्थकं । ४. आ–०प्रहृतेन । च–राक्षसैश्च कृ० । ५. च–शक्यः । ६. रा प्र व म ल$_1$ ल$_2$–राक्षसैर्हतमन्यदस्त्रम् । ७. रा प्र व म ल$_1$ ल$_2$–स्म नः । ८. च–०बन्धं वि० । ९. रा प्र व म ल$_1$ ल$_2$ अ–च । १०. रा प्र व म ल$_1$–नान्व० । ल$_2$–०बुध्यते । ११. आ ल$_1$ अ–ततः । १२. ल$_1$ ल$_2$ अ–कामरूपिभिः । १३. फ–प्राकृष्यत स ॥ अ–प्राकृष्यत च । १४. अ–०मुष्टैः । १५. अ–०र्शयत्तत्र म० । आ–०यन् महाबलं तं । १६. म ल$_1$ ल$_2$–हरिव० ।

N] राक्षसा राक्षसेन्द्राय रावणाय न्य्-अवेदयन् ॥५७॥ [५५
कोऽयं कस्य कथं वाऽपि किं-कार्यः किं-व्यपाऽऽश्रयः ।
इति राक्षस-वृद्धानां तेषां सं-जज्ञिरे कथाः ॥५८॥ [५६
हन्यतां दह्यतां वाऽपि भक्ष्यताम् इति चाऽपरे ।
N] राक्षसास् तत्र सं-क्रुद्धाः परस्परम् अथाऽब्रुवन् ॥५९॥ [५७
स हन्यमानो बहुभिश् च तत्र
समू-एत्य रक्षोऽधिप-पाद-मूलम् ।
ददर्श राज्ञः पर-वीर-हन्तुर्
N] गृहं महा-रत्न-परिच्छदं नवं ॥६०॥ [५८
तं ददर्श महा-तेजा रावणः कपि-सत्तमम् ।
N] रक्षोभिर् वि-कृताऽऽकारैः कृष्यमाणं ततस्-ततः ॥६१॥ [५९
राक्षसाऽधिपतिः क्रुद्धो ददर्श कपि-कुञ्जरम् ।
N] तेजो-बल-समायुक्तं तपन्तम् इव भास्-करम् ॥६२॥ [६०
स रोष-संवर्द्धित-ताम्र-दृष्टिर्
दशाऽऽननस् तं कपिम् अन्व्-अवैक्षत ।
अथोप-विष्टान् कुल-शील-वृद्धान्
२०] समा-दिशत् तं प्रति मन्त्रि-मुख्यान् ॥६३॥ [६१
यथा-क्रमं तैः[10] स कपिर् हि पृष्टः [६२[a]
यथा-क्रमेणैव कपिर् हि दृष्टः । [N

१. फ–न्यदर्शयन् । २. फ अ–कुतो । ३. च–चापि ॥ ४. फ-हन्यतां कापि । रा ब म ल₁–हन्यतां चापि । प्र ल₂–हन्यतां वा० । ५. फ अ–०पपार्श्वमूले । ६. आ–च्छदन्तम् । रा–छिदन्तम् । च प्र–०छिदन्नत् । अ–०छदं च । ७. फ–तेजोवर्ण० । ८. फ रा प्र ब म ल₂–०संवर्त्तितता० । अ–संवर्त्तितवाम० । ९. अ–अन्ववेक्ष्यत । १०. फ–संप्रति मन्त्रिमख्यैः । रा प्र ब म ल₁ ल₂–तैर्हि कपिः स पृष्टः ।

सर्वैः स प्रष्टम् तु विसृष्ट-कार्यैः

N] कार्याऽर्थम् अर्थस्य च मूलम् आदौ । [६२

नि-वेदयामास कपीऽऽश्वरस्य

२१उ] दूतः सकाशाद् अहम् आ-गतोऽस्मि ॥६४॥ [६२उ

इत्यार्षे रामायणे सुन्दरे-काण्डे इन्द्रजिद्-युद्धे हनुमद्-ग्रहणं
नाम चतुश्चत्वारिंशः सर्गः ॥४४॥

---

१. फ-एव । २. रा अ-नास्ति । ३. फ च रा प्र ब म $ल_1$ $ल_2$-नास्ति ॥

ततस् तु कर्मणा तस्य वि[2]-स्मितं भीम-विक्रमम् ।
१.] हनुमान् रोष-ताम्राऽक्षं रक्षोऽधिपम् अवैक्षत ॥१॥ [१
भ्राज-मानं महाऽर्हेण काञ्चनेन वि-राजता ।
२] मुक्ता-जालाऽऽवृताऽन्तेन मुकुटेन महा-द्युतिम् ॥२॥ [२
वज्र-संयोग-संयुक्तैर् महाऽर्ह-मणि-विग्रहैः ।
३] हैमैर् आ-भरणैश् चित्रैर् मानसैर् उप-शोभितम् ॥३॥ [३
४पू] महाऽर्ह-क्षौम-संवीतं रक्त-चन्दन-भूषितम् । [४पू
N] पूर्ण-चन्द्राऽशु-वर्णेन हारेणाऽतिवि-राजितम् ॥४॥
४उ] अनु-लिप्तं वि-चित्राभिर् वि-विधाभिश् च भक्तिभिः । [N
वि-पुलैर् दर्शनीयैश् च रक्ताऽक्षैर् भीम-दर्शनैः ॥५॥
५] दीप्त-तीक्ष्ण-महा-दंष्ट्रैः प्रलम्ब-दशन-च्छदैः । [५
शिरोभिर् दशभिर् भीमं भ्राज-मानं महौजसम् ।
६] नाना-व्याल-मृगाऽऽकीर्णैः शिखरैर् इव मन्दरम् ॥६॥ [६
नीलाऽञ्जन-चय-प्रख्यं हारेणोरसि राजितम् ।
N] पूर्ण-चन्द्रांऽशु-वर्णेन तडिद्-वन्तम् इवाऽम्बु-दम् ॥७॥ [७
बाहुभिर् बद्ध-केयूरैश् चन्दनोत्तम-भूषितैः ।
७] भ्राज-मानं शुभैः पीनैः पञ्च-शीर्षैर् इवोर-गैः ॥८॥ [८

---

१. आ फ—तैः कर्मभिस्तस्य । च रा—कर्मणास्तस्य । २. आ—विस्मितो भीमकर्मणः । फ—विस्मितो भीमविक्रमः । ३. फ—॰ताम्राक्षो । ४. रा प्र ब म ल$_1$ ल$_2$—कवचेन । ५. फ—महौजसा । रा—महामतिम् । ६. फ अ—हारेणाभिवि॰ । च रा प्र व म ल$_1$ ल$_2$—हारेणोरसि राजता । ७ रा प्र व ल$_1$ ल$_2$—भणुभिः सुवि॰ । ८. आ—॰निःस्वनैः । च प्र ब म ल$_1$—॰विक्रमैः । ९. फ—भोमैः । १०. च रा—॰व्याडमृगा॰ । फ—॰गाकीर्णैः । ११. आ—राजता । १२. आ—सबलाकम् । १३. अ—सुवर्णभैः ॥

महति स्फाटिके चित्रे रत्न-संयोग-संस्कृते ।
८] उत्तमाऽऽस्तरणाऽऽस्तीर्णे सूऽपं-विष्टं वराऽऽसने ॥९॥ [९
अलंकृताभिर् अत्य्-अर्थं प्र-मदाभिः समन्त-तः ।
९] वाल-व्यजन-हस्ताभिस् ताभिः सम्-अभि-वीजितम् ॥१०॥ [१०
१०पू] दुर्-धरेण प्र-हस्तेन महा-पार्श्वेन रक्षसा ।
१२पू] मन्त्रिभिर् मन्त्र-तत्त्व-ज्ञैर् नि-कुम्भेन च मन्त्रिणा ॥११ [११
उपाऽऽस्य-मानं रक्षोभिश् चतुर्भिर् बल-दर्पितैः ।
११] कृत्स्नं परि-वृतं लोकं चतुर्भिर् इव सागरैः ॥१२॥ [१२
N] ताभ्यां मन्त्राऽर्थ-विद्भ्यां च सारणेन शुकेन च ।
१२उ] उपाऽऽस्य-मानं सचिवैः सुरैर् इव सुरेश्वरम् ॥१३॥ [१३
अपश्यद् राक्षस-पतिं हनुमान् अ-मितौजसम् ।
१३] वेष्टितं[13] मेरु[14]-शिखरैः स-तोयम् इव तोय-दम् ॥१४॥ [१४
बन्धनैः पीड्य-मानोऽपि रक्षोभिर् भीम-विक्रमः ।
१४] वि-स्मयं परमं गत्वा रक्षोऽभि-पम् अवैक्षत ॥१५॥ [१५
भ्राज-मानं ततो दृष्ट्वा हनुमान् राक्षसेश्वरम् ।
१५] मनसा चिन्तयामास तेजसा तस्य वि[16]-स्मितः ॥१६॥ [१६

---

१. च रा प्र व म ल$_1$ ल$_2$—०चित्रिते । २. फ च रा प्र व ल$_1$ ल$_2$ श्र—उपविष्टं । ३. च रा प्र व म ल$_1$ ल$_2$ श्र—०हस्ताभिः स्त्रीभिः । ४. रा श्र—समुपसेवितम् । ५. च रा प्र व म ल$_1$ ल$_2$ श्र—उपोपविष्टं । ६. च रा प्र व म ल$_1$ ल$_2$—भीमविक्रमैः । फ श्र—बलदर्पितम् । ७. श्रा फ—कृत्स्नः । ८. श्रा—लोकः । ९. रा प्र श म ल$_2$—सुमन्त्रविद्भ्यां । ल$_1$—स मन्त्रविद्भ्यां । १०. रा प्र व म ल$_1$ ल$_2$—समेतं शकुनेन । ११. च रा प्र च म ल$_1$ ल$_2$—नात्मसामान्यस० । श्र—अन्वेष्यमाणं स० । १२. च रा प्र व म ल$_1$ ल$_2$—अतितेजसम् । १३. श्रा—धिष्ठितं । १४. श्रा—०शिखरे । १५. च रा प्र च म ल$_1$ ल$_2$— ०कर्मभिः । १६. रा प्र व म ल$_1$ ल$_2$—मोहितः ॥

अहो वीर्यम् अहो सत्त्वम् अहो रूपम् अहो बलम्।[1]
१६] अहो राक्षस-राजस्य सर्व-[2]लक्षण-सम्पदः ॥१७॥ [१७
यदि नाऽधर्म-बहुलः स्याद् अयं राक्षसेश्वरः ।
१७] स्याद् अयं स्वर्ग-लोकस्य[3] स-शक्रस्याऽपि[4] रक्षिता ॥१८॥ [१८
तेन खल्व् अस्य वि-भ्रान्ता देवाश् चाऽसुर-मानवाः।[5]
१८] [6]अयं ह्य् उत्-सहते [7]क्रुद्धः कर्तुम् एकाऽयनं जगत्॥१९॥ [१९
[10]इति चिन्तां बहु-विधां चकार [11]हनुमांस् [9]तदा ।
१९] दृष्ट्वा राक्षस-राजस्य प्र-भावम् अ-मितौजसः । [२०
N] गाम्भीर्यं च श्रियं चैव मनसा च वि[8]-सिस्मि(?ष्मि)ये॥२० [N

इत्यार्षे रामायणे सुन्दर-काण्डे रावण-दर्शनं
नाम पंचचत्वारिंशः सर्गः ॥ ४५ ॥

---

१. रा प्र व म ल१ ल२—अहो रूपमहो वीर्यमहो सत्त्वमहो बलम्। २. अ—०लक्षण०। ३. फ च प्र व म ल१ ल२ अ—सुरलोकस्य। ४. फ च प्र व म ल१ ल२—०पि हि रक्षिता। अ—०पि च रक्षिता। ५. फ—तेन खल्वस्य विभिदुर्देवाः सासुरमानुषाः। च रा प्र व म ल१ ल२—तेन खल्वस्य विभिदुर्लोकाः ससुरदानवाः। अ—बिभेत्यस्माद्धि वीराद्धि लोकः ससुरदानवः। ६. रा प्र व म ल१ ल२ अ—अयमुत्सहते वीरः। ७. फ—हनुमत्कपिः। ८. च रा प्र व म ल१ ल२—विस्मयं गतः। ९. फ—नास्ति। १०. अ—इति। ११. रा प्र व म ल२—हनुमद्दर्शनं ॥

तम् उद्-ईक्ष्य महा-बाहुः पिंगाऽक्षं पुर-तः स्थितम् ।
१] रोषेण महताऽऽविष्टो रावणः शत्रु-रावणः ॥१॥ [१
स राजा रोष-ताम्राऽक्षः प्र-हस्तं रक्षसां वरम् ।
२] काल-युक्तम् उवाचेदं वचो विपुल-विक्रमः ॥२॥ [४
दुर्-आत्मा पृच्छ्यताम् एष कुतस् त्वं किं वा प्र-योजनम् ।
३] वनं भग्नं किम्-अर्थं च राक्षसानां च तर्जनम् ॥३॥ [५
रावणस्य वचः श्रुत्वा प्र-हस्तो वाक्यम् अब्रवीत् ।
४] समा-श्वसिहि भद्रं ते न भीः कार्या कपे त्वया ॥४॥ [७
यदि वा त्वं महेन्द्रेण प्रेषितो रावणाऽऽलयम् ।
५] तत्त्वम् आ-ख्याहि मा ते भूद् भयं वानर-संत्तम ॥५॥ [८
यदि वैश्रवणस्य त्वं यमस्य वरुणस्य वा ।
६] चारु रूपम् इदं कृत्वा प्र-विष्टो नगरीम् इमाम् ॥६॥
विष्णुना प्रेषितो वाऽपि लङ्का-विजय-कांक्षिणा । [९
७] न हि ते वानरं तेजो रूप-मात्रं तु वानरम् ॥७॥[17]
सत्यं त्वं कथय क्षिप्रं ततो वानर मोक्ष्यसे ।[18] [१०
८] अ-नृतं वदतस् त्व् अद्य दुर्-लभं तव जीवितम् ॥८॥

---

१. च रा प्र व म ल$_{1}$ ल$_{2}$–रावणो लोकरा० । २. अ–रक्षसोऽब्रवीत् । ३. प्र–विक्रमवि० । ४. अ–नास्ति । ५. फ प रा च–दुरात्मा । ६. फ–किमर्थस्य । आ–कस्त्वं वा किं । ७. आ–वनभङ्गं । फ–वनभङ्गः । ८. फ–किमर्थोयं । ९. फ–त्वया कपे । १०. फ–वावरत्वमिन्द्रेण । ११. फ–तेऽस्तु । अ–भूते । १२. फ–वानर मोक्ष्यसे । १३. आ–च । १४. आ–रूपं तु । १५. आ–लङ्कां वि० । १६. आ–रूपं मात्रं । १७. स–नास्ति । १८. अ–मोक्षसे । १९. फ प रा प्र च म ल$_{1}$ ल$_{2}$ अ–वदतो ह्यद्य । २०. अ–जीवनम् ॥

अथ-वा यन्-निमित्तं ते प्र-वेशो रावणाऽऽलये । [११
९] तद् एव कथय क्षिप्रं बहुना किं प्र-योजनम् ॥९॥ [N
१०पू] एवम् उक्तो हरि-वरस् तं राक्षस-गणेश्वरम् ।
११उ] अब्रवीन् नाऽस्मि शक्रस्य यमस्य वरुणस्य वा ॥१०॥ [१२
धन-देन न मे सख्यं विष्णुना नाऽस्मि चोदितः ।
१२] जातिर् एव ममैषा हि वानरोऽहम् इहाऽऽगतः ॥११॥ [१३
दर्शने राक्षसेन्द्रस्य दुर्-लभे सति येन मया ।
१३] वनं राक्षस-राजस्य दर्शनाऽर्थे वि-नाशितम् ॥१२॥ [१४
ततस् ते राक्षसाः प्राऽऽप्ता बलिनो युद्ध-काङ्क्षिणः ।
१४] रक्षणाऽर्थं तु देहस्य योधितास् ते मया रणे ॥१३॥ [१५
अस्त्र-पाशैर् न शक्योऽहं बद्धुम् अत्य्-आयतैर् अपि ।
१५] पिता-महाद् एव वरो मम ह्य् एष उपाऽऽगतः ।[17] [१६
राजानं द्रष्टु-कामेन मयाऽस्त्रं न नि-वारितम् ॥१४॥
१६] विमु-युक्तो महाऽस्त्रेण रक्षोभिः परि-पीडितः । [१७
दूतोऽहम् इह संप्राऽऽप्तो राघवस्याऽति-तेजसः ॥१५॥ [१८उ

---

१. फ-राक्षसालये । प्र-रावणालयं ॥ २. अ-हरिवरो राक्षसानां ग० । ३. ब्रा-च । ४. च-धनदस्य । ५. फ रा-चोदितः । ६. ल$_1$ ल$_2$-एवं । ७. अ-दर्शने । ८. अ-दुर्लभे चापि । ९. फ-तन् । १०. रा-नास्ति । ११. फ-हि राक्षसेन्द्रस्य । रा प्र घ म ल$_1$ ल$_2$-च राक्षसेन्द्रस्य । १२. रा प्र घ म ल$_1$ ल$_2$-दर्शनाय । १३. फ-ततश्च । १४. रा प्र घ म ल$_1$ ल$_2$-०दुर्मदाः । १५. फ-अप्यायतैर् । १६. फ-मया पुरा लब्धो वरो महान् । अ-ह्येवमुपागतः । १७. रा प्र घ ल$_1$ ल$_1$-नास्ति । १८. फ-निवर्तितम् । १९. ब्रा रा घ म ल$_1$ ल$_2$-विमुक्तो । फ-विमुक्तोहमस्त्रेण । २०. रा घ म ल$_1$ ल$_2$-रक्षोभिरतिपीडितः । प्र अ-रक्षोभिरभिपीडितः । २१. रा-इति । २२. फ अ-राघवस्यामितौजसः । ल$_2$-राघवस्य महात्मनः ॥

१८] श्रूयतां चाऽपि वचनं मम तथ्यम् इदं नृपं[1] । [१९
N] रामो यद् आह धर्माऽऽत्मा स च राजा महा-रैथः[2] ॥[3]१६॥ [N

इत्यार्षे रामायणे सुन्दर-काण्डे हनुमद्-वाक्यं
नाम षट्चत्वारिंशः सर्गः ॥[4]४६॥

---

१. फ अ–त्वया । २. घ रा च म $ल_1$ $ल_2$ अ–हरीश्वरः ।
३ फ–नास्ति ॥ ४. फ अ–सर्गसमाप्तिर्नास्ति ॥

[वं—४७]= [ सप्तचत्वारिंशः सर्गः ] =[दा—५१]

तं सम्-ईक्ष्य महा-सत्त्वं सत्त्व-वान् हरि-पुंगवः ।
१] वाक्यम् अर्थ-वद् अ-व्यग्रम् उवाच पवनाऽऽत्म-जः ॥१॥ [१

अहं सुग्रीव-सन्देशाद् इह प्राऽऽप्तस् तवाऽऽलयम् ।
२] राक्षसेश हरीऽऽशस् त्वाम् इदं कौशल्यम् अब्रवीत् ॥२॥ [२

राज्ञः शृणु समा-देशं सु-ग्रीवस्य महाऽऽत्मनः ।
३] धर्माऽर्थाय हितं चैव इह चाऽमुत्र च क्षमम् ॥३॥ [३

राजा दशरथो नाम रथ-कुञ्जर-वाजि-मान् ।
४] पितेव बन्धुर लोकानां सुरेश्वर-सम-द्युतिः ॥४॥ [४

ज्येष्ठस् तस्य महा-बाहुः पुत्रः प्रीति-करः प्रभुः ।
५] पितुर् नि-देशान् निष्-क्रान्तः प्र-विष्टो दण्डकं वनम् ॥५[५

लक्ष्मणेन समं भ्रात्रा सीतया वाऽपि भार्यया ।
६] महर्षिभिर् अनु-क्रान्तं धर्म्यं पन्थानम् आ-स्थितः ॥६॥ [६

तस्य भार्या वने नष्टा सीता नाम यशस्-विनी ।
७] वैदेहस्य सुता राज्ञो जनकस्य महाऽऽत्मनः ॥७॥ [७

---

१. फ च रा प्र ब म ल$_1$ ल$_2$—सत्त्ववान् । २. च प्र ब ल$_1$ ल$_2$—वाक्यं यथावद् । ३. रा प्र ब ल$_1$—त्वां कुशलं परिपृच्छति । अ—त्वां भ्राता कौ० । ४. ल$_2$—नास्ति । ५. अ—भ्रातुः । ६. आ—ममादेशं । ७. फ अ—धर्मार्थोपहितं युक्तमिह । रा प्र ब म ल$_1$ ल$_2$—धर्मार्थयोर्हितं । ८. आ—०जिनाम् । ९. आ—पितुः । १०. च—नियोगात्सं-प्राप्तः । रा प्र ब म ल$_1$ ल$_2$—नियोगं संप्राप्य । अ—निदेशनियतः । ११. रा प्र ब म ल$_1$ ल$_2$ अ—सह । १२. रा प्र ब म ल$_1$ ल$_2$—सह । अ—चापि । १३. आ—०धर्मपन्था० । रा—धर्मपन्थानमाश्रितः । अ—०समाश्रितः । १४. फ अ—मनस्विनी । १५. आ—सुग्रीवेण च संगतः ॥

स मार्ग-माणस् तां देवीं राज-पुत्रः सहाऽनु-जः ।
८] ऋश्यमूकं च संप्राऽऽप्तः सु-ग्रीवेण च सं-गतः ॥८॥[२] [८
तस्य तेन प्रति-ज्ञातं सीतायाः परि-मार्गणम् ।
९] सु-ग्रीवस्य च रामेण हरि-राज्यं प्रति-श्रुतम् ॥९॥ [९
ततस् तेन वने हत्वा राज-पुत्रेण वालिनम् ।
१०] सु-ग्रीवः प्राऽऽपितो राज्यं हर्यृ-ऋक्ष-प्लवगाऽधि-पः॥१०[१०
स सीता-मार्गणे व्यग्रः सु-ग्रीवः सत्य-संगरः ।
११] हरीन् सं-प्रेषयामास दिशः सर्वा हरीऽऽश्वरः ॥११॥ [१२
तां हरीणां सहस्राणि प्र-युतान्य् अर्बुदानि च ।
१२] दिक्षु सर्वासु मार्गन्ते ह्य् अधश् चोपरि चाऽम्बरे ॥ १२॥ [१३
वैनतेय-समाः केचित केचित् तत्राऽनिलोपमाः ।
१३] अ-संग-गतयश् चाऽन्ये महा-काया महा-जवाः॥१३॥ [१४
अहं तु हनुमान् नाम मारुतस्यौरसः सुतः ।
१४] सीतायाः कारणात् तूर्णं योजनानां शतं प्लुतः ॥१४॥ [१५
तद् भवान् दृष्ट-तत्त्वाऽर्थः तपः-कृत-परिश्रमः ।
१५] पर-दारान् महा-प्राज्ञ नोप-रोद्धुं त्वम् अर्हसि ॥१५॥ [१६
न हि धर्म-विरुद्धेषु बह्व्-अपायेषु कर्मसु ।
१७] मूल-घातिषु सज्जन्ते बुद्धि-मन्तो भवद्-विधाः ॥१६॥ [१८

---

१. प रा प्र घ म ल$_1$,ल$_2$ अ–राजपुत्री । २ प अ–ऋष्यमूकमनुप्राप्तः । रा प्र घ म ल$_1$,ल$_2$–ऋष्यमूकं गिरिं प्राप्तः । ३. श्रा–नास्ति । ४. श्रा–रणे । ५. फ म घ–स्थापितो राज्ये ॥ ६. रा–प्रविसं० । ७. प्र म ल$_1$–सुग्रीवस्या-भ्यनुज्ञया । ल$_2$–सुग्रीवस्याभ्यनुग्रहाः । ८. रा व नास्ति । ९. म–०यः केचिद्धरिवीराः । १०. रा प्र व ल$_1$ ल$_2$ नास्ति । ११. ल$_2$–नास्ति । १२. श्रा–०रिग्रहः । १३. म–०द्धुमिहार्हेवि । रा ल$_1$ ल$_2$–समर्हसि । प्र व–समर्हति ॥

केश् च लक्ष्मण-मुक्तानां शराणां नत-पर्वणाम् ।
१८] दीप्तानाम् अग्र-तः स्थातुं शक्तो देवाऽसुरेष्व् अपि ॥१७ [१९
न चाऽपि त्रिषु लोकेषु राजन् विद्येत कश्चन ।
१९] राघवस्य व्य्-अलीकं चं कृत्वा यः सुखम् आप्नुयात् ॥१८[२०
त्वं तु काल-हितं वाक्यं धर्म्यम् अर्थाऽनु-पालितम् ।
२०] मन्यस्व नर-देवाय जानकी प्रति-दीयताम् ॥१९॥ [२१
दृष्टा हीऽयं मया देवी लब्धं यद् इह दुष्-करम् ।
२१] उत्तरं कर्म यच् छेषं निमित्तं तत्र राघवः ॥२०॥ [२२
लक्षितेयं च वि-जने मया शोक-परायणा ।
२२] गृहीतां किं न जानासि पश्चाऽऽस्याम् इव भोगिनीम् २१ [२३
नेयं जरयितुं शक्या साऽसुरैर् अमरैर् अपि ।
२३] विष-संपृक्तम् अत्य्-अर्थं भुक्तम् अन्नम् इवौजसा ॥२२ [२४
अप-कुर्वन् हि रामस्य साक्षाद् अपि पुरं-दरः ।
२४] न सुखं माऽऽप्नुयाद् राजन् किं पुनस् त्वद्-विधो जनः २३ [२४
यां सीतेत्य् अभि-जानासि सेयं तिष्ठति रूपिणी ।
२५] काल-रात्रीऽति तां विद्धि सर्व-लंका-निवासिनाम् ॥२४ [२५
तपः-संतान-लब्धस् ते योऽयम् ऋद्धि-परिच्छदः ।
२७] न स नाशयितुं न्याय्य आत्म-त्राण-परिच्छदः ॥२५ [२५

---

१. फ–कश्चिल्लक्ष्मण॰ । २. फ–बाणानां । ३. फ–यः कृत्वा सुखमवाप्नुयात् । ४. आ–त्वं । ५. रा–जानकीं प्रतिवेदय । ६. आ–दृष्ट्वा । ७. आ–ष्ट्रेयः । ८. ल$_1$–गृहीत्वा । ९. ल$_1$–पन्नगीम् । १०. अ–॰संस्पृष्टम् । ११. आ–एव । १२. प्र–त्वां सर्पमिव मन्दिरे । ल$_1$–॰ति तेऽमतः । १३. अ–कालरात्रिं हि । १४. च रा प्र व ल$_1$ ल$_2$–॰संचयल॰ । १५. आ–परिछन्दः । १६. रा व म ल$_1$ल$_2$–सन्त्यसमापयितुं । प्र–सन्त्यासयितुं । १७. आ–न्याय्यम् । १८. फ– ॰परिग्रहः ॥

अ-वध्यतां तपो-वीर्याद् भवता यदि मन्यते ।
२८] आत्मनश् चाऽसुरैर् देवैर् हेतुस् तत्राऽप्य् अयं महान् २६ [२६
स हि रामः स-सुग्रीवो नैवं देवो नं पन्नगः ।
N] नाऽसुरो नैवं गन्धर्वो न यक्षो नैवं किन्नरः ॥२७॥ [२७
N] मानुषो राघवो राजन्ं सु-ग्रीवश् चं हरीऽऽश्वरः ।
ताभ्यां प्राण-परित्राणं कथं राजन् करिष्यसि ॥२८॥ [२८
३०] न चं धर्मोऽपि सं-हार्यो ह्य् अ-धर्म-फल-संयुतः ।
स एव फलम् अभ्येति धर्मो नाऽधर्म-नाशनः ॥२९॥ [२९
३१] प्राऽऽप्तं धर्म-फलं तावद् भवता नाऽत्र सं-शयः ।
फलम् अस्याऽप्य् अ-धर्मस्य क्षिप्रम् एवोप-भोक्ष्यसे ॥३०॥[३०
३२] जन-स्थानं-वधं बुद्ध्वा वालिनश् चौऽपि सं-क्षयम् ।
राम-सुग्रीव-सख्यं चं बुध्यस्वं हितम् आत्मनः ॥३१॥ [३१
३३] कामं खल्व् अहम् अप्य् एकः स-वाजि-रथ-कुंजराम् ।
लंकां नाशयितुं शक्तस् तस्यैष तुं विनिश्-चयः ॥३२॥[३२
३४] रामेण हि प्रति-ज्ञातं हर्य्-ऋक्ष-कपि-सन्निधौ ।
उत्-सादनम् अ-मित्राणां क्षिप्रं तत्र् चं करिष्यति ॥३३॥[३३
३५] तद् अलं काल-पाशेन सीता-विग्रह-रूपिणा ।
३६पू] स्वयं स्कन्धेऽव-सक्तेन क्षेमम् आ-लोकयाऽऽत्मनंः ॥३४॥[३६

---

१. म०प्यतां । २. रा प्र व ल$_1$ ल$_2$—नास्ति । ३. ल$_1$ ल$_2$—न देवो न च । ४. फ च रा प्र व म ल$_1$ ल$_2$ अ—न च । ५. फ च रा प्र व अ—न च । ६. व म ल$_1$ ल$_2$—राजा । ७. अ—स च राजा । ८. फ म—हि । ९. च म—धर्मोपसं० । ल$_2$—धर्मो हि । १०. अ—०लसंहितः । ११. फ—आप्नोति । अ—अन्वेति । १२. अ—०स्थाने वधं । १३. अ—चैव । १४. फ—हि बुध्यस्वाहि० । १५. अ—तस्यैकस्य ॥ १६. च रा प्र म ल$_1$ ल$_2$—वत्तु ॥ १७. फ—कण्ठावसक्तेन चिन्त्यतां हितमात्मनः ॥

सीतायास् तेजसा दग्धां राम-कोप-प्रदीपिताम् ।
N] दह्य-मानाम् इमां पश्य लंकां स-रथ-कुञ्जराम् ॥३५॥ [३७

N] तस्य तद् वचनं श्रुत्वा वानरस्य महाऽऽत्मनः ।
३६उ] आ-ज्ञापयद् वधं तस्य रावणः क्रोध-मूर्च्छितः ॥३६॥ [५२,१

स तस्य तद् वाक्यम् अ-दीन-भाषिणः
कपि-प्रवीरस्य नि-शम्य वि-प्रियम् ।
दशाऽऽननः कोप-विवृत्त-लोचनः
N] समा-ऽदिशत् तत्र[1] महा[2]-कपेर् वधम्[3] ॥३७॥ [४६

इत्यार्षे रामायणे सुन्दर-काण्डे हनुमद्-वाक्य
नाम सप्तचत्वारिंशः सर्गः ॥४७॥

---

१. फ-राज्ञा ॥ २. अ-उरर । ३. फ-वधं महाकपेः । अ-कपेर्महावधम् ॥

आ-ज्ञप्ते तु वधे तस्य रावणेन दुर्-आत्मना ।
१] नि-वेदितं-ततो वाक्यं नाऽनुमेने विभीषणः ॥१॥ [२
राक्षसाऽधि-पतिं क्रुद्धं तद् अ-कार्यम् उपे-स्थितम् ।
२] विदित्वा चिन्तयामास कार्यं कार्य-विदां वरः ॥२॥ [३
निश्चितांऽर्थे ततः साम्ना पूज्यं शत्रु-जिद् अग्र-जम् ।
३] उवाच हितम् अत्य्-अर्थं वाक्यं वाक्य-विदां वरः॥३॥ [४
राज-वृत्त-विरुद्धं च लोक-वृत्ते च गर्हितम् ।
४] सर्व-थाऽसदृशं वीर कपेर् अस्य प्र-मोपणम् ॥४॥[12] [५
अ-संशयं शत्रुर् अयं प्र-वृद्धः
कृतं ह्य् अनेनाऽप्रियम् अ-प्रमेयम् ।[14]
न[15] दूत-वध्यां तु[16] वदन्ति सन्तो
५] दूतस्य दण्डा बहवः प्र-दिष्टाः ॥५॥ [१४
वैरूप्यम् अंगेषु कशा-निपातो
योग्यँस् तथा लक्षण-संनिपातः ।[18]

---

१. आ—तत्र । २. फ ल$_1$—हनूमतः । अ—महात्मना । ३. स ल$_1$ ल$_2$—निवेदितं ततो । अ—निवेदिते ततो ॥ ४. आ—तस्य का० । फ० अ—तच्च कार्यमुपस्थितम् । रा प्र व स ल$_1$ ल$_2$—तद्धयार्यमुप० । ५. आ—कार्यविधिप्रति ॥ ६. च म—०वार्यः । ७. फ—पूजयित्वा स रावणम् । आ—पूर्वशत्रु० । ८. रा प्र व ल$_1$ ल$_2$—नास्ति ॥ ९. प्र—०वृत्तं । १०. फ अ—न । ११. ल$_2$—न मारणम् । १२. फ—नास्ति ॥ १३. अ—प्रवृत्तः । १४. च रा प्र व ल$_1$ ल$_2$—नास्ति । १५. फ अ—दूता ह्यवध्यास्तु । ल$_1$—न दूतवाध्यं हि । ल$_2$—दूतं न वध्यं हि । प्र म रा—०वध्यां हि ॥ १६. म—कशाभिघातो । १७. फ म—मौढ्यं । अ—मौन्यं । १८. अ—०पाताः । १९. रा प्र व ल$_1$ ल$_2$—नास्ति ।

एतान्[1] हि दूते प्र-वदन्ति दण्डान्[2][3]

६] दूतस्य[4] दण्डो हि वधोऽप्रशस्तः[5] ॥६॥[१५

कथं हि धर्मोऽर्थ-विनीत-बुद्धिः[6]

पराऽवर-प्रत्यय-निश्चिताऽर्थः ।

भवद्-विधः कोप-वशे न[7] (नु) तिष्ठेत्

७] क्षोभं[8] न गच्छन्ति हि सत्त्व-वन्तः[9] ॥७॥ [१६

न[10] धर्म्म-वादे न च लोक-वृत्ते

न शास्त्र-बुद्धौ[11] स्व-मतेन चाऽपि ।

विद्येते कश्चित् तव तुल्य एकस्[12]

८] त्वम्[13] उत्तमः सर्व-सुराऽसुराणाम् ॥८॥ [१७

न चाप्य् अस्य कपेर् घाते कश्चित् पश्याम्य् अहं गुणम्।

९] तेष्व् एव पात्यतां दण्डो यैर् अयं प्रेपितः कपिः॥९॥ [२०

साधुर् वा यदि वाऽसाधुः परैः[15] सं-प्रेपितो ह्य् अयम्[14]।

१०] ब्रुवन्[16] परार्थं[16] पर-वान् न वधं प्राऽऽप्तुम् अर्हति॥१०॥ [२१

अपि चाऽस्मिन् हते राजन् नाऽन्यं पश्यामि वानरम्[17]।

११] इह यः पुनर् आ-गच्छेत् परं पारं महोदधेः ॥११॥ [२२

---

१. आ–एता । २. आ–दण्डा । ३. रा घ ल$_1$ ल$_2$–नास्ति । ४ च प्र–दण्डो न वधः प्रदिष्टः । फ अ–दण्डो हि वधो न दृष्टः । म–वधस्तु दूतस्य म नः श्रुतोपि । रा च–नास्ति ॥ ५. फ–धर्मादनपेत॰ । अ–च धर्मार्थविदग्धबु॰ । आ–॰र्थविनीतबुद्धिर् । ६. आ–भवद्विधैः । फ–पराभवः । ७. फ–॰पवशे॰ऽधितिष्ठेत् । रा–॰पमथ प्रतिष्ठेत् । घ प्र म ल$_1$ ल$_2$–॰पमयाधितिष्ठेत् । ८. फ–क्रोधं । ९. आ–सत्ववन्तः॥ १०. आ–नास्ति । ११. फ–॰बुध्याश्रम॰ । अ–बुध्या स्व॰ । १२. फ–बलेन तुल्यस्तव कश्चिदस्ति । १३. फ घ–त्वं ह्युत्तमः ॥ १४. आ–अयं ॥ १५. आ–परैरेष समर्पितः । फ–परैरेष समर्पितम् । १६. आ–ध्रुवं परार्थं । फ–ध्रुवं परार्थं ॥ १७. अ–खेचरम् ॥

तस्मान् नाऽस्य वधे यत्नः कार्यः पर-पुरंजय ।
१२] भवान् सेन्द्रेषु[1] देवेषु यत्नम् आ-स्थातुम्[2] अर्हति ॥१२॥ [२३

अस्मिन् वि-नष्टे हि न दूतम् अन्यं
पश्यामि यस्[3] तौ नर-राज-[4]पुत्रौ ।
युद्धाय युद्धे[5]र्षभ दुर्वि-नीताव्
१३] उद्-योजयेद्[6] वै भवतो[7] वि-रुद्धौ ॥१३॥ [२४

पराऽऽक्रमोत्साह-वता दृढेन
सुराऽसुराणाम् अपि दुर्-जयेन ।
त्वया मनो-नन्दन नैर्-ऋतानां
१४] न राघवः[8] शक्यति योद्धुम्[9] आजौ ॥ १४ ॥ [२९

हिताश् च शूराश् च सु-मानिताश् च
कुलेषु जाताः सुमहा-गुणेषु ।
यशस्-विनः शस्त्र-भृतां वराश् च
१५] कोट्यग्[10]-अग्र-शस् ते सु-भृताः सदैव[11] ॥१५ [३०

तद् एक-देशेन बलस्य तावत्
कश्चित् तवाऽऽदेश-कृतोऽभियोगः[12] ।

---

१. प्र म ल$_{1}$ ल$_{2}$—सर्वेषु । २. फ—आस्थितुम् ॥ ३. फ—यौ । ४. श्र—नरदेव० । ५. प्र म ल$_{1}$ ल$_{2}$—योधर्षभ । ६. श्रा—भयोजयेयौ । रा घ म ल$_{1}$ ल$_{2}$—युध्येत गत्वा । श्र—युधौ जयेयौ । ७. फ—भवता ॥ ८. प्र—वारणं । ल$_{2}$—रावणः । ९. रा घ म ल$_{1}$ प्र ल$_{2}$—कर्तुम् ॥ १०. रा घ म ल$_{1}$ ल$_{2}$—कार्योधितास्ते । प्र—कार्योदितास्ते । ११. फ—कोट्यश्च संख्ये सुभृताश्च वीराः । अतः परमाधिकः पाठः—फ—एतैः समेतैः सहितो हि राजंस्त्वं योत्स्यसे तौ खलु राजपुत्रौ । तस्मादयं गच्छतु तत्र मुक्तः समानयत्वाशु गतासुकल्पौ ॥ १२. श्र—०शभृताभियोगः । रा—०तो वियोगः ।

तस्य तद् वचनं श्रुत्वा दश-ग्रीवो महा-तेजाः ।
१] देश-कालाऽन्वितं भ्रातुर् वाक्यम् उत्तरम् अब्रवीत् ॥१॥ [१
सम्यग् उक्तं हि भवता दूत-वध्या वि-गर्हिता ।
२] अवश्यं तु वधाद् अन्यः क्रियताम् अस्य नि-ग्रहः ॥२॥ [२
कपीनां किल लांगूलम् इष्टं भवति भूषणम् ।
३] तद् अस्य दीप्यतां शीघ्रं तेन दग्धेन गच्छतु ॥३॥ [३
ततः पश्यन्त्व् इमं दीनम् अङ्ग-वैरूप्य-कर्शितम् ।
४] मित्राणि ज्ञातयः सर्वे बान्धवाः स-सुहृज्-जनाः ॥४॥ [४
आ-ऽज्ञापयद् राक्षसेन्द्रः पुरं सर्वं सं सं-स्वरम् ।
५] लांगूलेन प्र-दीप्तेन रक्षोभिः परि-णीयताम् ॥५॥ [५
तस्य तद् वचनं श्रुत्वा राक्षसा रण-कर्कशाः ।
५] वेष्टयन्ति स्म लांगूलं जीर्ण-कार्पास-कर्पटैः ॥६॥ [६
सं वेष्ट्यमाने लांगूले व्य्-अवर्द्धत ततः कपिः ।
६] शुष्कम् इन्धनम् आ-साद्य वनेष्व् इव हुताऽशनः ॥७॥
तैलेन परि-षिच्याऽथ तेऽग्नि तत्राऽभ्य् अपातयन् । [७

---

१. ल₂-भ्रात्रावरजस्य मनीषिणः । फ-दशग्रीवः सहासुरैः । घ-भ्रातुजस्य मनीषिणः । प्र ल₁-ह्यवरजस्य मनीषिणः । २. फ अ-०कालहितं ॥ ३. अ-सम्यगुक्तं त्वया भ्रातर् । ४. फ-०वाक्यं । ५. आ-अन्यत् ॥ ६. अ-लांगूलं दग्धं । ७. अ-गच्छति ॥ ८. आ-०कारितम् । फ रा म आ-०कर्शितम् । ९. फ-समित्रज्ञा० । १०. फ-सखीश्वराः । ११. अ-च स० । म-च चत्वरम् । १२. आ-०णीयताम् ॥ १३. आ-जीर्णकार्पासिकैः पटैः । फ आ-जीर्णैः कार्पासिकैः पटैः । व ल₁ ल₂- कर्पास० ॥ १४. ल₂-पंत्रे० ॥ १५. आ-०सिच्याथ । १६. आ-तत्राथपा० । म-तत्र न्यपा० । ल₁ ल₂-तत्राभ्यवापयन् ।

ौ राज-पुत्राव् उप-गृह्य मूढौ
परेषु तत्त्वं प्र-गृहाण सर्वम् ॥१६॥ ? [३१

इत्यार्षे रामायणे सुन्दर-काण्डे विभीषण-वाक्यं
नामाऽष्टाचत्वारिंशः सर्गः ॥४८॥

---

१. अ-अति० । २. आ-मत्रे । ३. च रा प्र व म ल$_1$,ल$_2$-गृह्य । ४. आ-तत्त्वम् । ५. अ-सर्वात्मना संग्रहदुष्प्रधर्षः ॥ ल$^1$-रावणवाक्यं । अ-इत्यार्षे रामायणे सुन्दरकाण्डे सर्गः ॥

तस्य तद् वचनं श्रुत्वा दश-ग्रीवो महा-बलः ।
१] देश-कालाऽन्वितं भ्रातुर् वाक्यम् उत्तरम् अब्रवीत् ॥१॥ [१
सम्यग् उक्तं हि भवता दूत-वध्या वि-गर्हिता ।
२] अवश्यं तु वधाद् अन्यः क्रियताम् अस्य नि-ग्रहः ॥२॥ [२
कपीनां किल लांगूलम् इष्टं भवति भूषणम् ।
३] तद् अस्य दीप्यतां शीघ्रं तेन दग्धेन गच्छतु ॥३॥ [३
ततः पश्यन्त्व् इमं दीनम् अङ्ग-वैरूप्य-कर्षितम् ।
४] मित्राणि ज्ञातयः सर्वे बान्धवाः स-सुहृज्-जनाः ॥४॥ [४
आ-ऽज्ञापयद् राक्षसेन्द्रः पुरं सर्वं स-चत्वरम् ।
N] लांगूलेन प्र-दीप्तेन रक्षोभिः परि-णीयताम् ॥५॥ [५
तस्य तद् वचनं श्रुत्वा राक्षसा रण-कर्कशाः ।
५] वेष्टयन्ति स्म लांगूलं जीर्ण-कार्पास-कर्पटैः ॥६॥ [६
सं वेष्ट्यमाने लांगूले व्य्-अवर्द्धत ततः कपिः ।
६] शुष्कम् इन्धनम् आ-साद्य वनेष्व् इव हुताऽशनः ॥७॥
तैलेन परि-षिच्याऽथ तेऽग्निं तत्राऽभ्य् अपातयन् । [७

---

१. ल$_2$–श्रुत्वावरजस्य मनीषिणः । फ–दशग्रीवः सहासुरैः । य–ह्यनुजस्य मनीषिणः । भ ल$_1$–ह्यवरजस्य मनीषिणः । २. फ अ–०कालहितं ॥ ३. अ–सम्यगुक्तं त्वया भ्रातर् । ४. फ–०वाक्यं । ५. आ–अन्यत ॥ ६. अ–लांगूलं दग्धं । ७. अ–गच्छति ॥ ८. आ–०कारितम् । फ रा ॥ अ–०कर्शितम् । ९. फ–समित्रज्ञा० । १०. फ–सकपीश्वरा: । ११. अ–च स०। म–च चत्वराम् । १२. आ–०नीयताम् ॥ १३. आ–जीर्णकार्पासिकैः पटैः । फ अ–जीर्णैः कार्पासिकैः पटैः । च ल$_1$ ल$_2$– कर्पासक० ॥ १४. ल$_2$–पंवे० ॥ १५. आ–०सिच्याथ । १६. आ–तत्रावपा० । म–तत्र न्यपा० । ल$_3$ ल$_2$–तत्राप्यतापयन् ।

N] लांगूलेन प्र-दीप्तेन राक्षसान् तं व्य्-अलोकयन्॥८॥[2]
रोषोत्कर्ष-परीताऽऽत्मा बाल-सूर्य-समाऽऽननः ।[८
N] शुचि-व्यपर(?ग)मे चैवं स-विद्युत् तोय-दो यथा॥९॥[N
स भूयः स-गतैः क्रुद्धैः राक्षसैर् हरि-पुंगवः ।
N] नि-बद्धः कृतवान् वीरस् तत्-काल-सदृशीं मतिम् ॥१०॥[१०
७उ] कामं खलु न मे शक्ता नि-बद्धस्याऽपि राक्षसाः ।[११पू
N] क्रुद्धस्य पुर-तः स्थातुं सिंहस्येवेतरे मृगाः ॥११॥[N
८पू] छित्त्वा पाशान् समुत्-पत्य हन्याम् अहम् इमान् पुनः ।[११उ
N] एषां चाऽपि सुपर्य्-आप्तो राक्षसानाम् अहं युधि ॥१२॥
किन्तु रामस्य प्रीत्य्-अर्थं वि-षहिष्येऽहम् ईदृशम् ।[१३
N] लङ्का चारितव्या मे पुनर् एव भविष्यति ॥१३॥[१४पू
N] इति क्षमेऽहमं एतेषां राक्षसानाम् इमां क्रियाम् । [N
८उ] अवश्यम् एव द्रष्टव्या लंकेयं रजनी-क्षये ।[१५
रात्रौ हि न सु-दृष्टा मे दुर्ग-कर्म-विधानतः ॥१४॥[15] [१४उ
९] कामं बन्धैश् च भूयो मे लांगूलाऽऽदीपनेन च ।

---

१. आ-राक्षसांस्तान् विलो॰ । २ अतः परमधिकः पाठः-म-स चाथ परैर्घोरै राक्षसैर्भीमविक्रमैः ॥ ३. फ च रा-रोमहर्ष॰ । व प्र म ल१ ल२-रोषहर्ष॰। अ-रोषामर्ष॰। ४. फ अ-॰र्यनिभाननः। च-॰र्य इवाननः। रा-॰र्य इवोदितः । ५. फ-शुचिविद्युक्ते व्यतिक्रमे । च रा प्र व म ल१ ल२ अ-शुचिशुक्रव्यपगमे ॥ ६. च रा प्र व ल१ ल२-शक्तिर्निबद्धस्यापि राक्षसैः। म-शक्ता बद्धस्यापि निशाचराः । ७. आ-हित्वा । ल१ ल२-भित्त्वा। ८. फ-गच्छतः परिधारणे । ९. प्र व म ल१ ल२-एषामपि । अ-एषां वापि ॥ १०. म-च। ११. आ-दुर्गकर्मविधानतः ॥१२. फ च-शान्त्वा-हम्। १३. रा प्र व म ल१ ल२-न हि॰। १४. फ च-सुदृश्या। १५. आ-नास्ति ॥

१०ड] पीडां कुर्वन्तु रक्षांसि न च मे मनसः श्रमः ॥१५॥[1] [१६

९२ड] ततस् ते[3] सं-वृताऽऽकारम् सत्त्ववन्तं महा-बलम् ।

प्र-गृह्य निर्-ययुः सर्वे राक्षसाः कपि-कुंजरम् ॥१६॥ [१७

१३] शंखं-भेरी-निनादैस् तं[5] घोष-यं(ऽयं)तस् च कर्मभिः ।

१४पू] राक्षसाः क्रूर-कर्माणश् चारयन्ति स्म तां पुरीम् ॥१७॥ [१८

अथोपवीत-सर्वांऽगः स्वस्त-सर्वेन्द्रिय-क्रियः ।

N] हनूमांश् चारयामास लंकां रावण-पालिताम् ॥१८॥ [१९

यथाऽपश्यन् निशि तदा भवनानि च रक्षसाम् । [२०पू

N] ततः परि-विशिष्टानि च(ऽष्टानि) स्वभावाद् ददृशे हरिः १९ [N

१५ड] सोऽपश्यद् भूमि-भागांश् च सुवि-भक्तांश् च चत्वरान् । [२०ड

रथ्याश् च गृह-संबाधाः कपिः शृंगाटकानि च ॥२०॥[२१पू

१४ड] दुर्ग-कर्म च लंकायां सुनि-विष्टां(ऽष्टं) सु-रक्षिणः(ऽतम्) [N

N] गृहाणि च समृद्धानि ददर्शाऽऽलक्षितो बली॥२१॥ [२१ड

चत्वरेषु चतुष्केषु तथा शृंगाटकेषु च ।

---

१. फ—मनसि क्षमः । च रा प्र घ म ल$_1$ ल$_2$ अ—मनसि श्रमः । २. अतः परमधिकः पाठः—म—पश्चं चिन्तयतस्तस्य लांगूलं वेष्टितं परैः । पटानां ते सहस्रेण स्नेहस्य सिषिचुः क्रुद्धाः । स्नेहावसिक्तं लांगूलं क्रूराः प्रज्वालयंस्ततः ॥ ३. फ—र्थं संवृताकारं सत्त्ववन्तं । आ—उे संवृताकारं सत्त्ववन्तं॥ ४. अ—शरभेरीनिनादैश्च । फ रा प्र घ म ल$_1$ ल$_2$—०निनादैश्च । ५. फ—घोषयन्तस्ततस्तान् । म ल$_1$ ल$_2$—घोषयन्तः स्वक० ॥ ६. आ च रा प्र घ म ल$_1$ ल$_2$ अ—अथोपस्थित० । ७. आ—स्वस्थः म० । च रा म— स्वस्थप० । ८. आ—हनूमान् रमयामास ॥ ९. फ च—०ष्टां च तां पुरीं । रा प्र घ म ल$_1$—०ष्टां च तां ददर्श पुरीं कपिः । ल$_2$ अ—०ष्टां च तां ददर्श पुरीं ॥ १०. आ—०सम्यन्याः । ११. अ—गुप्ति० । १२. रा प्र घ म ल$_1$—लंकायाः । १३. अ—सुनिविष्टस्य रक्षसः । १४. फ—नास्ति॥

२३उ] ततः शिवाऽर्चिर् अ-व्यग्रः प्रदक्षिण-शिखोऽनलः ।[1]
जज्वाल मृग-शावाऽक्ष्याः शंसन्न्[2] इव शिवं कपेः॥३१॥ [३२

२४] ततः प्र-दीप्ते लांगूले चिन्तयामास वानरः ।
प्र-दीप्तोऽग्निर् अयं कस्मान् न दहति सर्व-गः[3] ॥३२॥ [४९

२५] दृश्यते च महा-ज्वालो करोति च न मे रुजम् ।[4]
शिशिरस्येव सं-तापो लांगूले मे प्रति-ष्ठितः ॥३३॥ [५०

२६] अथवा तद् इदं व्यक्तं यद् दृष्टं प्लवता मया ।
राम-प्रसादाद् आश्चर्यं सर्व-तः सरितां पतौ ॥३४॥ [५१

२७] यदि तावत् समुद्रस्य मैनाकस्य नगस्य च ।
रामाऽर्थे सं-भ्रमस् तादृक् किम् अग्निर् न करिष्यति॥३५॥[५२

२८] सीतायाश् चाऽऽनृ-शंस्येन तेजसा राघवस्य च ।
२९पू] पितुश् च मम सख्येन न मां दहति पावकः ॥३६॥ [५३
भूयः स चिन्तयामास मुहूर्तं कपि-कुंजरः ।
कथम् अस्मद्-विधस्येह बन्धनं राक्षसाऽधमैः ।
N] प्रति-क्रिया न युक्ता स्यात् सत्य-धर्म-पराक्रमैः[15] ॥३७॥ [५४
ततश् छित्त्वा स तान् पाशान् वेग-वान् वै[16] महा-कपिः ।

---

१. फ–ततो विधूमः स्निग्धार्चिः । च रा प्र व म ल$_1$ ल$_2$ अ–ततः स्निग्धार्चिरव्य० । २. अ–०णमुखोऽनलः । ३. अ–शंशन्न् ॥ ४. फ–संप्रदीप्तस्तव । ५ फ–पावकः । ल$_1$ ल$_2$–सर्वेगः॥ ६. रा प्र व म ल$_1$ ल$_2$–महाज्वालः करोति न मनोरुजम् । अ–महाज्वालः करोति न च मे रुजाम्॥ ७. आ–संतापो । ८. फ–मन्ये । रा म ल$_1$ ल$_2$–सर्वं । । ९. फ–गिरौ चोदधिसंभ्रमे ॥ १०. आ–च धीमतः । फ–च तस्य च । ११. आ–संभ्रमे । १२. ल$_2$–[illegible] ॥ [illegible]–वायोश्च ॥ १४. च प्र व म ल$_1$ ल$_2$ अ–सति [illegible]–सति मय्यपराक्रमे । १५. आ–प्रतिक्रिया[illegible]क्रमे ॥ १६. फ–छित्त्वाशु मनः पाशान्वेगवान्स ।

N] घोषयन्ति हनूमन्तं[1] चारीक (?र) इति[2] राक्षसाः[3] ॥२२॥ [२२
१६उ] दीप्यमाने ततस् तस्य लांगूलाऽग्रे हनूमतः ।
राक्षस्यस् ता वि-रूपाऽक्ष्यः प्रोचुर्[4] देव्यै तद् अ-प्रियम्२३ [२४
१७] यस् त्वया कृत-संवादः सीते प्र-मुखें-तः कपिः ।
लांगूलेन प्र-दीप्तेन स एष परि-गीयते ॥२४॥ [२५
१८] श्रुत्वा[5] तद्[6] वचनं क्रूरम् आत्म-प्रहरणोपमम् ।
जानकी शोक-सन्तप्ता हुताऽशनम् उपाऽऽगमत्[7] ॥२५॥ [२६
१९] मंगलाऽभि-मुखी तस्य श्रुत्वा सीता महा-कपेः[8] ।
उप-तस्थे विशालाऽक्षी नि-यता हव्य-वाहनम् ॥२६॥ [२७
२०] यद्य् अस्ति गुरु-शुश्रूषा यद्य् अस्ति चरितं तपः ।
यदि मां तारयत्य् आर्यः[9] शिवो भव हनूमतः ॥२७॥ [२८
२१] यदि कश्चिद् अनु-क्रोशस् तस्य मय्य् अस्ति धीमतः ।
यदि वा भाग्य-शेषो[10] मे शिवो भव हनुमतः ॥२८॥[11] [२९
२२] यदि मां वृत्त-संपन्नां तत्-सर्व-गत-मानसाम् ।[12]
२३पू] हुताऽशन वि-जानासि शिवो भव हनूमतः ॥२९॥[13] [३०
यदि मां तारयत्य् आर्यः कृत-ज्ञः सत्य-संगरः ।[14] [३१पू
परं पारं समुद्रस्य रक्षसाऽप-हृतां सतीम् ।[15]
N] अस्माद् दुःखाद्[16] रघु-श्रेष्ठः शिवो भव हनूमतः ॥[17] ३०॥[३१उ

---

१. घ ब-घराक । ल२-चकार । २. आ च घ ल२-इव । ३. फ-नास्ति । ४. अ-शंशुर् । ५. फ-स हनुमान् । ६. च रा प्र ब म ल१ ल२-वाग्रमुखः ॥ ५. फ-सा श्रुत्वा । ७. फ-उदीरयत् ॥ ८. आ-कपिम् ॥ ९. फ-चैवैकपत्नीत्वं । म-वाप्येकपत्नीत्व॥ अ-मां तारयेदार्यः।१०. अ-०शेषं । ११. फ म-नास्ति॥ १२. फ-नास्ति । १३. रा म-नास्ति ॥ अतः परमधिकः पाठः-फ-यदि वा भाग्य-शेषो मे शिवो भव हनूमतः ॥ १४. रा व प्र ल१, ल२ अ-नास्ति । १५. रा प्र घ म ल१, ल२ अ-नास्ति । १६. म-दुःखानुसेरोघात् । १७. रा व प्र ल१, ल२-नास्ति ॥

२३उ] ततः शिखाऽर्चिर् अ-व्यग्रः प्रदक्षिण-शिखोऽनलः ।
जज्वाल मृग-शावाऽक्ष्याः शंसन्न् इव शिवं कपेः ॥३१॥ [३२

२४] ततः प्र-दीप्ते लांगूले चिन्तयामास वानरः ।
प्र-दीप्तोऽग्निर् अयं कस्मान् न दहति सर्व-तः ॥३२॥ [४९

२५] दृश्यते च महा-ज्वालः करोति च न मे रुजम् ।
शिशिरस्येव सं-पातो लांगूले मे प्रति-ष्ठितः ॥३३॥ [५०

२६] अथवा तद् इदं व्यक्तं यद् दृष्टं प्लवता मया ।
राम-प्रसादाद् आश्चर्यं सर्व-तः सरितां पतौ ॥३४॥ [५१

२७] यदि तावत् समुद्रस्य मैनाकस्य नगस्य च ।
रामाऽर्थे सं-भ्रमस् तादृक् किम् अग्निर् न करिष्यति ३५॥[५२

२८] सीतायाश् चाऽऽनृ-शंस्येन तेजसा राघवस्य च ।
२९पू] पितुश् च मम सख्येन न मां दहति पावकः ॥३६॥ [५३
भूयः स चिन्तयामास मुहूर्तं कपि-कुञ्जरः ।
कथम् अस्मद्-विधस्येह बन्धनं राक्षसाऽधमैः ।
N] प्रति-क्रिया न युक्ता स्याद् सति धर्म-पराक्रमैः ॥३७॥ [५४
ततश् छित्त्वा स तान् पाशान् वेग-वान् वै महा-कपिः ।

---

१. फ–ततो विधूमः स्निग्धार्चिः । च रा प्र व म ल$_1$ ल$_2$ अ–ततः स्निग्धार्चिरव्य० । २. अ–०णमुखोऽनलः । ३. अ–शंसन्न् ॥ ४. फ–संप्रदीप्तस्त्वयं । ५ फ–पावकः । ल$_1$ ल$_2$–सर्वतः ॥ ६.-रा प्र व म ल$_1$ ल$_2$–महाज्वालः करोति न मनोरुजम् । अ–महाज्वालः करोति न च मे रुजाम् ॥ ७. आ–संपातो । ८. फ–मन्ये । रा म ल$_1$ ल$_2$–मन्ये । । ९. फ–गिरौ चोदधिसंभ्रमे ॥ १०. आ–च धीमतः । फ–च तस्य च । ११. आ–संभ्रमं । १२. ल$_2$–किमर्थं ॥ १३. च–वायोश्च ॥ १४. च प्र व म ल$_1$ ल$_2$ अ–सति महां पराक्रमे । रा–सति मय्यपराक्रमे । १५. आ–प्रतिक्रियानुयुक्तस्याऽस्ति महां पराक्रमे ॥ १६. फ–छित्त्वा मनः पाशान्वेगवान्न ।

N] उत्-पपातोऽऽशु वेगेन ननाद च महा-बलः ॥३८॥ [५५

N] पुरेवे वि-चरन् श्रीमान् शैल-शृंगम् इवोन्नतम् ।

[3]वि-विक्तं रक्षसां यानम् आ-ससादाऽनिलाऽऽत्म-जः३९[५६

३०] स भूत्वा शैल-संकाशः क्षणेन पुनर् आत्म-वान् ।

ह्रस्वतां समनु-प्राऽऽप्तो बन्धनानि व्यू-अशातयत् ॥४०॥[५७

३१] वि-मुक्तश् चाऽभवच् छ्रीमान् पुनः पर्वत-सन्निभः ।

वीऽऽक्ष-माणश् च ददृशे परि-घं तोरणाऽऽश्रयम् ॥४१॥ [५८

३२] गृहीत्वा स महा-बाहुः कालाऽऽयस-परिष्कृतम् ।

३३पू] रक्षिणस् तान् पुनः सर्वान् सूदयामास मारुतिः ॥४२॥ [५९

स तांश् च हत्वा रण-चण्ड-वेगः

सम्-ईक्षमाणः पुनर् एव लंकाम् ।

प्रदीप्त-लांगूल-कृताऽग्निमाली

N] प्राऽकाशताऽऽदित्य इवांऽशु-माली ॥४३॥ [६०

इत्यार्षे रामायणे सुन्दर-काण्डे हनुमल्-लांगूल-दीपनं

नामैकोनपञ्चाशः सर्गः ॥४९॥

---

१. फ रा घ प्र य म ल१ ल२-उत्पपात च । अ-उत्पपाताथ ॥ २. फ-स पुरद्वारमाश्रित्य । आ-पुर्येव विचरन् छ्रीमान् । म-पुनरेव वि० । अ-पुरीद्वारं विशन् श्री० । ३. फ-विभक्त राक्षसान् घोरान् । च रा प्र घ म ल१ ल२-विविक्त रक्षसां वासम् ॥ ४. आ-बन्धनान्यवसादयन् । अ-बन्धनान्यवशातयन् ॥ ५. फ-स मुक्तश् । ६. फ अ-वीक्ष्यमा० ॥ ७ फ-तास्तु । अ-चापि । ८. फ-०विक्रमः । ९. आ-०ईक्षमाण । १०. ल१-०लगनाग्नि० ॥ ११ ल२-इवि । अ-नास्ति । १२. फ अ-लांगूलदीपन । घ-लांगूलोद्दीपन । प्र म-०प्रदीपनं ॥

वीऽऽदृंपमाणम् ततो लंकां कपिः कृत-मनोरथः ।
१] वर्धमान-समुत्साहः कार्य-शेपम् अचिन्तयत् ॥१॥ [१
उत्तरं किं नु मे शेपं कर्त्तव्यम् इह सम्प्रति ।
२] यद् एपां रक्षसां भूयः सं-तापम् उप-पादयेत् ॥२॥ [२
वनं तावत् प्र-मथितं प्र-वरा राक्षसा हताः ।
३] बलैक-देशः क्षपितः शेपं दुर्ग-विनाशनम् ॥३॥ [३
दुर्गे वि-नाशिते कर्म भवेद् अल्प-परिश्रमम् ।
४] अ-प्रयत्नेन कर्म स्यान् ममोऽपि स-फलः श्रमः ॥४॥ [४
यो ह् अयं मम लांगूले दीप्यते हव्य-वाहनः ।
५] अस्य सं-तर्पणं न्याय्यं कर्त्तुम् एभिर् गृहोत्तमैः ॥५॥ [५
ततः स दीप्त-लांगूलः स-विद्युद् इव तोय-दः ।
६] भवनाऽग्रेषु लंकायां वि-चचाराऽनिलाऽऽत्म-जः ॥६॥ [६
७पू] मुमोच हनुमान् अग्निम् अदीप्यंत हुताऽशनः ।
प्र-दीप्तम् अग्निं पवनस् तेषु वेश्मस्व् अचारयत् ॥७[14]॥ [N
८] ततः श्वसन-संयोगाद् अति-वेगो हुताऽशनः ।

१. च प्र म ल$_2$ अ-वीक्ष्य॰ । २. ष-गावन॰ । ३. अ-॰महोत्साहः । ४. अ-कार्यशेपं मे । च-किन्तु मे । ५. रा प्र व म ल$_1$ ल$_2$-संतापाय मनो दधे । फ च अ-उपपादये । ६. अ-रक्षसां । ७. अ-कुपितः । अ-क्षयितः । ८. रा च प्र म ल$_1$ ल$_2$-दुर्गस्य नाशने । ९. फ अ-कर्माणि मम स्यात् ॥ १०. च-संदीप्तलां॰ । ११. रा प्र च म ल$_1$ ल$_2$-लङ्कायां । १२. फ-अभि प्रदीप्तश्च । १३. फ-अपातयत् । च रा प्र च म ल$_1$ ल$_2$-अदाहयत् । १४. अ-प्रदीप्तमग्निं भवनेषु वेश्मसु प्रोत्साहयत् संविभजन्मनोजवम् । तां चापि लंकां पुनरेव वानरः प्रोत्पत्य चोत्पत्य शनैरदाहयत् ॥

९पू] कालाऽग्निर् इव सं-दीप्तस् तेषु वेश्मस्व् अदृश्यत ॥८॥ [२२

ततोऽनिलोऽनलौ क्रुद्धौ हनुमांश् चैव वीर्यवान् ।[4]

N] परि-तप्ता तदा लंका सा समन्ताद् अदृश्यत ॥९॥ [N

क्वचित् काञ्चन-वर्णाऽऽभा तपनीय-निभा क्वचित् ।

N] कृष्णाऽऽयस-सवर्णा च क्वचिच् च रजतोपमा ॥१०॥ [N

फुल्लाऽशोक-निभा चाऽपि किंशुकोपम-दर्शना ।

क्वचिद् धूमाऽऽवृता श्यामा ज्वलन्तीऽव स्व-तेजसा ।[13]

N] इन्द्राऽऽयुध-निभा भूत्वा नाना-वर्णा क्वचित्क्वचित् ॥११॥[16] [N

---

१. अ—वेश्मसु दृश्यते । २. ल₂—ततोऽनलाऽनिलौ । ३. ल₂—वानरः । ४. अतः परमधिकः पाठः—म—परिक्षिप्य पुरीं लंकां सर्वतः समदीपयत् । लोकस्यास्य क्षये प्राप्ते दीप्तामिव वसुन्धराम् ॥ ततो निर्दह्यमानानि भवनानि चकाशिरे । महेन्द्रशिखराणीव दह्यमानानि सर्वतः ॥ ज्वलनेन प्रदीप्तानि तोरणानि चकाशिरे । विद्युद्भिरिव बद्धानि मेघजालानि घर्मगे ॥ हर्म्यैर्निर्दह्यमानैश्च शूलैः प्रज्वलितैरिव । प्रबभौ सा पुरी लंका महोल्काभिर्भयङ्करा ॥ ५. फ—परिक्षिप्य तदा । अ—परिक्षिप्य ततो । ६. फ—मा । ७. फ अ—अदीप्यत । म ल₂—अदह्यत ॥ ८. फ अ—०नयर्णाभस्तपनीयनिभः । ९. फ अ—सवर्णाभः । १०. फ अ—०पमः ॥ ११. फ अ—०निभश्चापि । रा म ल₂—०निभा क्वापि । १२. फ अ—०सन्निभः । १३. फ अ—क्वचिद् धूमावृतः श्यामो विधूमो ज्वलितः क्वचित् । १४. फ अ—०घनिभो । १५. फ अ—०वर्णः । १६. अतः परं आ—कोशेऽधिकः पाठो भवति । स चोत्तरं पठ्यमानस्य २३–तमोत्तरार्धादेः २६–तमपूर्वार्धाऽन्तस्य ग्रन्थस्यैव मूलतः पत्रक्रमव्यत्यासप्रयोजितः । पुरस्ताद्वर्तमानोऽप्यर्थो द्विः पाठो द्र० । तथाऽन्ये सत्येकस्मिन्नपि कोशे द्वयोः पाठयोर्मध्ये यत्किञ्चिच्छेदा भवति तत्र काल एव कारणं द्र० । अथ पाठः—आ—आजघ्ने वानरश्रेष्ठं वायोरादित्यसन्निभैः । आवर्त इव गांगस्य तोयस्य विपुलो महान् । परिक्षिप्य हनूमन्तं सर्वतो रक्षसां बलम् । ततो वातात्मजः क्रुद्धो हेमरूप्यसमाचितम् ॥ प्रासादस्य गृहीत्वा च स्तम्भं हेमविभूषितम् । भ्रामयित्वा [illegible] तं वेगादिन्द्रायुधनिभं ततः ॥

ततस् ते राक्षसाः सर्वे स-रावण-महा-बलाः ।
N] बाल-वृद्धाम् सु-शोचन्तो निर्-ययुर् नगराद् बहिः॥१२॥[N
परस्परम् अव-गृह्य हस्तं हस्तेन वेश्मनाम् ।
धूमात् स्रवद्भिर् नयनैः क्रोशन्त्यश् चेतरेतरम् ।
N] स्त्रियश् च ज्वलनाऽऽविष्टा भ्रमन्त्यो वै ततस्-ततः॥१३[N
आकाशात्-पतने भक्ता धरण्यां रजनी-चराः ।
N] बभ्रमुस् तत्र तत्रैव ज्वाला-मालाऽऽकुले पथि ॥१४॥ [N
मायाम् आ-श्रित्य दहनो महा-शब्दो भयानकः ।
N] जीमूत-सदृशैर् नादैर् नदन् पर्य्-अटने मंहीम् ॥१५॥ [N
दग्धानि हि वि-मानानि नि-पेतुर् धरणी-तले ।
N] वि-मानानीऽव सिद्धानाम् अम्बरात् पुण्य-संक्षये॥१६॥[N
१०उ] तानि काञ्चन-जालानि मुक्ता-मणि-लतानि च ।[12]
भवनानि च दह्यन्ते शीर्यन्ते रत्न-वन्ति च ॥१७॥ [N
११] वज्र-विद्रुम-वैडूर्य-मुक्ता-रजत-सम्भवानि ।

---

१. फ च अ—क्रुद्धाः सरा० । रा प्र व म ल$_{1}$ ल$_{2}$—क्रुद्धाः रावणश्च म० । २. फ—०वृद्धांश्च शो० । रा प्र य म ल$_{1}$ ल$_{2}$ अ—०वृद्धांश्च शो० । ३. आ—वेश्मनः । म—वेश्मनि । ४. आ—धूमाप्लुतक्षिर् । प्र य म ल$_{1}$ ल$_{2}$—धूमाद्वर्द्धिर् । ५. अत्र परमधिकः पाठः—म—विमानेभ्यः प्रदीप्तेभ्यः दह्यमाना वरांगनाः । त्यक्ताभरणसंयोगा भयार्ता विपदुद्रुवुः । मुक्तोत्तरीय-संभ्रान्ता दृश्यमानपयोधराः । धावन्ति तत्र तत्रैव मृग्यो दावार्दिता यथा ॥ ६. रा प्र य म ल$_{1}$ ल$_{2}$—आकाशात्पतिताः । ७. आ—अटन् पर्यटते म० । फ—भटन्प-र्यटते वली । च—भटन् पर्यटते वशी । रा प्र व म ल$_{1}$ ल$_{2}$—अटन्परिवृतो वशी । अ—अटने मृतां । ८. फ अ—तु । च रा प्र य म ल$_{1}$ ल$_{2}$—च । ९. च रा प्र व म ल$_{1}$ ल$_{2}$—आकाशात्पतितानि च । अ—अंबरात्कालसंक्षये । १०. फ—०नजातानि । ११. रा म ल$_{1}$ ल$_{2}$—०वृतानि । १२. व प्र—नास्ति । १३. फ—विमानानि व्यशीर्यन्त स्त्रवन्ति च । व—नास्ति । १४. आ—०संभवाम् । फ—०मंहताम् ।

विचित्रै(?तान्)भवनैर्(?ने)धातून् स्यन्दैना(?मा)नि(?नान्)ददाहं सः

१२] नाऽग्निस् तृप्यति काष्ठानां नाऽग्नेः स हरि-यूथ-पः ।
(?न)हनुमता(?न-)निरस्तानां राक्षसानां वसुं-धरे॥१९॥ [२९

१३] सीतया ऽभ्य्-अर्थितो वह्निर् लंकां राक्षस-संकुलाम् । [N
ज्वाला-माला-परिक्षेपैर् अदहन्मारुताऽन्वितः ॥२०॥ [३४उ

१४] तेन शब्देन वि-ध्वस्ता धर्षितास् तेन चाऽग्निना ।

१५पू] अभि-पेतुस् ततो घोरा हनुमन्तं निशा-चराः ॥२१॥ [३५

१७उ] संम-दीप्तैश् च शूलाऽग्रैः पाशैः खड्गैः परश्वधैः ।

N] हनूमन्तं महा-वेगैर् अभ्य्-अघ्नन् नैर्ऋतर्षभाः ॥२२॥[३६

१५उ] ते राक्षसा भीम-बला नाना-प्रहरणाऽन्विताः । [३७पू
आ-जघ्नुर् वानर-श्रेष्ठं बाणैर् आदित्य-संनिभैः २३ [N

१६] आ-वर्त्त इव तोयस्य गाङ्गस्य वि-पुलो महान् ।

१७पू] परि-क्षिप्य हनूमन्तं सं-बभौ रक्षसां गणः ॥२४॥ [N

१८उ] ततो वाताऽऽत्म-जः क्रुद्धो हेम-रूप्य-समावृतम् ।
प्रासादस्य समुद्-धृत्य स्तम्भं हेम-विभूषितम् ॥२५॥ [N
भ्रामयित्वा गुण-शतं नाम वि-श्राव्य चाऽऽत्मनः ।

---

१. ब प्र म अ–विचित्रान् भवने । ल$_2$–विचितान् भवने । २. फ च रा घ प्र म अ ल$_1$ ल$_2$–स्यन्दमानान् ददर्श । ३. रा प्र घ म ल$_1$ ल$_2$–मानौ । ४. फ अ–हनू० । ५. फ अ–०न्धराम् । ६. अ–शीतयाभ्यर्थितो । फ–सीतयाभ्यर्च्चितो । ७. फ अ–लंकां वै राक्षसाकुलाम् ॥ ८. आ–०मालप० ॥ ९. फ च–संकुला । रा प्र घ म ल$_1$,ल$_1$–संरब्धा । अ–वित्रस्ता । १०. फ–वृद्धा । ११. ल$_2$–वीरा । १२. च घ म ल$_2$–हनू० । १३. प्र–शैलाग्रैः । १४. आ–परस्वधैः । १५. फ अ–०वेगा प्राक्षिपन् । च रा प्र घ म ल$_1$ ल$_2$–०वेगैराजघ्नुर्न० । १६. ल$_1$–०त्यमर्दितैः । १७ फ अ–गांगस्य तोयस्य । १८. आ–हेमरूपसमावृतम् । फ–हेमरूपसमाचितम् । अ–हेमरूप्यं समन्ततः । १९. रा–नास्ति । २०. फ–शतगुणं ।

१९] जघान राक्षसान् घोरान् वज्रेणेन्द्र इवाऽसुरान् । [N

N] नि-हत्य राक्षसांस् तत्र दिवम् एवोत्-पपात ह[१] ॥२६[२]॥[३७३

अथ वि-क्रम्य सहसा सं-क्रामेन[३] स गृहाद् गृहम्[४] ।

N] लंकाम् आ-दीपयामास वायु-वेगः प्र-तापवान् ॥२७॥ [३८

स लांगूलाऽव-सक्ताऽग्निर् मुक्तो मृत्यु-मुखाद् इव ।

N] लंकां पर्य्-अपतत् तत्र कृत्स्नां खं ग्रहः सं-पतन् इव ॥२८॥ [३९

तोरणेषु गवाऽक्षेषु हर्म्येषु शिखरेषु च ।

N] तिष्ठमानं स्म पश्यन्ति राक्षसाः प्लवगोत्तमम् ॥२९॥ [४०

सर्व-तो हनुमान् एकः सं-पतन् स व्य्-अराजत ।

N] हुताऽशन इवाऽऽकाशे ज्वाला-माला-परिष्कृतः ॥३०॥ [N

अन्तःपुर-विमानेषु रावणस्य महा-कपिः ।

N] नि-पपाताऽग्नि-सहितो मूर्त्ति-मान् इव पावकः ॥३१॥ [N

हुताऽशेन-ज्वाल-समावृता सा

हत-प्रवीरा परमाऽऽर्त्त-योधा ।

हनूमता कोपं-बलाऽभिभूता

२०] बभूव कालोप-हतेव लंका ॥३२॥ [४१

स राक्षसांस् तान् सु-बहून् नि-हत्य

---

१. श्रा–च वतांम् । २. म–सः । ३. रा नास्ति । ४. ल$_1$–अविवि० । ५. श्रा–संक्रमत् । फ–संक्रमन् । रा–संक्रामत् । ६. फ च रा प्र व म ल$_1$,ल$_2$ श्र–०पुत्रः । ७. फ–०यंचरत् । ८. फ रा प्र व म ल$_1$ ल$_2$ श्र–खे । ९. श्रा–तिष्ठमानाः । फ–०मानन्तु । च रा प्र म ल$_1$ ल$_2$–०मानास्तु । १०. रा प्र व म ल$_1$ ल$_2$–०परिप्लुतः । श्र–०पुरस्कृतः । ११. फ–हुताऽशनेनाय म० । १२. फ च रा म श्र–[illegible] । १३. श्र–कंप० । १४. फ–तांडव व० । १५. फ–निपात्य ।

वनं च भंक्त्वा बहु-पादपं तत् ।
विसृज्य रक्षो-भवनेषु चाऽग्निं
N] जगाम रामं मनसा महाऽऽत्मा ॥३३॥ [५६
स दीर्घं लीलयोत्थाप्य लांगूलं भीम-दर्शनम् । [सर्ग५०
N] निर्-वापयामास तदा समुद्रे हरि-सत्तमः ॥३४॥ [१
स तां भय-भ्रान्त-निशाचराऽऽकुलां
समुज्ज्वल-ज्वाल-हुताऽशनाऽङ्किताम् ।
ददर्श लंकां हनुमान् महा-यशाः
N] स्वयम्भुं-कोपोपहताम् इव क्षितिम् ॥३५॥ [५३

इत्यार्षे रामायणे सुन्दर-काण्डे लंकां-पर्वणि लंका-दाहो
नाम पंचाशः सर्गः ॥५०॥

---

१. फ–ततः । २. अ–दीर्घः । ३. फ–०लीलयोद्धृत्य । अ–०लीलयोत्क्षिप्य । ४. रा प्र व म ल, ल₂–हरिपुंगवः । अ–कपिसत्तमः । ५. अ–स्वयंभुकोपाप० । रा व म ल, ल₂–स्वयंभुवः कोप० । ६. ल₂–इति । रा–श्रीरामायणे । ७. फ प्र व म–नास्ति । ८. फ–लंकाप्रदीपनं । ज–लंकादहनं । रा म ल, ल₂–लंकादीपनं । व–लांगूलोद्दीपनं । ९. अ–सुन्दरकाण्डे लंकाप्रदीपनो नाम सर्गः॥

N] प्रदीप्यमाने-लांगूले हनूमति महा-बले ।
जानकीं दुःख-सन्तप्तां सरमा वाक्यम् अब्रवीत् ।

१] दीप्य-मानां स्वयं लंकां पश्याम् औत्पातिकीं यथा ॥१॥
प्र-शमं गच्छ वैदेहि हनूमन्तं प्रति प्रिये ।

२] गतः स प्रियं-कृतस् ते छित्त्वा पाशान् इव द्विपः ॥२॥
स राक्षस-सहस्राणि वि-द्राव्य हरि-पुंगवः ।

३] नि-हत्य राक्षसान् वीरान् दिवम् एवोत्-पपात ह ॥३॥
अथ वि-क्रम्य सहसा सं-क्रामन् स गृहाद् गृहम् ।

४] लंकाम् आ-दीपयामास वायु-पुत्रो महा-बलः ॥४॥

५पू.] स हि पुच्छाग्र-सक्तोऽग्निर् मुक्तो मृत्यु-मुखाद् इव ।
दावाऽग्निर् इव रोषेण कपिः पावक-सन्निभः ।

९] ददाहेमां पुरीं लंकां कृत्स्नां रावण-पालिताम् ॥५॥
सेयं रोष-परीतेन क्रुद्धेनेवाऽन्तकाऽग्निना ।

१०] कृत्स्ना प्र-दीप्यते लंका शिशिरेणेव पद्मिनी ॥६॥
प्रासादाः पाण्डुराऽभ्राऽऽभा ज्वलनेन समा-वृताः ।

११] पर्वता इव दृश्यन्ते काञ्चनाऽर्जुन-धातवः ॥७॥

---

१. आ-प्रदीप्यमाने लां० । २. फ अ-शोक० । ३. प्र-स्वयं । ४. च घ म ल₁, ल₂ प्र-औपमिकीं । रा-औपायिकीं । ५. फ-नास्ति । ६. ■ रा प्र घ म ल₁, ल₂ अ-संप्रति दू० । ७. आ-विद्राव्य । ८. फ-च परांस्तथ । आ-राक्षसान्वीरो । ९. आ-संक्रमत् । १०. फ-नास्ति. । ११. आ-०सक्तोऽग्निः । फ-पुच्छाग्रसक्तोऽग्नि । च-०सिक्तोग्निः । घ-०सिक्ताग्निः । १२. फ-कोपेन । १३. फ-काल इवान्तकः । १४. फ-प्रदीप्यते । ल₂ अ-प्रदह्यते । १५. आ-पांडुराभासा । अ-पांडुरज्वालाः । १६. फ-मेघाः सेन्द्रायुधा इव ॥

अमी ज्वाला-परीतांऽगा भग्न-दंष्ट्राश् च कुञ्जराः ।

१२] राज-मार्गेषु दृश्यन्ते मेघाः सेन्द्राऽऽयुधा इव ॥८॥[2]

सम्प्रदीप्त-कैलापाऽग्रा वि-कलापाश् च बर्हिणः ।

१३] सं-क्रामन्त इवाऽऽभान्ति पुष्पिताः कमलाऽऽकराः ॥९॥[5]

क्वचित् किंशुक-वर्णाऽऽभाः क्वचिच् छाल्मलि-सन्निभाः ।

१४] रक्तोत्पल-निभाः क्वाऽपि दृश्यन्ते पावकाऽर्चिषः ॥१०॥

रावणाऽन्तः-पुरं सर्वे दह्यते सर्व-तोऽग्निना ।

१६] दह्यते ननु देशोऽयं सीते यत्र तवाऽऽसनम् ॥११॥

सा वायुना भ्रान्त-हुताऽशनाऽर्चिषा
पुरी दवाऽग्नि-प्रतिमेन सर्व-तः ।
प्र-सह्य लंकां प्लव-गेन धीमता
हुताऽशनायोप-हृता यथा बलिः ॥१२॥

१७] कपि-प्रमुक्तेन भृशेन वह्निना
प्र-सह्य लंका वर-गात्रि दह्यते ।
बलाद् बलि-श्रेष्ठ-तमेन धीमता
गताऽऽस्तुं-कल्पाश् च कृता निशा-चराः ॥१३॥

N] न सन्ति यानानि न सन्ति राक्षसा
गृहाणि अ-दग्धानि न सन्ति जानकि ।
कृता हि लंका स-गृहाऽऽसन-द्रुमा

---

१. म-अग्निज्वाला॰ । २. फ-नास्ति । ३ घ रा अ-संप्रदीप्ता क॰ । म-॰सकलापाश्च । ४. अ-संक्रामन्ति । ५. रा-नास्ति । ६. फ अ-॰पुष्पाभाः । ७ आ-निकाशाश्च । ८. ॰आ-पुरः । ९. फ अ-चैव सर्वतो दह्यतेऽग्निना । १०. आ-प्रविश्य लङ्कां । ११. आ-॰हुतो । अ-॰हिता । १२. म-॰प्रर्षिणे । १३. घ रा प्र घ म ल₁ ल₂-मृतं स । १४. अ-कालात् कपिश्रे॰ । फ म-बलाद्वरिष्ठे॰ । १५. आ-गताश्रु॰ । १६. आ-रक्षसां । १७. घ रा प्र घ म ल₁ ल₂-गृहाणि द॰ । १८. फ-॰हाचलद्रुमा । घ रा प्र घ म ल₁-॰हा वनद्रुमा । ल₂-॰हा वनेगृहा । अ-॰हा सराक्षसा ।

हुताऽशनेनाऽप्रतिमेन भस्म-सात् ॥१४॥

N] ततस् तु लंकां कुपिताऽग्नि-विद्रुतां[1]
सम्-ईक्ष्य सर्वे कुपिता निशा-चराः ।[2]
प्र-दुद्रुवुर् दारुण-दर्शना भृशं
रुराव रावं च सु-हर्षितो हरिः ॥१५॥[5]

N] पुरीं प्र-दग्धां ज्वलनेन भास्वतां
महाऽऽत्मना भामिनि सर्वतो-दिशम् ।

N] तत्राऽर्थ-सिद्धिं प्रथमं तु खे-चरा
वि-नाशम् एतं हि वदन्ति पण्डिताः ॥१६॥

कृताम् अ-बुद्धिं प्र-वदन्ति सर्व-तः

१८] कपि-प्रवीरेण निशम्य धर्षिताम् ।

१९] पुरीम् इमां रावण-बाहु-पालितां

N] वि-नश्यमानां प्रसम्-ईक्ष्य सर्व-शः ॥१७॥

ततस् तु धैर्येण विचार्य मैथिली
प्र-शाम्य शोकाऽग्निम् अपां घटैर् इव ।

---

१. श्रा–कपिरग्निविद्रुतां । फ०ज्वलिताग्निवि० । च रा प्र म ल१ ल२ श्र–०विद्रुतां । २. श्रा–समीक्ष्य सर्वां व्यथितां सुदुर्दशाम् । श्र–समीक्ष्य सर्वां मथितां सुदारुणाम् । ३. फ च रा–स । ४. च–च ह० । ५. श्रा–नास्ति । ६. श्रा–भृशं प्रदीप्तां । ७. फ–हुताऽशनार्दिताम् । ८. फ–सरावणां भाविनि । च रा प्र व म ल१ ल२ श्र–सरावणां । ९. श्रा–प्रवदन्ति । १०. फ–एवाद्वे । व म ल२–एषा हि । ११. श्रा–निशम्य धर्षिताम् । १२. श्रा फ रा प्र व ल१ श्र–नास्ति । १३. श्रा–च वदन्ति पण्डिताः । १४. व–नास्ति । १५. श्रा–मैथिलि ।

N] गता प्रसादं मधुराऽक्षरं वचो
१.२.४] निशम्य तस्या जहृषे ननन्द च [1]॥१८॥

इत्यार्षे रामायणे सुन्दर-काण्डे सरमा-वाक्यं
नामैकपंचाशः सर्गः ॥५१॥

---

१. घ–निशम्य हर्षेण ननन्द जानकी। रा प्र य म $ल_1$ $ल_2$–निशम्य तस्या जहृषे ननाद च। २. $ल_2$ अ–इति। ३. अ–लंकादाहे सरमावाक्यं। घ–सुरमावाक्यं॥

सं दीप्य-मानां वि-ध्वस्तां त्रैस्त-रत्तो-गणां पुरीम् ।
१] अवेक्ष्य हनुमांल् लंकां चिन्तयामास वि-क्लवैः ॥१॥ [२
तस्याऽऽसीत् सु-महांस् त्रासः कुत्सा चाऽऽत्मन्यू अजायत ।
N] लंकां प्र-दहता कर्म किं चि(?स्वि)द् कृतम् इदं मया ॥२॥ [३
धन्यास् ते पुरुष-श्रेष्ठा ये बुद्ध्या कोपम् उत्थितम् ।
४] नि-रुन्धन्ति महाऽऽत्मानो दीप्तम् अग्निम् इवाऽम्भसा॥३॥[४
परि-दग्धा पुरी लंका नूनम् आर्याऽपि जानकी ।
N] दग्धा तेन मया भर्तुर् हतं कार्यम् अ-जानता ॥''४॥ [९
यद्-अर्थम् अयम् आरम्भस् तत् कार्यं वि-फलं कृतम् ।
२] मया हि दहता लंकां न सीता परि-रक्षिता ॥५॥ ' [१०
ईषत्-करम् इदं कार्यम् आसीत् पूर्वं न संशयः ।
३] तस्य क्रोधाऽभि-भूतेन मया मूल-क्षयः कृतः ॥''६॥ [११
वि-नष्टा जानकी व्यू-अक्तं न ह्य् अ-दग्धः प्र-दृश्यते ।
५] लंकायां कश्चिद् उद्देशः सर्वा भस्मी-कृता पुरी ॥७॥''[१२
यद् इदं वि-हितं[20] कार्यं मम प्रज्ञा-विपर्ययात् ।''

---

१. रा प्र व ल$_1$ ल$_2$अ–संदीप्य० । २. आ–ध्वस्तरक्षो० । म–रक्षोगणसमाकुलाम् । ३. अ–समीक्ष्य । ४. फ–वानरः । ५. अ–चैव व्यजायत । ६. अ–किंस्विर्किं किं । ७. अ–दीप्यम् । ८. फ अ–यदि दग्धा । ९. च रा प्र व म ल$_1$ ल$_2$–मैथिली । १०. च रा प्र व म ल$_1$ ल$_2$–मया तथा । ११. अ–नास्ति । १२. फ–तदेवमवसादितं । म म ल$_1$ ल$_2$–वत्कार्यमफलं कृ० । १३. आ प्र ल$_1$ ल$_2$–०वकृतम् । १४. प्र ल$_1$ल$_2$–मया प्रज्ञाविपर्ययात् । १५. च रा व म अ–तेन । १६. प्र ल$_1$ ल$_2$–नास्ति ॥ १७. फ रा व म–नूनं । १८. फ–प्रकाशते । १९. फ च अ–लंकायाः क० । रा व म–धैय हि दुर्धर्षो मया । २०. आ–रहितं ।

६] इहैव प्राण-संन्यासो ममाऽपि ह्य् अभि-रोचते ॥८॥ [१३
किम् अग्नौ नि-पताम्य् आहो आहोस्विद् वडवा-मुखे ।
७] शरीरं वाऽपि सत्त्वेभ्यो ददामि मकराऽऽलये ॥९॥ [१४
कथं हि जीवता शक्यो मया द्रष्टुं हरीऽऽश्वरः ।
८] तौ वा पुरुष-शार्दूलौ कार्य-सर्वस्व-घातिना ॥१०॥ [१५
मया खलु तद् एवेदं रोष-दोषाद् प्रकाशितम् ।
९] प्रथितं त्रिषु लोकेषु कपित्वम् अनव-स्थितम् ॥[11]११॥ [१६
धिग् अस्तु राजसं भावम् अन्-ईशम् अन्-अवस्थितम् ।[11]
१०] ईश्वरेणाऽपि यद् रोषान् मया सीता न रक्षिता ॥१२॥[11][१७
वि-नष्टायां तु वैदेह्यां ताव् उभौ वि-नशिष्यतः ।
११] तयोर् वि-नाशाद् सु-ग्रीवः स-बन्धुर् वि-नशिष्यति॥१३॥[१८
एतद् एवं-विधं श्रुत्वा भरतो भ्रातृ-वत्सलः ।
१२] धर्माऽऽत्मा सेह-शत्रुघ्नः कथं शक्ष्यति जीवितुम् ॥१४॥ [१९
इक्ष्वाकु-वंशे धर्म्म-ज्ञे गते नाशम् अ-संशयम् ।
१३] नशिष्यन्ति प्रजाः सर्वाः शोक-संताप-पीडिताः ॥१५॥ [२०
तद् अहं मन्द-भाग्यस् तु लुप्त-धर्माऽर्थ-संग्रहः ।

---

१. रा प्र घ म ल$_1$ ल$_2$—॰विन्यासो । २. आ रा प्र व—ह्यपि रो॰ । च—ह्यतिरो॰ । ३. फ—निपताम्यद्य । अ—निपतान्येव । ४. आ—जीविता । ५. अ—कपीश्वरः । आ—हरीश्वरम् । ६. फ—रोषामर्षात् । रा प्र घ म ल$_1$ ल$_1$—रोषावेषाद् । ७. रा प्र घ म ल$_1$ ल$_2$—प्रथुतं । ८. च रा घ म ल$_1$ ल$_2$ अ—अयं श्लोकार्धो व्यत्यासेन पठितः । ९. रा—राक्षसं । १०. च—अनीदृम् । ११. फ—नाहिन । १२. आ—यद्रागान् । फ—मा द्वेषा । १३. व—अयं श्लोकार्धो व्यत्यासेन पठितः । १४. फ अ—एव वधं । १५. फ ल$_1$ ल$_2$—स हि दा॰ । १६. ल$_1$ ल$_2$—दाक्षोनि । १७. आ—नाशं न संशयः ॥

१४] रोष-दोष-परीताऽऽत्मा व्य्-अक्तं लोक-विनाशकः ॥१६॥ [२१
तं एवम् शोक-सम्भ्रान्तं निमित्तान्य् उप-पेदिरे ।
१५] पूर्वम् अप्य् उप-लब्धानि शनैः पुनर् अचिन्तयत् ॥१७॥ [२२
अथ-वा चारु-सर्वाऽङ्गी रक्षिता स्वेन तेजसा ।
१६] न नशिष्यति कल्याणी नाऽग्निर् अग्नौ प्र-वर्तते ॥१८॥ [२३
तस्य धर्माऽऽत्मनो भार्यां साध्वीम् अमित-तेजसः ।
१७] स्व-चारित्राऽभि-गुप्तां तां स्प्रष्टुं नाऽर्हति पावकः ॥१९॥ [२४
नूनं राम-प्रभावेन वैदेह्याः सु-कृतेन च ।
१८] येन मां दहन-कर्माऽपि नाऽदहद् हव्य-वाहनः ॥२०॥ [२५
त्रयाणां भरताऽऽदीनां भ्रातॄणां देव-वर्चसाम् ।[14]
१९] रामस्य च मनः-कान्तां तां कथं सम्प्र-धक्ष्यति ।[15] [२६
N] नाऽदहन् मम लाङ्गूलं कथम् आर्यां प्र-धक्ष्यति ॥२१॥[16] [२७उ
व्रतोप-वास-निरतां नित्यं राम-परायणाम् ।[17]
२०] कथं तां धक्ष्यते ह्य् अग्निर् अतितीव्र-व्रते स्थिताम् ॥२२॥[N
तपसा सत्य-संवादाद् अन्-अन्यत्वाच् च भर्तरि ।
२१] अपि सा निर्-दहेद् अग्निं न ताम् अग्निः प्र-धक्ष्यति ॥२३॥[२९

---

१. ल२–शोक० । २. फ–०संतप्तं । ३. रा प्र घ ल१ ल२–नास्ति । ४. च–साक्षात् पु० । म–स भूयः पर्यचिन्तयत् । अ–सूक्ष्माण्यवगतानि च । ५. रा प्र घ ल१ ल२–नास्ति ॥ ६. फ अ–ब्रह्मस्य भार्यां । ७. ल१ ल२–तामतिते० । ८. ल१ ल२–०भिगुप्तस्य । ९. फ–दग्धुमर्हति । १०. आ–०प्रभावमनःकान्तां कथमग्निः प्रधक्ष्यति । च प्र ल१ ल२–०प्रभावेन वैदेह्यास्तपसापि वा । रा घ म–०प्रभावेण वैदेह्यास्तपसापि वा । ११. आ फ ल१ अ–यदा । १२. आ–सर्वत्राप्रतिमः पुनः । १३. फ च रा घ प्र म ल१ ल२–चैव तेजसा । १४. प्र म ल१ ल२–यदा दहनकर्मायं सर्वत्राप्रतिमः प्रभुः । अ–यदा दहनकर्मायं सर्वत्राप्रतिमप्रभः । १५. फ–मनःकांता कथं नाशमवाप्नुयात् । च रा प्र घ म ल१ ल२–मनःकांतां नित्यं रामपरायणां । १६. आ–नास्ति । १७. च रा प्र घ म ल१ ल२–नास्ति । १८. फ–०परमां । १९. च रा प्र घ ल१ ल२–नास्ति । २०. प्र म ल१ ल२–दह्यते । २१. फ–

स तथा चिन्तयंस् तत्र देव्या धर्म-परिग्रहम् ।
२२] शुश्राव हनुमान् वाचं चारणानां मनस्-विनाम् ॥२४॥ [३०
अहो खलु कृतं कर्म दुर्वि-षह्यं हनूमता ।
२३] अग्निं वि-सृजता भीमं भीमे राक्षस-मन्दिरे ॥२५॥ [३१
दग्धेयं नगरी सर्वा साऽट्टि-प्राकार-तोरणा ।
२४] जानकी च न दग्धेति वि-स्मयोऽभून् महान् हि नः॥२६॥[३३
इति शुश्राव हनुमान् वाचं ताम् अ-मृतोपमाम् ।
N] बभूव चाऽस्य मनसो हर्षस् तत्-काल-सम्भवः ॥२७॥[३४
स निश्चित्याऽथ दृष्टाऽर्थैः कारणैश् च महा-गुणैः ।
२५] ऋषि-वाक्यैश् च हनुमान् अभवत् प्रीत-मानसः ॥२८॥[३५
ततः कपिः प्राऽऽप्त-मनोरथाऽर्थस्
२६पू] ताम् अ-क्षतां राज-सुतां च श्रुत्वा ।
प्रत्यक्ष-तस् तां पुनर् एव द्रष्टुं
N] प्रति-प्रयाणाय मतिं चकार ॥२९॥ [३६

इत्यार्षे रामायणे सुन्दर-काण्डे हनुमच्चिन्तो
नाम द्विपंचाशः सर्गः ॥ ५२ ॥

---

१. प्र म ल, ल₂ अ-चाचरु । २. फ-लंका । ३. आ-साद्रमा० । फ-स्प्तमा० । ४. फ अ-विस्मयोद्भवमेव च । ५. प्र-अभवत् प्रीतमानसः । ६. फ-नास्ति । ७. च-निश्चित्यार्थदृष्टार्थो । प्र य म ल, ल₂-०त्याथ दृष्टार्थः । अ-संनिमित्ते च दृष्टार्थः । ८ फ-नास्ति । ९. आ-विदित्वा । १०. ल₂-इति । ११. फ अ-सीतानुशोचनं ॥

ततस् तु शिंशपा-मूले जानकीं पर्यवं-स्थिताम् ।
N] अभि-गम्याऽब्रवीद् दृष्ट्वा देवि यास्यामि चा(ऽत्वा)ऽश्वताम्[6] १[१
२उ] तरस् तं प्र-स्थितं दृष्ट्वा वीऽऽक्षमाणा पुनः पुनः ।
भर्तृ-स्नेहाद् इदं भर्त्तुः सु-हृदं तम् अथाऽब्रवीत् ॥२॥ [२
३] यदि[10] त्वं[11] मन्यसे तात वसैकाऽहम् इहाऽन्-अघ[12] ।
कचिन् सुसं-वृते देशे वि-श्रान्तः श्वो गमिष्यसि ॥[13] ३॥[३
४] मम चैवाऽल्प-भाग्यायाः सान्निध्यात् तव वानर ।
शोकस्याऽस्याऽप्रमेयस्य मुहूर्त्तं स्याद् अपि क्षयः ॥४॥ [४
५] गते हि हरि-शार्दूले (ऽल) पुनः सं-प्रोऽऽप्तये त्वयि ।
प्राणेष्व् अपि न वि-श्वासो मम वानर-पुंगव ॥५॥ [५
६] अ-दर्शनं च ते[18] वीर भूयो मां तापयिष्यति ।
दुःखाद् दुःख-तरं भूयो प्र-यास्ये शोक-कर्षिता ॥६॥ [६
७] अयं च वीर सं-देहस् तिष्ठतीऽव ममाऽग्र-तः ।
सु-महत्सु सहायेषु हर्य्-ऋक्षेषु महाऽऽत्मनः ॥७॥ [७

---

१. घ अ–शिंशिपा० । २. आ–पर्यवारिताम् । च–पर्युपस्थिताम्। रा म–प्रस्थत० । ३. रा घ म ल$_1$ ल$_2$ अ–०अभिवाद्य० । ४. फ–दृष्टो । रा ल$_1$ ल$_2$ अ–दृष्ट्वा । ५. आ ल$_1$ ल$_2$–दिष्ट्या पश्यामि चाक्षताम् । रा घ–वीक्षमाणः पुनः पुनः । ६. प्र–नास्ति । ७. आ फ घ–०क्षयमाणं । ८. फ–मुहुर्मुहुः । ९. रा–नास्ति । १०. अ–यदिदं । ११. च रा म ल$_1$ ल$_1$–उावद् य० । अ–आत शांतो वासम् । १२. फ–अरिन्दम । अ–इह कचित् । १३. म–इत आरभ्य २०–श्लोकप्रथमपादान्तः पाठो नास्ति । १४. आ–मुहूर्तं गमने । १५. फ अ– इह । १६. फ–ते हि । १७. फ अ–प्राप्य । १८. फ अ–दुर्मनस्कां सभागिनीम् । आ–दुर्मना शोककर्शिताम् । ल$_1$–प्रवासे शो० । १९. च रा प्र घ ल$_1$ ल$_2$ अ–सुमहांस्त्वतस० । फ–सुमहांस्त्वत्स० । २०. आ फ अ–महाबलः ॥

८] कथं नु खलु दुष्-पारं तरिष्यन्ति च सागरम् ।
तानि हर्य्-ऋक्ष-सैन्यानि तौ चोभौ राम-लक्ष्मणौ ॥८॥ [८

९] त्रयाणाम् एव भूतानां सागरस्येह लंघने ।
शक्तिः स्याद् वैनतेयस्य तव वा मारुतस्य वा ॥९॥ [९

१०] तद् एतत्-कार्य-निर्बन्धे समुत्-पन्ने दुरा-सदे ।
किं पश्यसि समा-धानं त्वं हि कार्य-विदां वरः ॥१०॥ [१०

११] कामम् अस्य त्वम् एवैकः कार्यस्य परि-साधने ।
१२पू] पर्य्-आप्तः पर-वीरघ्न किं नु सर्वं सुसं-हर्ताः ॥११॥ [११

१४उ] बलैस् तु सं-कुलां कृत्वा लंकां पर-बलाऽर्दनः ।
१५पू] मां नयेद् यदि काकुत्स्थस् तत् तस्य सदृशं भवेत् ॥१२॥ [१२

शरैस् तम् उग्रैर् यदि मां युधि निर्-जित रावणम् ।
N] वि-जयी स्वं पुरं रामो नयेत् तत् स्याद् यशस्-करम् ॥१३॥ [N

१५उ] तद् यथा तस्य वि-क्रान्तम् अनु-रूपं महाऽऽत्मनः ।
भवत्य् आहव-शूरस्य तथा त्वम् उप-पादय ॥१४॥ [१३

१६] तद् अर्थोप-हितं वाक्यं प्र-श्रितं हेतु-संयुतम् ।
नि-शम्य हनुमांस् तत्र वाक्यम् उत्तरम् अब्रवीत् ॥१५॥ [१४

---

१. आ—पारमेष्यति । ब प्र ल$_1$ ल$_2$ अ—पारमेष्यन्ति । २. फ अ—पा नरवरात्मजौ । ३. फ—सागरस्यापि । रा ल$_2$—॰रस्यास्य । घ प्र—॰रस्यास्ति । ल$_1$ अ—निसागरस्यावर्ल॰ । ४. आ—च । ५. फ अ—तत्र कार्यस्य नि॰ । घ—यदत्र कार्यनि॰ । रा प्र ब ल$_1$—तदत्र कार्यनि॰ । ल$_2$—॰यनिर्वेदसमु॰ । ६. फ—॰विशारदः । ७. प्र—॰वीर्यघ्न । फ—॰रामस् । ८. फ—त्वय्येतदु-दितं मम । घ रा प्र ब ल$_1$ ल$_2$—न त्वेतदुचितं मम । ९. फ—बलैश्च । प्र—बलैस्त्वमं॰ । १०. फ—॰र्दन ॥ ११. फ घ अ—उग्रं । १२. घ प्र ब—युधि । १३. ल$_1$—विजित्य । १४. रा ल$_1$—स्वपुरं । १५. आ—तस्य । १६. फ—शूरस्य । १७. रा प्र य ल$_1$—॰पादयेः । ल$_2$—॰पादये ॥ १८. फ—तद्धोपधिकं । १९. फ घ अ—प्रमृतं । २०. प्र ब ल$_1$ ल$_2$ अ—उदय ॥

१७] देवि हर्य्-ऋक्ष-सैन्यानाम् ईश्वरः प्लवतां वरः ।
सु-ग्रीवः सत्त्व-सम्पन्नस् तवाऽर्थे कृत-निश्चयः ॥१६॥ [१५
१८] स वानर-सहस्राणां कोटि-कोटीभिर्¹ आ-वृतः ।
१९पू] क्षिप्रम् एष्यति वैदेहि सु-ग्रीवः² प्लव-गाऽधिपः ॥१७॥ [१६
तौ च वीरौ नर-वरौ सहितौ राम-लक्ष्मणौ ।
N] आ-गम्य³ नगरीं लंकां सायकैर् वि-धमिष्यतः ॥१८॥ [१७
२०उ] स-गणं राक्षसं हत्वा न-चिराद् रघु-नन्दनः ।
त्वाम् आ-दाय वराऽऽरोहे स्वां पुरीं⁴ प्रति-यास्यति ॥१९॥ [१८
२७] समा-श्वसिहि भद्रं⁵ ते भव त्वं काल-कांक्षिणी ।
क्षिप्रं द्रक्ष्यसि रामेण नि-हतं रावणं रणे ॥२०॥ [१९
२८] नि-हते राक्षसेन्द्रे च⁶ स-मित्राऽमात्य-बान्धवे⁷ ।
त्वं सम्-एष्यसि रामेण शशाऽङ्केनेव रोहिणी⁸ ॥२१॥ [२०
एवम् आ-श्वास्य वैदेहीं हनुमान् मारुताऽऽत्म-जः ।
२९] गमनाय मतिं कृत्वा जानकीम् अभ्य्-अवादयत् ॥२२॥ [२२
अ-सत्यानि हि युद्धानि तथा जय-पराजयौ ।
N] दृष्ट्वा च सीतां वैदेहीं⁹ श्रेयो मे गमनं त्व् इतः ॥२३॥ [N

इत्यार्षे रामायणे सुन्दर-काण्डे लंका-दाहे हनुमत्-सीताऽऽश्वासनं नाम त्रिपंचाशः सर्गः ॥५३॥

---

१. फ-कोटीभिरभिसंवृतः । रा भ य ल₁ ल₂-कोटिकोटिभिरावृ० । २. फ-प्रियदृत्ते महाबलः । रा-सुग्रीवः प्लवतां वरः । ३. रा भ य ल₁ ल₂-आगम्य । ४. फ अ-पुरीमभियास्यति । ५. अ-तु । ६. फ रा अ-सुग्रामा० । आ-०त्ययान्धवैः । ७. अ-पक्षे । ८. रा भ य स ल₂-अगम्या निश्चला लक्ष्मीस्तथा । ल₁-अगम्या निश्चला सर्वाम्बया । ९. रा भ म ल₁ ल₂ अ-दृष्टा हि सीता वैदेही । १०. ल₂-दृति । अ-दृष्टाहं । ११. फ रा म ल₁ ल₂-हनूमता सीता० । भ अ-सीताश्वासनं ।

N] राक्षसं-प्रवरान् हत्वा नाम वि-श्राव्य चाऽऽत्मनः ।[2]
१पू] नगरीम् आकुलां कृत्वा हत्वा[3] च[4] प्र-वरं बलम् ॥१॥ [२३
N] पुनर् दृष्ट्वा च वैदेहीं व्यथयित्वा च रावणम् ।[5]
१उ] दर्शयित्वा[6] बलं घोरं वैदेहीम्[7] अभि-वाद्य च ।
N] प्रति[8]-गन्तुं मतिं[9] चक्रे[10] पुनर् मध्येन सागरम् ॥२॥[11] [२४
ततः[12] स कपि-शार्दूलः स्वामि-संदर्शनोत्सुकः[13] ।
२] आ-रुरोह गिरिं मुख्यम्[14] अरिष्टम् अरि-सूदनः ॥३॥ [२५
शीतं[15]-मारुत-जुष्टाभिर् नीलाभिर् वन-राजिभिः । [N
३] शाल-तालाऽश्व-कर्णैश् च वन्यैश् च बहुभिर् वृतम् ॥४॥ [३३उ
लता-वितानैर् बहुभिः[16] पुष्पवद्भिर् अलंकृतम्[17] ।
४] नाना-मृग-गणाऽऽकीर्णं धातु-निष्यन्द[18]-भूषितम् ॥५॥ [३४
बहु-प्रस्रवणोपेतं शिलो[19]-संचय-संकटम् ।

---

१. आ–राक्षसान् प्र०। २. अतःपरमधिकः पाठः–अ–समाश्वास्य च वैदेहीं धारयित्वा पुरं बलम् । ३. प्र–प्रहत्वा । ४. अ–नास्ति ॥ ५. म अ–नास्ति । अतः परमधिकः पाठः–आ–दर्शयित्वा बलं घोरं वञ्चयित्वा च रावणम् *। ६. आ–दर्शनाय । ७. फ–मैथिलीम् । ८. थ म ल$_1$,ल$_2$–उ । ९. आ फ रा थ प्र अ–प्रत्यागन्तुं । १०. फ रा थ प्र अ–मनश्चक्रे । ११. म–नास्ति ॥ १२. म–पुनः । १३. फ–स्वामिनो द० । १४. प्र–गिरिमुत्तमम् ॥ १५. आ–तुङ्गपद्मकजु० । फ–तुङ्गपर्वतपुष्पाभिर् । थ रा अ–तुङ्गमारुत० । १६. फ अ–विविधैः । १७. फ–अलंकृतैः । १८. फ–०विस्यन्दम्० । थ प्र म–०निष्यन्दम्० । ल$_1$ ल$_2$–०निष्यन्दशोभितम् ॥ १९. फ प्र–शिलासंचयकंटकम् । ल$_1$–शिलाभिश्च समुत्कटम् ।

---

* अ–नगरीमाकुलां कृत्वा वञ्चयित्वा च रावणम् ।

५] महर्षि-यक्ष-गन्धर्व-किन्नरोरग-सेवितम् ॥६॥ [३५
लता-पादप-संबाधं सिंहाऽऽकुलित-कन्दरम् ।
N] व्याघ्र-द्वीपि-समाकीर्णं स्वादु-मूल-फल-द्रुमम् ॥७॥ [३६
समाऽऽरुरोहाऽति-बलः पर्वतं प्लव-गोत्तमः ।
६] राम-दर्शन-शीघ्रेण प्र-हर्षेण प्र-चोदितः ॥८॥ [३७
तेन पाद-तला(तैर्को)ऽऽक्रान्ता रम्येषु गिरि-सानुषु ।
७] स-घोषम् अभ्य्-अशीर्यन्त शिलाश् चूर्णी-कृतास् ततः ॥९॥ [३८
स तम् आ-रुह्य शैलेन्द्रं व्य्-अवर्धत महा-कपिः ।
८] दक्षिणाद् उत्तरं पारं प्रार्थयंल् लवणाऽम्भसः ॥१०॥ [३९
अधि-रुह्य ततो वीरः पर्वतं पवनाऽऽत्म-जः ।
९] ददर्श सागरं भीमं मीनोरगै-निषेवितम् ॥११॥ [४०

---

१. आ—महर्षिभिर्यक्ष० ॥ २. आ—सिद्धसेवितक० । ल१—मुनिसेवितक०
३.—आ—०सिंहस० । ४. अतः परमधिकः पाठः—म—
सोत्तरीयमिवाम्भोदैः शृंगान्तरविलंबिभिः । परिधानमिवाबद्धनानावल्लतावृतम् ॥
बोध्यमानमिव प्रीत्या दिवाकरकरैः शुभैः । उन्मिषन्तमिवोद्धूतैर्नयनैरिव धातुभिः ॥
तोयोत्पलस्वनैर्मन्दैः प्रगीतमिव सर्वतः । देवदारुभिरुद्धूतैरूर्ध्वबाहुमिव स्थितम् ॥
प्रस्खलज्जलसंपातैर्वेपन्तमिव सर्वतः । धावन्तमिव विस्पष्टैर्नानाप्रस्रवणस्वनैः ॥
आगलन्तमिवाम्भोदैरश्मशैलैश्चलाचलैः । विस्तीर्णोपलजिह्वामद्विजिह्वमिव पन्नगम् ॥
वेपमानमिव श्यामैः स्कन्धमात्रशिलोच्चयैः । प्रपातजलनिष्यन्दैः प्रोत्फुल्लमिव सर्वतः ॥
आलिखन्तमिवाकाशमूर्ध्वैर्गण्डशैलैश्चलाचलैः । विकर्णाकरबाहूरुं शरीरमिव वारणाम् ॥
वेणुभिर्मारुतोद्धूतैः कूजन्तमिव कीचकैः । निश्वसन्तमिवामर्षाद् घोरैराशीविषोल्बणैः ॥
नीहारमिव गम्भीरैर्ध्यायन्तमिव गह्वरैः । मेघराजिनिभैः पादैः प्रक्रान्तमिव सर्वतः ॥
शृंगमाणमिवाकाशे शिखरैरभ्रमालिभिः । गुहावरगतैः सिंहैर्गर्जन्तमिवाधिष्ठितैः ॥
लतागृहसमाकीर्णं कुंजैर्बहुभिः संवृतम् । निकुंजैर्विविधाकारैश्चन्दनैश्च समावृतम् ॥
५. फ अ—समारु० । ६. म ल१ ल२—स हर्षेण । ७. रा—नास्ति ।
८. आ—पादलताक्रां० । फ घ—पादलताक्रान्ता । ल१—पादतलक्रा० ।
९. आ—सर्वेषामवशी० । घ—सघोषमवशी० । १०. रा—नास्ति । ११. फ—तीरं ।
१२. म ल१ ल२—पर्यद्रल् । १३. प्र—अभि० । १४. फ—मीननक्रानि० ॥

स मारुतं इवाऽऽकाशे मारुतस्यौरसः सुतः।
१०] प्र-पेदे हरि-शार्दूलः पितुः पन्थानम् उत्तमम् ॥१२॥ [४१
सं तथा पीडितस् तेन कपिना पर्वतोत्तमः।
११] सैर्वैश् च सहितः सत्त्वैः प्रै-विवेश मही-तलम् ॥१३॥
कंप-मानैश् च शिखरैः पतद्भिश् चाऽचलोपॅलैः। [४२
१२] स गिरिः त्तोभितस् तेन प्र-नृत्त इव दृश्यते ॥१४॥ [N
तस्योरु-वेगोन्मॅथिताः पादपाः पुष्प-शालिनः।
१३] नि-पेतुर् भू-तले भग्नाः शक्र-वज्रोऽऽहता इव ॥१५॥ [४३
कन्दॅराऽन्तर-संस्थानां पीडितानां महाऽऽत्मनाम्।
१४] सिंहानां नि-नदो भीमो मेघानाम् इव शुश्रुवे ॥१६॥ [N
अॅर्द्ध-प्रवृद्ध-वसना व्याकुली-कृत-भूषणाः ।
१५] प्रॅ-पेतुश् चाऽङ्गनास् त्रॅस्ताः सहसा धरणी-धरॉद् ॥१७॥[N
किन्नरोरग-गन्धर्वा यक्ष-विद्याधरास् तथा।
१६] पीडितं तं नगॅ-वरं त्यक्त्वा गगनमॅ आ-स्थिताः ॥१८॥[४७
अतिप्र-मार्णॉ वलिनो दीप्त-जिह्वा महा-विषाः।
१७] निपीडित-शिरो-ग्रीवा व्यू-अचेष्टॅन्त महोर-गाः ॥१९॥[४६॥

---

१. फ–मारुतमिवाकाशं। २. फ–ततःप्रपीडितस्। ३. आ–रराम सहितैर्वृक्षैः। अ–रराम सहितैर्वृक्षैः। फ–जगाम सहसत्वैश्च। च–सोपि च सहितैः सर्वैः। रा म–सर्वैश्च सहितैः। ४. आ फ–प्राविशच्च। ५. आ–०लोत्तमैः। आ–०लोपमैः। ६. फ अ–लक्ष्यते। ७. फ–०वेगमथिताः। च रा प्र व म ल$_1$ ल$_2$–०वेगमाश्रिताः। अ–०वेगाद्बलिनः। ८. फ अ–०शोभिताः। च रा प्र व ल$_1$ ल$_2$–शोभिनः। ९. फ च रा प्र व म ल$_1$ ल$_2$ अ–०वज्रहता। १०. अ–कन्दरादरसं०। ११. फ–तास्ता प्र०। च प्र व म ल$_1$ ल$_2$ अ–स्रस्तप्रवृ०। रा–स्रस्तप्रवृद्धव्यसना। १२. फ–समुत्पेतुश्चाप्सरसः। १३. फ रा म–०तले। १४. रा प्र व म ल$_1$ ल$_2$ अ–गिरिवरं। १५. ल$_1$ अ–गमनम्। १६. फ अ–०प्रमाणबलिनो। १७. म–व्यवेष्टन्त॥

क्वचित् सुस्राव सलिलं क्वचिद् रजत-निस्स्रवम् ।
१८] धातून् अन्यांश् च वि-विधान् महा-प्लवग-पीडितैः ॥२०॥[N
स चाऽपि भू-धरः श्रीमान् बलिना तेन पीडितः ।
१९] सवृक्ष-शिखरोदग्रः प्र-विवेश रसा-तलम् ॥२१॥ [४८
दश-योजन-विस्तारो त्रिंशत्-उच्छ्राय-योजनः ।
N] धरण्यां समतां यातो बभूव स मही-धरः ॥२२॥ [४९

इत्यार्षे रामायणे सुन्दर-काण्डेऽरिष्ट-पर्वत-सूदनं
नाम चतुर्पञ्चाशः सर्गः ॥५४॥

---

१. फ–क्वचिच्छुस्राव। अत्र व्ययान्तिर्भावः द्र०। २. आ–रजतसन्निभम्। रा म–क्वचिज्जलदनिस्वनम् । व प्र ल$_1$ ल$_2$ अ–क्वचिद् रजतनिस्वनम्। ३. आ–॰पीडिताः । ४. फ अ–च भूमिधरः । रा प्र व म ल$_1$ ल$_2$–चाऽपि पर्वतः। ५. फ अ–प्रतिपीडितः । ६. ल$_1$–॰रोदग्रः । ७. फ–॰नविस्तीर्णस्त्रिंशद्योजनमुच्छ्रितः। अ–॰विस्तारो त्रिंशद्योजनमुच्छ्रितः । ८. रा व ल$_2$–धरण्याः। ९. फ अ–जातः स बभूव धराधरः । १०. रा–श्रीरामायणे। ११. आ–इत्यार्षेऽरिष्टसूदनं नाम सर्गः । ल$_2$–इति सुन्दर-काण्डेऽरिष्टदर्शनं नाम सर्गः । अ–इत्यार्षे रामायणेऽरिष्टप्लवनो नाम सर्गः । फ–इत्यार्षे रामायणे सुन्दरकाण्डे वाल्मीकीये हनुमत्प्रत्यागमनं नाम सर्गः ॥

N] आ-प्लुत्य च महा-वेगः पक्ष-वान् इव पर्वतः ।
स चन्द्र-कुमुदं रम्यं सूर्य-कारण्डवं शुभम् ।
१] पुष्य-श्रवण-कादम्बम् अभ्र-शैवल-शाद्वलम् [4]॥१॥ [१
पुनर्वसु-महामीनं रक्ताऽङ्ग-ग्राह-भीषणम् ।
२] ऐरावत-महाद्वीपं स्वाति-हंस-विलोलितम् ॥२॥ [२
वात-संघात-भीमोर्मि चन्द्रांऽशु-शिशिरांऽम्बुदम् ।
३] भुजङ्ग-यक्ष-गन्धर्व-समृद्ध-कमलोत्पलम् ॥३॥ [३
ग्रस-मानं इवाऽऽकाशं तारा-पतिम् इवोल्-लिखन् ।
N] हरन्न् इव स-नक्षत्रं गगनं सांऽर्क-मण्डलम् ॥४॥ [५
अ-पारम् अ-परिश्रान्तैः खोंऽम्बुधिं समं-अगाहत । [६उ
४] दिशो नादेन महता पूरयन् मेघ-निस्वनः ॥५॥[15] [१०पू

---

१. म-इतः पूर्वमयं पाठः—संकोच्य च कपेः कर्णौ बाहुभ्यां पीड्य पर्वतम् । संनिरुध्य हरिः प्राणमुपपात महाबलः ॥ देवराजध्वजाकारं कपिलं रोमभिश्चितम् । विपरिक्षिप्य लांगूलमध्वानं महदास्थितः ॥ २. घ प्र ल$_2$–चन्द्रकुसुमं । ३. घ अ–॰शैवालशाड्वलम् । रा व प्र म ल$_1$ ल$_2$–॰शैवलशाद्वलम् । ४. आ–पुष्यश्रवणकादम्बं तत्र तोयदशाद्वलम् । ५. प्र–पुनर्वसुम॰ । ल$_2$–पुनर्वसुमहाभीमं । ६. आ–रक्तांगं ग्रा॰ । घ घ रा प्र ल$_2$–चक्रांगग्रा॰ । ७. रा–॰महाद्विपं । ८. फ–॰सविदोलितम् । ल$_1$ अ–॰सविलोहितम् । ९. ल$_2$–वायुसं॰ । अ–वातसंपात॰ । १०. आ–॰शिशराम्बु॰ । ११. फ–ग्रसमानमिवा॰ । १२. फ–मेन्दुमं॰ । १३. फ–॰श्रान्तो । १४. फ–स्वर्गं पतिमगाहत । रा व प्र म ल$_1$ ल$_2$–॰धिं समगाहत । १५. अतः परमधिकः पाठः—फ च–मारुतस्यात्मजः श्रीमान् कपिर्व्योमचरो महान् । संप्रच्छाद्येव गगनं वर्षन्निव दिशो दश ॥ हनूमान् मेघजालानि विकर्षन्निव गच्छति । बाहुभ्यामन्तरे सक्तं मेघजाल-

तं श्रुत्वा निनदं घोरं वानरास् ते हनूमतः ।[1]

५] आसन् संहृष्ट-मनसः सुहृद्-दर्शन-लालसाः ॥६॥ [२१

जाम्बवांस् तु हरि-श्रेष्ठः प्रीति-संहृष्ट-मानसः ।

६] उपाऽऽमन्त्र्य हरीन् सर्वान् साऽङ्गदान् वाक्यम् अब्रवीत् ७[6]२२

सर्व-था कृत-कार्योऽसौ[7] हनूमान् नाऽत्र संशयः ।

७] न ह्य् अस्याऽकृत-कार्यस्य वेग एवं-विधो भवेत् ॥८॥ [२३

तस्य बाहूऽऽरु-वेगं च निनदं च महाऽऽत्मनः ।

८] सं-श्रुत्य हरयो हृष्टाः समुत्-पेतुः समन्त-तः ॥९॥ [२४

ते नगाऽग्रान् नगाऽग्राणि शिखराच् छिखराणि च ।

९] प्र हृष्टाः सम्-अपद्यन्त हनूमन्तं दिदृक्षवः ॥१०॥ [२५

ते स्थित्वा पादपाऽग्रेषु द्रुम-शाखाः सु-पुष्पिताः ।[11]

---

सपांडुरम् ॥ उत्तरीयमिवासक्तमासीत्तस्य महाकपेः । पाण्डुरारुणवर्णानि नीललोहितकानि च ॥ कपिना कृष्यमाणानि महाभ्राणि चकाशिरे । स जगाम महातेजाः पुनर्मध्येन सागरे ॥ पर्वतेन्द्रं सुनाभं च संस्पृश्यैकेन पाणिना । ज्यामुक्त इव नाराचो महावेगमुपागमत् ॥ स च किञ्चिदनुप्राप्तः समालोक्य महागिरिम् । ननाद सुमहन्नादं मेघनादसमस्वनः ॥ स दृष्ट्वा पर्वतश्रेष्ठं सुहृद्दर्शनकर्षितः । प्रहर्षमतुलं लेभे हनूमान् मारुतात्मजः ॥

१. फ घ—ते तस्य निनदं श्रुत्वा सर्व एव वनौकसः । २. फ—भाराशंसुहृं॰ । ३. फ घ प्र—॰नकांक्षिणः ॥ ४. आ—जाम्बवांस्तु । फ श्र रा व प्र म ल$_1$ ल$_2$—जाम्बवांश्च । ५. रा व प्र म ल$_1$ ल$_2$—संप्रहृष्टतनूरुहः । ६. घ—७—मश्लोकादारभ्य २०—दश्लोकान्तः पाठो नास्ति ॥ ७. फ—कृतकर्मासौ । ८. फ—॰वकृयस्य । ९. व प्र म ल$_1$ ल$_2$—॰रुवेगेन । श्र—बाहुरवेनैव । १०. व प्र म ल$_1$ ल$_2$—दिदृक्षया ॥ ११. फ—ते प्रीताः पादपाग्राणि द्रुमशाखाश्च पुष्पिताः । श्र—ते स्थिताः पादपाग्रेषु द्रुमशाखासु वानराः ।

१०] वासांसीऽव प्र-काशानि समाऽविध्यन्त वानराः॥११॥ [२६
उत्तमं वेगम् आ-स्थाय हर्षाद् द्वि-गुण-विक्रमैः ।
११] आ-जगाम महा-तेजाः पुनर् मध्येन सागरम् ॥१२॥ [N
पर्वतेन्द्रं सु-नाभं च स तु सं-स्पृश्य पाणिना ।
१२] ज्या-मुक्त इव नाराचो महा-वेगम् उपाऽऽगमत् ।
मारुतस्याऽऽत्मजः श्रीमान् कपिर् व्योम-चरो महान्॥१३॥ [N
१३] स प्र-च्छायैव गगनं कर्षन्न् इव दिशो दश ।
हनूमान् मेघ-जालानि वि-कर्षन्न् इव गच्छति ॥१४॥ [N
१४] वायोर् अन्तर-संयुक्तं मेघ-जालं च पाण्डुरम् ।
N] उत्तरीयम् इवाऽऽसक्तम् आसीत् तस्य महा-कपेः॥१५॥ [N
पाण्डुराऽरुण-वर्णानि नील-लोहितकानि च ।
१५] कपिनाऽऽकृष्यमाणानि महाऽभ्राणि चकाशिरे ॥१६॥ [N
चालयन् मेघ-वृन्दानि लंघयंश् च पुनः पुनः ।
१६] प्र-च्छन्नं च प्र-काशं च चन्द्रमा इव लक्ष्यते ॥१७॥ [N
स किंचिद् अनुसंप्राप्तं समा-लोक्य महा-गिरिम् ।
१७] अनदद् हनुमान् नादं मेघ-नाद-सम-स्वनम् ॥१८॥ [N

---

१. आ—वासांसि च । २. फ—प्रसंविध्यन्त । ३. ल१—०णसंभ्रमः । ल२—०णविक्रमः । ४. फ—१२-शश्लोकादारभ्य, २०-शश्लोकं यावत्पाठो नास्ति ॥ ५. य प्र म ल१, ल२—समुपस्पृश्य । अ—स [illegible] संस्पर्श ॥ ६. अ आ—मारुतस्यालयं । ७. आ रा य प म ल१, ल२—श्रीमत् । ८. ल१—संप्रच्छायेव । अ—संफाल्यैव । ९. [illegible] ल, ल२—विकिरन्निव । १०. आ—वायुम्याम्बरे सक्तं । ११. रा—नास्ति ॥ १२. अ—कपेराकृ० । १३. आ—चकाशिरे । १४. रा य प्र म ल१, ल२—०पगतं । १५. रा य प्र म ल१, ल२—प्रच्छन्नश्च प्रकाशश्च ॥ १६. रा—कंचिदनु० । आ—किंचिदनुसंप्राप्तः । १७. ल२—महामुनिम् । १८. प्र म ल२—व्यनदद् ह० । ल१—व्यनदद् बहु संनादं ।

स दृष्ट्वा पर्वत-श्रेष्ठं सुहृद्-दर्शन-हर्षितः ।[2]
N] प्र-हर्षम् अ-तुलं लेभे हनुमान् मारुताऽऽत्म-जः ॥१९॥ [N
ते तस्य निनदं श्रुत्वा सर्वे एव वनौकसः ।
N] आसन् संहृष्ट-मनसः सुहृद्-दर्शन-कांक्षिणः ॥२०॥[3] [N
तम् अद्रि-घन-संकाशम् आ-पतन्तं महा-कपिम् ।
१८] दृष्ट्वा ते वानराः सर्वे तस्थुः प्राञ्जलयस् तदा ॥२१॥ [२८
तस्यैव च गिरेः शृङ्गे नि-पपात महा-जवः ।
१९] नि-षसाद महेन्द्रस्य मारुतिः पादपाऽऽकुले ॥२२॥ [२९
ततस् ते प्रीत-मनसः सर्वे वानर-पुङ्गवाः ।
२०] हनूमन्तं महाऽऽत्मानं परि-वार्योप-तस्थिरे ॥२३॥ [३१
उपाऽयनानि चाऽऽदाय मधूनि च फलानि च ।
२१] परि-वार्याऽर्चयन्ति स्म मारुतस्यौरसं सुतम् ॥२४॥ [३२
वि-नेदुर् मुदिताः केचिच् चक्रुः किलकिलां तथा ।
२२] हृष्टाः पादप-शाखाश् च वि-निन्युर् वानरर्षभाः ॥२५॥ [३४
हनुमांस् तु गुरुं वृद्धं जाम्ब-वन्तं महा-कपिम् ।
२३] कुमारम् अङ्गदं चैवाऽभ्य्-अवन्दत महा-बलम् ॥२६॥ [३५
स ताभ्यां पूजितः पूज्यः कपिभिश् च सभाजितः ।

---

१. आ—०नकांक्षिणः । प्र—०वहर्षतः । २. अ—नास्ति । ३. अ आ ल$_2$—नास्ति ।
४. आ—तमिन्द्रघ० । म—तमभ्रघ० । ५. ल$_2$—०यस्तथा॥ ६. फ अ—स तस्यैव ।
७. फ च प्र ल$_2$—शृङ्गं । ८ फ—निपतत्सुमहा० । ९. च—०पाकुलं ॥
१०. आ—प्रीतिमनसः ॥ ११. आ—०किलांस्तथा । अ—०किलास्तथा ।
रा व प्र म—०किलां परे । ल$_1$ ल$_2$—०किलां च ते । १२. आ—आनिन्युर् ॥
१३. फ—महामतिम् ॥ १४. प्र—चैवमभ्यनन्दन् । च रा ब ल$_1$ ल$_2$—चैव
अभ्यनन्दन् । म—चैवमभ्यवन्दन् । च— वापि अभ्यवन्दन् । फ—चैव ववन्द
थे । १५. फ—महाकपिः । १६. रा च म—०भिश्चाभिपूजितः । प्र ल$_1$
ल$_2$—०भिश्चापि पूजितः । फ—०भिश्च समार्चितः ।

२४] दृष्टा देवीऽति वि-क्रान्तः सं-क्षेपेण न्य्-अवेदयत् ॥२७॥[३६
दृष्टा देवीऽति वचनं महर्त्वं तद् अ-मृतोपमम् ।
२५] श्रुत्वा ते मारुतेस् तस्य मुदिता हरयस्ं तदा ॥२८॥ [४०
क्ष्वेडन्त्य् अन्ये हसन्त्य्ं अन्ये द्रवन्त्य्ं अन्ये प्लवं-गर्माः ।
२६] चक्रुः किलकिलामे अन्ये प्रति-गर्जन्ति चाऽपरे ॥२९॥[४१
केचिच् चोच्छ्रितं-लाङ्गूलाः प्र-हृष्टाः कपि-कुञ्जराः ।
२७] अञ्चितांऽऽयत-दीर्घाणि लांगूलानि वि-चिक्षिपुः ॥३०॥ [४२
अ-परे तुं हनूमन्तं वानरा वारणोपमाः ।
२८] आ-प्लुत्य गिरि-शृङ्गेभ्यः सं-स्पृशन्ति प्र-हर्षिताः॥३१॥[४३
संतुवन्ति च नमस्यन्ति परि-पस्वजिरेऽपरे ।
२९] वालि-पुत्रोऽङ्गदश् चैव संपरि-ष्वज्य पीडितम्॥३२॥ [N
महंष्ट्र-मनसं दृष्ट्वा तम् अ-रोगम् उप-स्थितम् ।
३०] नि-पसाद ततो हस्ते गृहीत्वा पवनोऽऽत्म-जम्॥३३॥ [N
रमणीये वनोद्-देशे दुर्-धरस्यं महा-गिरेः ।
३१] परि-वार्य च ते सर्वे परां प्रीतिम्ं अवाऽऽप्नुर्युः॥३४॥ [N
जाम्ब-वन्तं हनूमन्तम् अङ्गदं च हरीऽऽश्वरम् ॥

---

१. फ अ-महार्थमम॰ । २. रा व प्र म ल, ल-॰योऽभवन् । ३. फ-द्रवन्त्यन्ये । ४. फ-गर्जन्त्यन्ये क्षिपन्ति च । अ-गर्जन्त्यन्ये प्लवं॰ । ५. अ-॰किलाश्चान्ये । ६. अ-केचिदुच्छ्रित॰ । ७. फ-मुचिन्तयन्ति दी॰ । च-अवितायतदी॰ । रा व म ल, ल-अधिकायतदी॰ । अ-क्रुचेतायतदी॰ ॥ ८. [illegible] । अ-हनुमंतं तु । ९. [illegible] । च-वानरोपमाः । प्र-वानरौकसः । ल, ल-काननौकसः । अ-वासवोपमाः ॥ १०. फ-॰रे मुदा । ११. आ-परिष्वज्य च पीडितम् । १२. अ-॰प्रवदनं । १३. अ-अवस्थितम् । १४. आ-वालिनः सुतः ॥ १५. आ-दर्दुरस्य । १६. फ अ-प्रीतिमुपागताः । रा व प्र म ल, ल-प्रीतिं प्रपेदिरे ॥ १७. फ अ-कपीश्वरम् ।

३२] परि-वार्योपविष्टास् ते भेजिरे विपुलाः शिलाः ॥३५॥ [४८
उप-विष्टा गिरेस् तस्य शिलासु विपुलासु च ।
३३] श्रोतु-कामाः समुद्रस्य लंघनं वानरोत्तमाः ॥३६॥ [४९
दर्शनं चाऽपि लंकायाः सीताया रावणस्य च ।
३४] तस्थुः प्राऽञ्जलयः सर्वे हनूमद्-वचनोत्सुकाः ॥३७॥ [५०
प्रीति-विस्फारिताऽक्षास् ते निश्-शब्दा हरयोऽभवन्।
३५] तन्न-चित्तास् तत्-पराश् चैव हनूमद्-वचनोत्सुकाः ॥३८॥ [N
जाम्ब-वान् ऋक्ष-राजस् तु गजो गवय एव च ।
पनसश् च गवाऽक्षश् च मध्ये तस्थुर् वनौकसाम् ।
N] अङ्गदं मध्य-तः कृत्वा हनूमन्तं च वानराः ॥३९॥ [N
तस्थौ तत्राऽङ्गदः श्रीमान् वानरैर् बहुभिर् वृतः ।
N] उपाऽऽस्यमानो विधि-वद् देवैर् देव-पतिर् यथा॥४०॥ [५१
हनूमता कीर्ति-मता यशस्-विना
तथाऽङ्गदेनाऽङ्ग-विदा विपश्चिता ।
तदा तद् अध्यासितम् उत्तमं महेन्द्र
N] मही-धराऽग्रं ज्वलितं श्रियाऽभवत् ॥४१॥ [५२

इत्यार्षे रामायणे सुन्दर-काण्डे हनुमत्-प्रत्यागमनं
नाम पंचपंचाशः सर्गः ॥५५॥

---

१. अ—परिवार्य कपिश्रेष्ठं भेजिरे विपुलाशिलाः । २. फ—ते ॥ ३. फ अ—परिवार्य समन्ततः । रा म—हनुमद्दर्शनोत्सुकाः । ४. रा—॰विस्फारिता॰ । ५. अ—नास्ति । ६. रा व—तं चिता । प्र—तच्चिन्ता । फ च म—अनिश्चिता । ७. आ अ—नास्ति । ८. ल$_{2}$—नास्ति । ९. फ—वनौकसः । १०. आ—दिवि । ११. अ—नास्ति ॥ १२. ल$_{1}$—मुदा । १३. ल$_{2}$—तदाध्या॰ । १४. फ—महान् । १५. आ—क्वणितं तदाभ॰ । च रा व म प्र ल$_{1}$ ल$_{2}$—ज्वलितं तदाभ॰ । १६. ल$_{2}$—इति । १७. अ—सर्गसमाप्तिर्न दृश्यते ॥

ततस् तस्य गिरेः शृङ्गे महेन्द्रस्य महा-बलाः ।
N] हनुमत्-प्रमुखाः प्रीतिं हरयो जग्मुर् उत्तमाम् ॥१॥[1] [१
तम् आगतं महा-वीर्यं राक्षसैः क्षत-विक्षतम्[2] ।
N] सम्-ईक्ष्य हरयः सर्वे परि-वार्य सम्-आसते[3] ॥२॥ [N
ततस् तम् अब्रवीद् वाक्यं हरीणां प्र-वरोऽङ्गदः ।
N] ब्रूहि वानर-शार्दूल कृतं[4] कर्म सुदुष्-करम् ॥३॥ [N
अपि दृष्टा त्वया सीता रामस्य महिषी प्रिया ।
N] प्रसन्न-वर्णो हि शुभस् तवाऽङ्गुष्ठ-गतो मणिः॥४॥[5] [N
एतच् छ्रुत्वा शुभं वाक्यम् अङ्गदस्य विपश्चितः । [N
N] हनुमान् अब्रवीद् हृष्टः सर्वास् तान् हरि-यूथपान् ५ [५७.३७उ
अशोक-वनिका-मध्ये दृष्टा मे[6] जनकाऽऽत्म-जा ।
N] रक्ष्यमाणा सु-घोराभी राक्षसीभिर् मनस्-विनी॥६॥[५७.३८
एक-वेणी-धरा बाला राम-दर्शन-लालसा ।
N] उपवास-परिश्रान्ता मलिना जटिला कृशा ॥७॥ [५७.३९
यत्नेन महता दृष्टा हृष्टा सा जनकाऽऽत्म-जा ।

१. श-१-मश्लोकादारभ्य ८-मश्लोकान्तः पाठो नास्ति ॥ २. फ-क्षत० । दा-कृतविग्रहम् । व प्र म ल$_1$ ल$_2$-क्षतविग्रहम् । ३. च दा व प्र म ल$_1$ ल$_2$-समन्ततः ॥ ४. फ-कृत्वा ॥ ५. ल$_2$-मुनिः । ६. अतः परमधिकः पाठः-म-युद्धं त्वमसि गदापातैः शतघ्नीपरिघेषुभिः । वीर रूपाणि दृश्यन्ते तव गात्राणि भागतः ॥ एभिः प्रहारैः पश्यामः राक्षसा निहतास्त्वया । समरे वीरशब्दश्च लब्ध्वा कीर्तिश्च शाश्वती ॥ आख्याहि नः प्रहर्षोऽयं वाक्यमश्रुत्वतोऽपि ते । रामप्रियहितार्थं त्वं हनुमद्वक्तुमर्हसि ॥ ७. दा-कपिपु० ॥ ८. ल$_1$-दृष्टाऽसौ । ९. फ-रक्ष्य० । १०. फ-यत्न० ॥ ११. श्रा-हि सा ॥ १२. फ दा प्र थ म ल$_1$ ल$_2$-सा मया । च-मया सा ।

तया च सह जल्पित्वा पृष्ट्वा चैनाम् अन्-आमयम्[1] ।
N] अभि-ज्ञानं गृहीत्वा च सिद्धाऽर्थोऽहम् इहाऽऽगतः॥८॥[2] [N
अंगदोऽथ शुभं वाक्यं वायु-पुत्रस्य धीमतः ।
N] श्रुत्वैव परम-प्रीतो हरि-मध्य-गतोऽब्रवीत् ॥९॥ [N
तुल्य-वीर्यो न ते कश्चित् सुराणाम् अपि दृश्यते ।
N] पुनर् आ-प्लुत्य[3] यो भीमं समुद्रं त्वम्[4] इहाऽऽगतः[5]॥१०॥[N
जीवितस्य प्र-दो नाऽन्यस् त्वम् एको वानरोत्तम[6] ।
N] त्वत्-प्रसादात् स्म-एष्यामः सिद्धाऽर्था राघवेण हि[7]॥११॥[N
दिष्ट्या दृष्टा त्वया सीता राम-पत्नी यशस्-विनी ।
N] दिष्ट्या त्यक्ष्यति काकुत्स्थः शोकं सीता-वियोग-जम् ॥१२[N
तं पुनः प्रेतिसं-हृष्टः[8] प्रीति-पाल्[9] वै महा-कपिः ।
१७] जाम्ब-वान्[10] कार्य-वृत्तान्तम् अपृच्छन्[11] मारुताऽऽत्म-जम्[12] १३[२
कथं दृष्टा त्वया सीता कथं वा तत्र वर्तते ।
२] सं-वाद्य च कथं वृत्तः क्रूर-कर्मा हि[12] रावणः ॥१४॥ [३
३पू] व्यासेन[13] सर्वम् एतन् नः प्र-ब्रूहि त्वं महा-भुज । [४पू
N] समा-गता कथं देवी सा च किं प्रत्यु-अभाषत ॥१५॥ [N
३उ] श्रुतोऽर्थाश्[14] चिन्तयिष्यामः कार्यस्याऽस्य विनिश्-चयम्[15] ।[४उ

१. फ-दृष्टा चैनामनामया । रा स-पृष्ट्वा चैवामनामयम् । २. अ-नास्ति । ३. रा प्र व म ल$_{1}$ ल-उल्लंघ्य । ४. च-तम् । ५. रा प्र व स ल$_{1}$ल$_{2}$-इहागतः ॥ ६. फ-प्रदाता त्वमेको वानरपुंगव । च रा व म ल$_{1}$ ल$_{2}$-प्रदाता नस्त्वमेको वा० । प्र-प्रदाता तु त्वमेको वा० । अ-प्रदाता त्वमहो वानरपुंगव । ७. फ-च । रा प्र अ-हि ॥ ८. आ-त्यक्षति ॥ ९. आ-प्रीति० । १०. आ-जाम्बुवान्कालवृ० । ११. अ-अपृच्छत्पवनात्मजम् ॥ १२. आ-स ॥ १३. आ-ऽयासतः । ल$_{1}$-विस्तरेण ॥ १४. आ-श्रुतार्थान् । ल$_{1}$ ल$_{2}$-श्रुत्वार्थेश् । अ-श्रुतार्थंश् । १५. अ-०चयादि । १६. अतः परमधिकः पाठः—आ-प्रसन्नवर्णो हि शुभस्त्वदागुणगतो मयि । अपि दृष्टा त्वया सीता ब्रूहि नः परिपृच्छताम् ।

यथाऽर्थस् तस्य वक्तव्यो गतैर् अस्माभिर् आत्म-वत् ।[1]
N] रक्षितव्यं च यत् तत्र तद् भवान् प्र-ब्रवीतु नः ॥[2]१६॥[3] [
स पृष्टश्[4] च तदा तेन संप्रहृष्ट-तनूरुहः ।
N] नमस्य[5] मनसा सीतां देवीम् अकथयत् तदा[6] ॥१७॥ [६
इति जाम्ब-वता पृष्टो वानराणां मतेन च[7] ।[8]
६] यथा-वृत्तं कपि-श्रेष्ठः[9] कथयामास मारुतिः ॥१८॥ [
भवत्-अक्षं वस् तेद् यद् अहं[10] महेन्द्राऽग्राद् अव-प्लुतः ।
७] उदधेर् अपरं पारं कांक्ष-माणो महाऽऽत्मनः ।
N] अ-पारं[11] तु महद् व्योम पुप्लुवेऽहं समा-हितः ॥१९॥[12] [N

---

१. आ—०वान् । २. फ अ—व्याकरोतु । आ—प्रब्रवीत्पुनः । ३. च रा ब म ल₁ ल₂—१६-शश्लोकादारभ्य १८-शश्लोकान्तः पाठो व्युत्क्रमे पठितः । ४. फ—तु दृष्टस् । ५. रा ब भ म ल₁ ल₂—प्रणम्य । ६. फ देवीं सीतां सोकथयत् । ७. फ—वानरानुमतो वरः । च रा ध ल₁ ल₂ अ—वानरानुमतेन च । ८. भ—नास्ति । ६. च रा भ ब ल₁ ल₂—०श्रेष्ठं । १०. फ—तदैवाहं । ११. आ—अथास्तु सदृशं । फ च अपान्तु सदृशं । अ—अरससदृशं । १२. अतः परमधिकः पाठः—म- गच्छतश्च ममाव्यग्रं सत्वमभ्येत्यधिष्ठितं । पंथानं खे तदा रुद्ध्वा प्राब्रवीन्म च भीषयत् । सरमां मां विजानीहि हनुमद्देवमातरम् । मम भक्ष्यस्त्वमुदि ईश्वरैर्वानरर्षभः ॥ एवं ह्यभिहिते वाक्ये क्रूरे सरमया तदा । रामदूते यामीति मया तस्यै निवेदितम् ॥ पुनश्चोक्ता मया देवी कृत्वा कार्यमभापत आगमिष्यामि ते वक्त्रं सत्यं प्रतिशृणोमि ते ॥ एवमुक्ता मया सा ह सरमा कामरूपिणी । अब्रवीन्नातिवर्तेत कश्चिन्मामिति मे वरः ॥ एवमुक्तस्त्वहं तत्र चिन्तयामि सुदुःखितः । अशुनं कुरु तद्वक्त्रं येन मां भक्षयिष्यति ॥ इत्युक्ता सा महादेवी शतयोजनविस्तृतम् । कृतवत्यात्मनो वक्त्रं पर्वतान्तर- दर्शनम् ॥ संक्षिप्यात्मानमव्यग्रः प्रविष्टोऽहं मुखं तदा । निष्क्रम्य च मुखात्तस्मादन्तरिक्षं पुनर्गतः ॥ विज्ञप्ता च मया देवी प्रणम्य विधिवत्तदा ।

५१उ] ततस् तु सु-चिरे[1] काले गच्छन्न् उग्र-जवः कपिः ।
बलवन्-नि-गृहीताऽऽत्मा न च पश्यामि किंचन ॥२०॥ [N

५२] सोऽहं विगत-वेगः[2] सन्[3] दिशो दश वि-लोकयन् ।
न किंचित्[4] तत्र पश्यामि येन मे सं-हृता गतिः ॥२१॥ [३५

५३] तस्य मे बुद्धिर् उत्पन्ना किं नाम[5] गमने[6] मम ।
विघ्नं ईदृश उत्पन्नो ह्य् अभून् मे यत्र नि-ग्रहः ॥२२॥ [३६

५४] अधो-मुखी ततो दृष्टिर् गच्छतां[7] चारिता मया ।
ततः पश्याम्य् अहं भीमां राक्षसीं सलिलाऽऽश्रयाम्[8] २३[३७

५५] प्र-हस्य च महा-नादम्[9] उक्तोऽहं भीमया तया ।
अव-स्थितम्[10] असं-भ्रान्तम् इदं वाक्यं सु-दारुणम् ॥२४॥[३८

५६] क्वासि[11] गन्तं[11] नाम महा-काय मया क्षुधितयेप्सितः[12] ।
चिराय भक्ष्यस् त्वं दत्तो दिष्ट्या धात्रा महाऽर्णवे ॥२५॥[३९

५७] बाढम् इत्य्-एव तां वाणीं प्रति-गृह्य[13] त्व्[14] अहं ततः ।

---

प्रविश्य वक्त्राग्निक्रान्तो दाहायिष्ये नमोस्तु ते॥ गमिष्ये यत्र वैदेही सत्यश्चास्तु वरस्तव । दृष्ट्वा च मा तदा सरमायानवीद्वचः ॥ अर्थसिद्ध्यै कपिश्रेष्ठ गच्छ सौम्य यथासुखम् । ता चाप्यहमुपामन्त्र्य संप्रतस्थे पुनर्भवम् ॥ सर्वतोपि निरालंबं सुरसिद्धनिषेवितम् ॥ १. प्र–सुचिर ॥ २. अ–० वेगस्तु । आ–०गः स । ३ आ–कश्चित् ॥ ४. फ–लकाया । ५. प्र य स $ल_1$ $ल_2$—गमने । ६. फ अ–विघ्नमीदृशमुत्पन्नं ॥ ७ आ–गच्छन्ती । ८ प्र म $ल_1$ $ल_2$—सलिले शयाम् । फ–०राशये । च रा य–०लाशयाम् ॥ ९. आ–० नादो मुक्तो वै । प्र म $ल_1$ $ल_2$–० घादो मुक्तो वै ॥ १०. आ–अभ्यास्थितम् । रा प्र व म–अभ्यधत्त । $ल_1$ $ल_2$—अथ ध्रुव ॥ ११. फ च प्र व म $ल_1$ $ल_2$–क्वासि गन्ता महाभाग । रा–क्वापि गन्ता महाभाग । अ–क्वासि गन्ता । १२. फ च रा प्र व म $ल_1$ $ल_2$ अ–० येप्सितः । १३ फ–तथ्यगृह्य । १४. फ–वचः । $ल_2$ गतः ।

---

१ समास्थितोऽभव॰पुनर् इति मूलत पाठस्य सतो लेखकप्रमादप्रयोजितो विकारः स्यात् ।

वर्द्धयन् वि-पुलं कायं तस्याः कायम् अपूरयम् ॥२६॥[४

५८] तस्याम् तद् वि-पुलं वक्त्रं वर्द्धते मम भक्षणे ।
तन् चाऽहम् अव-बुद्ध्यैव तस्याँस् तद् वि-पुलं मुखम् २७[४

५९] ततोऽहं विपुलं रूपं सं-क्षिप्य निमिषाऽन्तरम् ।
तस्या हृदयम् आ-दाय प्रस्थितोऽस्मि नभस्-तलम् २८[४

६०] सा विसृष्ट-रवा भीमा पपात लवणाऽम्भसि ।
महापर्वत-संकाशा निःकृत्त-हृदया मया ॥२९॥ [४२

६१] शृणोमि ख-गतानां च वाचः सौम्या महाऽऽत्मनाम् ।
राक्षसी सिंहिका क्रूरा शीघ्रं हनुमता हता ॥३०॥ [४४

६२] तां हत्वा पुनर् एवाऽहं कार्यम् आत्यन्तिकं स्मरन् । [४५पू

६३पू] आ (?अ) गच्छं पुले व्योम्नि वायु-वेग-समन्वितः॥३१॥ [
द्वितीयश् चैव मे विघ्नो घोरः सं-जनितो महान् ।

४०] सुवर्ण-शिखरं दिव्यम् अपश्यं पर्वतोत्तमम् । [८
मार्गम् आ-वृत्य तिष्ठन्तं मध्ये नद-नदी-पतेः ॥३२॥ [९

४१] उप-गम्य तु तं दिव्यं काञ्चनं पर्वतोत्तमम् ।

---

१. फ- कुर्वश्च । २. फ-कामम् । ल२-कार्यम् । ३. फ रा प्र म ल१ ल२ ब-अपूरयन् ४. रा प्र च म ल१ ल२-विवृद्धं । ५. ब-तथाहम् । ६. ब-अनु० । फ-अनुबुद्ध्यैवम् । ७. फ-अतीव । ८. अतः परमधिकः पाठः-प्र य ल१-प्रविष्टस्त्वधिकं तस्मात् कृत्वा रूपं च योगतः । ९. फ च रा प्र घ म ल१ ल२ ब-०न्तरात् । १०. ब-आसाद्य । ११. फ ब-विसृष्टभुजा । १२. फ ब-तथा । १३. फ-खेचराणां वाक्यं व्योम्नि । ब-खेचराणां वाचः सौम्या । १४. च-आत्यायिकं । प्र च म ल१, ल२ ब-आत्ययिकं । १५. फ-वायोर्वेगं समास्थितः । १६. फ-द्वितीयश्चैव मे विघ्नं घोरमापतितं महत् । ब-द्वितीयश्चापि मे विघ्नं घोरमापतितं महत् । १७. फ रा प्र ल१, ल२-त्तमम् । १८. ब-दिव्यं । १९. ब-नादिग ।

---

१. ल१-प्रविष्टोऽस्म्यधिकं ।

कृता मया तदा बुद्धिर् भेत्तव्योऽयं महा-गिरिः[3] ॥३३ [१०
४२] प्र-हृतं च मया तस्य लांगूलेन महा-गिरेः[4] ।
शिखरं सूर्य-संकाशं व्य्-अशीर्यत सहस्र-धा ॥[5]३४॥ [११
४३] तन् मे व्य्-अवसितं दृष्ट्वा स उवाच महा-गिरिः ।
पुत्रेति मधुरां वाणीं मां स पर्वत-सत्तमः ॥३५॥[7] [१२
४४] पितुर् आत्म-समं विद्धि सुहृदं मारुतस्य माम् ।
सु-नाभ इति वि-ख्यातं नि-वसन्तं महोदधौ ॥३६॥[10] [१३
४५] पूर्वं पत्तं-गमो (?मा) भूत्वा बहवः पर्वतोत्तमाः ।[12]
छन्देन पृथिवीं चेरुर् बाध-मानास् तपो-धनान् ॥३७॥ [१४
४६] श्रुत्वा नगानां चरितं महेन्द्रः पाक-शासनः ।
चिच्छेद भग-वान् पक्षान् वज्रेण गुरुणा ततः ॥३८॥ [१५
४७] अहं तु मोक्षितस् तत्र तव पित्रा महाऽऽत्मना ।
मारुतेन तदा पुत्र सागरं सम्प्र-वेशितः ॥३९॥ [१६
४८] रामस्य च मया साह्ये वर्तितव्यम् अरिं-दम ।
N] रामो धर्म-भृतां श्रेष्ठो महेन्द्र-समविक्रमः ॥४०॥ [१७
४९उ] एतच् छ्रुत्वा मुखात् तस्य सु-नाभस्य महाऽऽत्मनः ।
कार्य-गौरवम् आ-ख्यातम् अखिलेन विशेष-तः ॥[19]४१॥[१८

१. फ अ–मे मनसा । २. प्र ब म ल$_1$ ल$_2$–मया कृता तदा बुद्धिर्भेदने तस्य भूभृतः । ३. आ च रा–प्रहृते । ४. फ च रा–०गिरौ । अ–०गिरे । ५. फ–नास्ति । ६. फ–तदा सत्यपुरस्कृतः । ७. म–मारुतस्य महाकपेः । अ–०तस्य च । ८. म–मैनाक । अ–सुनामम् । ९. म–महार्णवे । १०. च रा प्र ब ल$_1$ ल$_2$–नास्ति । ११. फ–पूर्वपक्षागमा । १२. म–पूर्वं प्लवंगमाः पुत्र बभूवुरचलाः किल । च रा ब ल$_1$ ल$_2$–नास्ति । १३. ब–इन्द्रेण । १४. फ–सर्वां बध्यमानां समन्ततः । रा–चेरुर्दाहमानास्ततस्ततः । ब–०दार्यमाणास्ततस्ततः । ०मानास्ततस्ततः । १५. प्र म ल$_1$ ल$_2$–देवेन्द्रः । १६. प्र ल$_1$ ल$_2$–मोचितम् । १७. प्र ल$_1$ ल$_2$–०रे । १८. फ अ–सख्ये । ल$_2$–साह्यं । १९. आ–नास्ति ॥

५०] तेन चाऽहम् अनु-ज्ञातः सु-नाभेन महाऽऽत्मना । [१९पू
५१पू] उत्तमं जवम् आ-स्थाय शेषं पन्थानम् आ-स्थितः ४२[२०पू
६३उ] गत्वा महान्तम् अध्वानम् अपश्यं नग-मण्डितम् । [४५उ
दक्षिणं तीरम् उदधेर् लंका यत्र महा-पुरी ॥४३॥
६४] अस्तं दिन-करे याते रक्षसाम् आलयं पुरीम् ।
सम्प्र-विष्टोऽहम् अ-ज्ञातो राक्षसैर् भीम-विक्रमैः॥४४॥ [४६
६५] तत्र चाऽहं निशां सर्वां वि-चिन्वन् जनकाऽऽत्म-जाम् ।
रावणाऽन्तःपुर-गतो नाऽपश्यं तां सु-मध्यमाम् ॥४५॥[५०
६६] ततः सीताम् अ-पश्यंस् तु रावणस्य नि-वेशने ।
शोक-सागरम् आ-साद्य न पारम् उप-लक्षये ॥४६॥ [५१
६७] शोचता च मया दृष्टं प्राकारेण समा-वृतम् ।
काञ्चनेन प्र-कृष्टेन पुरोप-वनम् उत्तमम् ॥४७॥ [५२
६८] तं प्राकारम् अनुप्राऽऽप्य पश्यामि बहु-पादपाम् । [५३
अशोक-वनिकां दिव्यां महेन्द्रस्येव नन्दनम् ॥४८॥ [N
६९] अशोक-वनिका-मध्ये शिंशिपा-पादपो महान् ।
तम् आ-रूढः प्र-पश्यामि काञ्चनं कदली-वनम् ॥४९॥ [५४
७०] अ-दूराच् छिंशिपा-वृक्षाद् अपश्यं वर-वर्णिनीम् ।
श्यामां कमल-पत्राऽक्षी तपसा सु-कृशोऽऽननाम् ॥५०॥ [५५
७१] राक्षसीभिर् वि-रूपाभिर् घोरै-कर्मभिर् आ-वृताम् ।

१. फ च रा—सोहम् । २. आ—पन्थान सस्थितः । ३. प्र—नगराणि तम् । ४. फ च रा—॰सामालका । ल२—॰सामालये । ५. आ—नास्ति । ६. आ—संप्रविष्टो महारात्रौ । प्र—संप्रहृष्टो ह॰ ।

मांस-शोणित-मत्ताभिर् व्याघ्रीभिर् हरिणीम् इव॥७१॥[५७

७२] तां दृष्ट्वा तादृशीं नारीं राज-पुत्रीम् अ-निन्दिताम् ।
तत्रैव शिंशिपा-वृक्षे पत्रि-वत् समन्त-स्थितः ॥५२॥ [६०

७३] ततो हलहला-शब्दं काञ्ची-भूषण-मिश्रितम् ।
शृणोम्य् अहम् उपाऽऽवृत्तं रावणस्य च नि-स्वनम्॥५३॥[६१

७४] ततोऽहं परमोद्-विग्नः स्वं रूपं सं-क्षिपन् पुनः । [६२पू
लीनश् च शिंशिपा-वृक्षे स्थितस् तस्य दिदृक्षया॥५४॥ [N

७५] ततो रावण-दाराश् च रावणश् च महा-बलः ।
तं देशं समनु-प्राऽऽप्तो राक्षसीभिः सु-रक्षितम् ॥५५॥[६३

७६] तं दृष्ट्वा सा महा-बाहुं सीता रक्षो-महाबलम् ।
सं-क्षिप्य वासस् तस्थौ सा बाहुभ्यां परि-रभ्य च॥५६॥ [६४

७७] ताम् उवाच दश-ग्रीवः सीतां परम-दुःखिताम् ।
अवाक्-शिराः प्र-पतितो बहु मन्यस्व मां प्रिये॥५७॥ [६६

७८] यद् इतस् त्वं तु मां दर्पान् नाऽभि-नन्दस्य् अ-निन्दिते ।
द्वि-मासाऽभ्यन्तरात् सीते पास्यामि रुधिरं तव॥५८॥[६७

७९] एतच् छ्रुत्वा वचस् तस्य रावणस्य दुर्-आत्मनः ।
उवाच परम-क्रुद्धा सीता सदृशम् आत्मनः ॥५९॥ [६८

---

१. म ल₂—शिंशपा० । २. फ—समुप० । ३. फ घ रा प्र ब म ल₁ अ—उपोढ़ितं । ल₂—अपोढ़ितं । ४. प्र—शिंशुपा० । म ल₂—शिंशपा० । ५. घ—सुरक्षितः । अ—समावृतम् । ६. आ—तत्र दृष्ट्वा । अ—तं च दृष्ट्वा । ७. अ—परिगृह्य । ८. अतः परमधिकः पाठः—म—वित्रस्ता परमोद्विग्ना वीक्ष्यमाणा ततस्ततः । त्राणं किंचिदपश्यंती प्रावेपत तपस्विनी ॥ ९. घ—०शिरा । ल₁—अर्वाक् शिरः । आ—०शिरः । १०. फ घ—यदि च त्वं न मे । रा—यदि त्वं न च मां । ब प्र. ल₁ ल₂—यदि च त्वं न मां । म—यदि त्वं च न मां । अ—यदि त्वञ्च मां ॥ ११. आ—परमं क्रुद्धा । १२. ल₂—नास्ति ॥

८०] इक्ष्वाकु-कुल-नाथस्य धर्म-पत्नीं महाऽऽत्मनः ।
अ-वाच्यं वदतो जिह्वा कथं न पतिता तव ॥६०॥ [६९

८१] किं च वीर्यं तवाऽनार्य यो मद्-भर्तुर् अ-सन्निधौ ।
माम् इहाऽभ्या-ऽनयः क्रूर तेनाऽदृष्टो महाऽऽत्मना । [७०

८२] गर्हितं कर्म कृत्वा च पाप कस्मान् न लज्जसे ॥६१॥ [N
यज्वा च सत्य-सन्धश् च रण-श्लाघी च राघवः ।

८३] न त्वं रामस्य दासे (ऽस्ये)ऽपि योग्यः प्रार्थयसे च माम् । [७१
सन्निधौ नय-मानस् त्वं विराध-गतिम् आप्नुयाः॥६२॥ [N

८४] जानक्या परमं वाक्यम् एवम् उक्तो दशाऽऽननः ।
जज्वाल राक्षसः क्रुद्धश् चितायां पावको यथा ॥६३॥ [७२

८५] वि-वृत्य नयने क्रूरे मुष्टिम् उद्-यम्य दक्षिणम् ।
वैदेहीं हन्तुम् आ-रब्धः स्त्रीभिस् ताभिर् नि-वारितः॥६४॥[७३

८६] स्त्रीणां मध्यात् समुत्-पत्य तस्य भार्या दुर्-आत्मनः ।
मन्दोदरी नाम शुभा तया स प्रति-षेधितः ॥६५॥ [७४

८७] उक्तश् च शुभया वाचा तया साऽनु-नयं तदा ।

८८पू] सीतया तव किं कार्यं महेन्द्र-सम-विक्रम ॥६६॥

N] मया सह रमस्वाऽद्य मद्-विशिष्टा न जानकी । [७५

---

१. आ--०लराजस्य । २. रा--महौजसः ॥ ३. आ फ--किंचिद् । ४. फ--यो ॥ ५. च--योग्यं । रा प्र ब म ल$_1$--यस्त्वं । ६. रा प्र ब म ल$_1$--तु । ७. ल$_2$--नास्ति ॥ ८. ल$_2$--जानक्याः प० । ९. फ--कोपात्संदीतायां । च रा प्र ब म ल$_1$ ल$_2$--क्रोधार्चितायां । अ--क्रोधार्चितया ॥ १०. प्र--विवृते । ११. प्र--दक्षिणाम् । १२. फ च अ--स्त्रीभिस्तु नि० । रा प्र ब म ल$_1$ ल$_2$--व्यस्ताभिः स्त्रीभिर् ॥ १३. रा--तथा । १४. प्र--संप्रति० ॥ १५. आ च रा प्र ब म ल$_1$ ल$_2$--ततश्च । १६. अ--तदा । १७. आ--०नयंस् । १८. अ--तया ॥

८८उ] देव-गन्धर्व-पत्न्यश् च यक्ष-राक्षस-योषितः ।
तांभी रमस्व सु-भगे सीतया किं तवाऽनया ॥६७॥ [७६

८९] ततस् ताभिः सम्-एताभिर् योषिद्भिः स महा-बलः ।
उत्थाय सहसा नीतो येनैवाऽभ्यो-गतः पथो ॥६८॥ [७७

९०] गते तस्मिन् दश-ग्रीवे राक्षस्यो वि-कृताऽऽननाः ।
सीतां निर्-भर्त्सयामासुः समा-गम्ये सहस्र-शः ॥६९॥ [७८

९१] तृण-वद् भाषितं तासां तुलयामास जानकी ।
गर्जितं च वृथा तासां सीता श्रुत्वा न शोचति ॥ ७०॥[७९

९२] वृथा गर्जन्ति निश्-चेष्टा राक्षस्यो वि-कृताऽऽननाः ।
सीताया व्यवसायं तं रावणस्य न्य्-अवेदयन् ॥७१॥ [८०

९३] वि-हितास् ततः सर्वा हत-वेगाः सु-दुःखिताः ।
परि-वार्य तदा देवी निद्रा-वशम् उपाऽऽगताः ॥७२॥ [८१

९४] तासु चाऽथ प्र-सुप्तासु सीता भर्तृ-हिते रता ।
वि-लपकरुणं दीना निर्-आशा च सु-दुःखिता॥७३॥[८२

९५] तां चाऽपि तादृशीं दृष्ट्वा सीताया दारुणां दशाम् ।
चिन्तयामास बुद्धयाऽहं न च मे वि-कृतं मनः ॥७४॥ [९०

---

१. फ—०वयक्षाश्च नागरा० । अ—०वकन्याश्च यक्षराक्षसयोषितां । २. फ—ताभिः सह रमस्वाद्य । अ—ताभिः सह रमस्वार्य । ३. फ—करिष्यसि । घ—प्रयोजनम् ॥ ४. अ—०आगतस्तथा ॥ ५. रा प्र घ म ल, ल, अ—समासाद्य ॥ ६. घ म—भीषित । ७. म—सीता श्रुत्वा न शोचति । अ—तोलयामास जा० । ८. अ—तु तदा । ९. अ—०नुशो० । १०. प्र—नास्ति ॥ ११. श्रा—निहतास् । रा प्र व म ल, ल—विकृतास् ॥ १२. फ अ—च व्यवसु० । घ रा प्र व म ल, ल—च प्रतिसु० । १३. फ घ रा—विलेपे । अ—विलप्य । १४. प्र व म ल, ल—निश्वास ॥ १५. रा—न रामे निर्वृतं । ल, ल—निर्वृतं । अ—निवृतं न च मे ॥

९६] सं-भाषणाऽर्थं च मया जानक्यां वि-हितो[2] विधिः ।
इक्ष्वाकु-कुल-वंशस्य स्तवो राम-पुरस्कृतः ॥७५॥[3] [९१

९७] श्रुत्वा तु गदितां वाचं रामाऽर्थ-चरितां शुभाम् ।
प्रत्य्-अभाषत मां सीता वाष्पोऽपिहित-लोचना ॥७६॥ [९२

९८] कस् त्वं कस्य कथं चेह प्राऽऽप्तो वानर-पुंगव ।
कथं रामेण ते प्रीतिस् तन् मे वक्तुम् इहाऽर्हसि ॥७७॥ [९३

९९] ताम् अवोचम् अहं दीनां शंकितां शंकितो वचः । [९४

१००अ]देवि रामस्य भर्तुस् ते सहायो भीम-विक्रमः ॥७८॥
सु-ग्रीव इति वि-ख्यातो वानरेन्द्रोऽति-भीषणः । [९५

१०१] तस्य मां विद्धि सचिवं हनूमन्तम् उपाऽऽगतम् ।
भर्त्रा च प्र-हितस् तेऽहं रामेणाऽक्लिष्ट-कर्मणा ॥७९॥ [९६

१०२] इदं च पुरुष-व्याघ्र इक्ष्वाकु-कुल-नन्दनः ।
अंगुलीऽयम् अभि-ज्ञानं प्राऽदात् तव यशस्-विनि॥८०॥[९७

१०३] तद् इच्छेयं त्वयाऽऽज्ञप्तं देवि किं करवाण्य् अहम् ।
राम-लक्ष्मणयोर् मूलं नयामि त्वां किम् उत्तरम् ॥८१॥[९८

१०४] एतच् छ्रुत्वा च हृष्टा सा सीता जनक-नन्दिनी ।
अहं रावणम् उत्-साद्य भ्रातृभ्यां गन्तुम् उत्सहे ॥८२॥ [९९

---

१. प्र–हि । २. ल$_2$–सीतायाश्चिन्तितो । फ च रा प्र ब म ल$_1$ अ–जानक्याश्चिन्तितो । ३. अतः परमधिकः पाठः—म–इक्ष्वाकुकुलवि-ख्यातं संप्रवर्तयता मया । ततः सा वक्रकेशान्ता विश्वासमुपपादिता ॥ ४. आ–वाष्पैर्विहित० । ल$_2$ अ–वाष्पोपहत० । ५. रा–तत्त्वं वक्तुम-र्हसि । च–तत्त्वं व० ॥ ६. प्र ब म ल$_1$ ल$_2$–देवीं ॥ ७. फ च रा प्र ब म ल$_1$ ल$_2$–०न्द्रो महाबलः ॥ ८. फ–०ज्ञानमदात्तव । आ–०ज्ञानं प्रदत्तं च । ९. आ–०स्विनम् ॥ १०. च रा प्र ब म–तवाज्ञसं । ल$_1$ ल$_2$–तवाज्ञो वै । अ–तदाज्ञातुं । ११. आ–दूतं ॥ १२. आ–दृष्ट्वा च ॥

१०५] प्र-णम्य शिरसा सीताम् अभि-वाद्य यशस्-विनीम् ।
राघवाऽऽह्लादन-करम् अभि-ज्ञानं मयाऽर्थिता ॥८३॥[१००

१०६] एवम् उक्ता वराऽऽरोहा मेमैतं मणिम् उत्तमम् ।
माऽयच्छत् परमोद्-विग्ना वाचा मां सं-दिदेश च ॥८४॥ [१०२

१०७] ततः प्र-णम्य शिरसा वैदेहीं सुसमा-हितः ।
प्र-दक्षिणम् उपाऽऽवृत्तं स्व-कार्योद्यतं-मानसः ॥८५॥ [१०३

१०८] उक्तोऽहम् आर्यया वाक्यं बाष्प-गद्गदया गिरा ।
हनूमन्ने सर्व-वृत्तान्तम् इमम् आ-ख्यातुम् अर्हसि॥८६॥ [१०४

१०९] श्रुत्वा यथा च न-चिराद् उभौ तौ राम-लक्ष्मणौ ।
सुग्रीव-सहितौ वीराव् उपेयातां तथा कुरु ॥८७॥ [१०५

११०] यद्य् अन्यथा भवेत् कार्यं द्वौ मासौ मम जीवितम् ।
न मां पश्यति काकुत्स्थो वि-नाथाम् इह शोचतीम्॥८८॥[१०६

१११] तच् छ्रुत्वा करुणं वाक्यं क्रोधो माम् अभ्य्-अपूरयत् ।
उत्तरं च मया दृष्टं कार्य-शेषम् अन्-अन्तरम् ॥८९॥ [१०७

११२] ततोऽवर्धत मे कायो महापर्वत-सन्निभः ।
युद्धाऽऽकाङ्क्षी वनं तच् च वि-नाशयितुम् आ-स्थितः९०[१०८

१. फ-सहसा । २. आ फ-अहमासं । ३. अ-०ज्ञानमयाचिपं। फ च-मया विधिः । आ-मयार्पितम् । ४. अतः परमधिकः पाठः—म-अथ मामब्रवीत्सीता गृह्यतामयमुत्तमः । मणिर्येन महाबाहू रामस्त्वां बहु मन्यते ॥ ५. आ-तदा मे । फ-ममैवं । च-ममेतन् । ६. अ-वाचो मां सन्दिदेस ह । ७. अ-उपावर्त्य स्वकार्ये घृत० ॥ ८. आ-तया । अ-तदा । ९. अ-हनुमन् मम वृ० । १०. आ अ-इदम् ॥ ११. फ-नापि । अ-यथावदचि० । १२. आ-उपयातस् ॥ १३. अ-यद्यथा । १४. रा च अ-इव ॥ १५. आ-अभ्यपूरयत् ॥ १६. अ-विनाशितुमुपस्थितः । रा प्र च म ल१ ल२-विनाशयितुमुद्यतः ।

११३] तद् भग्नं वन-खण्डं तु भ्रान्त-त्रैस्त-मृग-द्विजम् ।
प्रति-बुद्धा निर्-ऐक्षन्त राक्षस्यो भ्रान्तं-लोचनाः ॥९१॥[१०९

११४] मां च दृष्ट्वा वँने तस्मिन् समा-गम्य परस्परम् ।
लंकाऽधि-पतये क्षिप्रं रावणायाऽऽचचक्षिरे ॥९२॥ [११०

११५] राजन् वन-वरं दिव्यं तव भग्नं दुर्-आत्मना ।
चैत्य-प्रासाद-मुख्यश् च दुर्-धरः स महा-बलः॥९३॥[१११

११६] कपेर् दुर्-आत्मनस् तस्य तव विप्रिय-कारिणः ।
वधम् आ-ज्ञापय क्षिप्रं यथा स वि-लयं व्रजेत् ॥९४॥[११२

११७] तच् छ्रुत्वा राक्षसेन्द्रेण वि-सृष्टा भृश-दुर्जयाः । [११३पू

N] पदाति-बल-सम्पन्नाः समीपे प्रेषिता मम ।[15] [N
राक्षसाः किं-करा नाम रावणस्य महौजसः॥९५॥[११३उ

११८] तेषाम् अशीति-साहस्रा: शूल-मुद्गर-धारिणाम् ।
ते मया तद्-वनोद्देशे परिघेण नि-पातिताः[21]॥९६॥[११४

११९] तेपां च[22] हत-शेषास् तु दश-ग्रीवाय राक्षसाः ।

---

१. अ—च भीतस्त्रस्त॰ । आ—भ्रान्तस्त्रस्त मृ॰ । २. अ—निरीक्ष्यन्त्य । ३. अ—भ्रान्तमचदा ॥ ४. फ—पराक्रान्तं । ५. फ—प्राचचक्षुः सविस्तरम् ॥ ६. ब—दुरासदं । ७. अ—रक्षिणः सुमहाबलः । ८. च रा प्र ल१—चैत्यप्राकारमुख्यं च स्वदर्थं सुमहाबलः । आ ब म—चैत्यप्राकारमुख्यश्च स्वदर्थं सुमहाबल । ल२—चैत्यप्राकारमुख्यं च स्वदर्थं सुमहाबलं ॥ ९. फ—नास्ति ॥ १०. फ—नास्ति ॥ ११. अ॰सेन्द्रस्य । १२. फ—निर्दिष्टा । १३ रा म ल१ ल२—रणदु॰ । अ—भृशदुःखिताः । १४. ल२—समीपं । १५. फ च रा प्र ब म ल१ अ—नास्ति । १६. अ—महायशः । १७. ल२—नास्ति ॥ १८. अ म ल१—॰साहस्रं । १९. फ—मया तस्मिन्वनोद्देशे । अ—न्मया त॰ । २०. फ प्र म ल१—परिघेन । २१. ल२—सर्वायसमयं घोरं प्रगृह्य परिघं तदा । सर्वांस्तान् सपरिकरान् सादयामि स्म संयुगे ॥ २२. फ—तु हतशेषाश्च । च ब—तु हत॰ ।

गत्वा न्य्-अवेदयन् शीघ्रं हतं सैन्यं रणे मया ॥९७॥[1] [११५
१२०] तच् छ्रुत्वा राक्षसेन्द्रेण मन्त्रि-पुत्रा महा-बलाः ।
पदाति-बल-सम्पन्नाः समीपं प्रेषिता मम ॥९८॥ [११९
१२१] सर्वाऽऽयसम्[2] अहं घोरं[3] प्र-गृह्य परिघं तदा[4] ।
सर्वांस् तान् स-परीवारान्[5] सूदयामि स्म[6] सं-युगे ॥९९॥ [१२०
१२२] स तान् अपि हतान् श्रुत्वा दश-ग्रीवः प्रताप-वान् ।[8]
प्र-हस्तस्य सुतं वीरं जम्बु-मालिनम् आदिशत् ॥१००॥ [N
१२३] तं महाबल-सम्पन्नं राक्षसं रण-कोविदम् ।
परिघेणाऽति-घोरेण[9] रणे[10] सूदित-वान् अहम् ॥१०१॥ [N
१२४] तं कुमारं हतं श्रुत्वा[11] समरेऽतुल-विक्रमम्[7] ।[12]
पंच सेनाऽग्र-गान् शूरान् प्रेषयामास रावणः ॥१०२॥
१२५] तान् अहं सह सैन्येन सूदयित्वा महा-बलान् ।[17] [१२२
१२६पू] युद्धाऽर्थी तोरणोद्देशे तिष्ठामि रण-गर्वितः ॥१०३॥ [N

---

१. म—अतः परं महस्तस्येत्यारभ्य परिघेणेत्यन्तः पाठो व्युत्क्रमेण कियताचित् पाठान्तरेण पठितः । आधेकश्च—राक्षसैर्बहुभिः सार्धं घोरं तीव्रपराक्रमम् । २. रा प्र थ म ल$_1$ ल$_2$—सर्वायसमयं घोरम् । अ—सर्वायसं महाघोरं । ३. फ—उद्यम्य । ४. अ—महत् । ५. आ—सपरिवारान् । ल$_2$—सपरिकरान् । अ—सपरिचरान् । ६. आ—खर्दयामि सर्वे॰ । रा—सादमास सं॰ । थ म ल$_1$ ल$_2$ अ—सादयामि स्म सं॰ ॥ ७. अ—समरेऽतुलविक्रमः । ८. रा थ ल$_1$ ल$_2$—१००—तमश्लोकादारभ्य १०४—तम श्लोकान्तः पाठो नास्ति । ९. फ—परिघेनाति॰ । १०. आ—तं वै । ११. फ—दृष्ट्वा । १२. म—नास्ति । १३. आ—॰मर्गा । १४. म—वीरान् । १५. च—सस मन्त्रिसुतानथ १६. आ—सर्वे॰ । १७. म—तान्प्यहं तथा तत्र सबलान् समयोधयम् । च रा प्र ब ल$_1$ ल$_2$—नास्ति । १८. म—युद्धार्थं । १९. आ—तोरणोदेशं । २०. आ—रक्षामि । फ च रा प्र ब ल$_1$ ल$_2$—रक्षोमी । अ—पश्यामि ॥

प्राग् एवाऽन्यान् महा-शूरान् सप्त मन्त्रि-सुतान् अथ ।
N] प्रेषितांस् तान् अहं सर्वान् स-सैन्यान् हतवान् रणे॥१०४॥[3] [N
१२६उ] ततः पुनर्[1] दश-ग्रीवः पुत्रम् अक्षं महा-बलम् ।[4]
१२७पू] राक्षसैर् बहुभिः सार्द्धं प्रेषयामास मद्-वधे ॥१०५॥[5] [N
तम् अहं समरे हत्वा तोरणोर्चमम् आ-स्थितः । [N
N] ततो द्वितीयं तनयं व्या-दिदेश स रावणः ॥१०६॥[6] [१२९
१२७उ] तस्याऽप्य् अहं बलं सर्वं तं च राक्षस-पुंगवम् ।
१२९उ] दृष्ट्वा स्व-बले-विध्वस्तं परं हर्षम् उपाऽऽगमम् ॥[11] १०७ [१२६
महता हि महा-बाहुः प्र-यत्नेन महा-बलम् ।
१३०] प्रेषयामास बहुभिः सह वीरैर् मदोत्-कटैः ।
१३१पू] तस्याऽपि हि मया सर्वं तत् सैन्यम् अव-सादितम् ॥१०८ [N
अथेन्द्रजित्-नामधेयो रावणस्याऽऽज्ञया पितुः ।
N] मद् अन्तिकम् उपाऽऽयातो युद्धाऽर्थं युद्ध-कोविदः १०९[14] [१२५उ
सु-चिरं युद्ध-सक्तो मे बल वान् इन्द्र-जित् तदा ।
N] अशक्नुवंश् च मां जेतुं ब्रह्माऽस्त्रं समुदी(दै)रयत् ११०॥[15] [N
१३१उ] ब्रह्मणोऽस्त्रेण मां बंध्वा प्रति-जग्राह दुर्-मतिः । [१२८उ

---

१. आ–सर्वा । अ–संख्ये । २. अ–हतवारणे । ३. च म–नास्ति । ४. म–नास्ति । ५. फ–तत एनं । ६. म–दुर्जयम् । अ–चै पुनः । ७. प्र घ ल१, ल२–ततोऽक्षमपि स्वं पुत्रं प्राहिणोत्मदगर्वितम् । रावणो राक्षसेन्द्रोऽथ सोऽपि तत्र हतो मया ॥ रा–नास्ति । ८. अ–तोरणं समुपस्थितः । ९. रा प्र ब ल१ ल२–१०६–तमश्लोकद्वारभ्य १०८–तमश्लोकान्तः पाठो नास्ति । १०. म–रणे सैन्यं तत्सर्वं समसूदयम् । ११. फ–दृष्ट्वाऽस्वबल० । अ–दृष्ट्वाऽऽत्मबलविध्वस्तः ॥ १२. म–दृष्ट्वेत्यारभ्य अशक्नुवन्नित्यन्तः पाठो नास्ति । १३ आ–मदोत्कटैः । च–महोत्कटम् । १४. आ फ च रा म अ–नास्ति । १५. च बद्धं ।

मम चाऽवध्यतां ज्ञात्वा रज्जुभिस् त्वं अवे-बध्य वै॥११११॥[1][2]

१३२] रावणस्य समीपं तु नीतोऽहं तेन रक्षसा ।[3] [१२९

१३२पू] नीतो[4] दृष्ट्वा[5] तदाऽहं तु रावणेन दुर्-आत्मना[6] ॥११२॥

पथच्छं चैवाऽऽगमनं राक्षसानां तथा वधम् ।[7] [१३०

N] सर्वं च स मया तत्र सीतांऽर्थे मेति-जल्पितः[11]॥११३॥ [१३१

सीतांया दर्शनाऽऽकांक्षी माऽऽप्तस् ते[12] भवनं[13] विभो ।[13]

N] पवनस्यौरसः पुत्रो वानरो हनुमान् अहम् ॥११४॥ [१३२

राम-दूतं च मां विद्धि सुग्रीव-सचिवं हरिम् ।

N] सोऽहं दौत्येन[14] रामस्य त्वत्-समीपम् उपाऽऽगमम्११५[१३३

---

१. आ–त्वपवध्य । च–त्ववध्यत । २. प्र व ल$_1$ ल$_2$–तेन बद्धोऽहमक्षेण विमुक्तश्च निर्धैर्यवान् । द्रष्टुकामो दशग्रीवं बन्धमक्षोऽभवं तदा । म–महाणोऽक्षेण स च मां यबन्धाशु महीनलः । अवध्यतां च मे ज्ञात्वा क्षिप्रकारी निशाचरः । अधिकश्च पाठः—ततो मामन्वबध्नंत रज्जुभिस्तत्र राक्षसाः । रा–नास्ति ॥ ३. प्र व ल$_1$ ल$_2$–नीतोऽहं राक्षसैर्घोरै रावणस्यान्तिकं तदा । म–रावणस्य समीपं च गृहीत्वा मामुपानयन् । रा–नास्ति । ४. फ–दृष्टो नीतस् । ५. म–दृष्ट्वा नीत तदा मां तु रावणः स दुरात्मवान् । रा प्र व ल$_1$ ल$_2$–नास्ति ॥ ६. आ–पप्रच्छुश्चैव गमनं । ७. प्र व ल$_1$ ल$_2$–रावणोऽपि तदानीं [illegible] वाक्यं मामब्रवीदिदम् । अतः परमधिकश्च पाठः–कस्त्वं वानर देवो वा यक्षो नागोऽपि वाऽसुरः । येन वा प्रेषितस्तूर्णं कथयस्व समासतः । ततोऽहमब्रुवं तस्य वाक्यं वाक्यविशारदः । रा–नास्ति । ८. म–एव [illegible] । ९. म–सीतार्थमभिजल्पितः । आ–॰तिजल्पितं । १०. अ–स मया तत्र सीतार्थं सर्वं च प्रतिजल्पितः । रा प्र व ल$_1$ ल$_2$–नास्ति ॥ ११. म–तथाह । १२. म–त्वत्सदन तत. । १३. रा व प्र ल$_1$ ल$_2$–नास्ति । १४. रा प्र ल$_1$ ल$_2$–दूतेन । व म–दूत्येन । १५. फ प्र रा व म ल$_1$ ल$_2$ अ–उपागतः ॥

शृणु चाऽपि समो-देशं यद् अहं प्र-ब्रवीमि ते ।
राक्षसेश हरीऽऽशस् त्वां वाक्यम् आह समा-हितः । [१३४
N] धर्माऽर्थ-काम-सहितं हितं पथ्यम् इवाऽशनम् ॥११६॥[१३५उ
ऋष्य-मूके नि-वसतः पर्वते चित्र-कानने ।
N] राघवो रण-विक्रान्तो मित्रतां समुपाऽऽगतः ॥११७॥ [१३६
तेन वै कथितं राज्ञा भार्या मे रक्षसा हृता ।
N] तत्र स(ऽसा)हाय्य-हेतोस् त्वं सेनां त्वरय दुः-सहाम् ११८[१३७
वालिना हृत-राज्येन मया वै कारणेन सः ।
N] चक्रेऽग्नि-साक्षिकं सख्यं राघवः सह-लक्ष्मणः ॥११९॥[१३९
तेन वालिनम् आ-हत्य शरेणैकेन सं-युगे ।
N] वानराणाम् अहं राजा कृतः प्र-भवता प्र-भुः ॥१२०॥ [१४०
तस्य साहाय्यत् अस्माभिः कार्यं सर्वाऽऽत्मना भृशम् ।
N] ततः माऽऽस्थापयम् तूर्णं समीपं[13] ते स धर्म-वित् ॥१२१॥[१४१
क्षिप्रम् आ-नीयतां सीता दीयतां राघवस्य च ।
N] यावन् न हरयो वीरा वि-धमन्ति बलं तव ॥१२२॥ [१४२
वानराणां स्व-भावो हि[17] न ते न विदितः पुरा ।[18]

१. ल$_2$ अ-ममादेशं । २. फ अ-॰हितम् । ३. च-इवाश-शाम् । रा ब ल$_1$ ल$_2$-इवाश्रताम् । प्र-इवाश्रुताम ॥ ४. आ-ऋक्षमू॰ । ५. फ च रा प्र ब म ल$_1$ ल$_2$-मित्रत्वं समु॰ ॥ अ-मित्रःवाप समागतः । ६. आ-राजन् । ७. आ-सहायार्थहेतोस्त्वं । ८. च-सेनास्त्वरय दुःसहाः । रा प्र व म ल$_1$ ल$_2$-याचे परमदुःखितः ॥ ९. आ-कृत्वाग्नि॰ । अ-कृत्वा-ग्निसाक्षिकः ॥ १०. फ-वानराणां महाराजः । ११. अ-॰वतः ॥ १२. आ-कृत्वं ॥ १३. रा प्र व म ल$_1$ ल$_2$-त्वत्समीपे । आ-॰प मो ॥ १४. आ प्र म अ-सीतां । १५. फ च रा प्र म ल$_1$ ल$_2$ अ-राघवाय ॥ १६. आ-यावन्तो । फ-यावच्च ॥ १७. रा-॰णामभावश्च । फ-॰णां प्रभावोऽपि । प्र च म ल$_1$-स्वभावश्च ॥ १८. ल$_2$-नास्ति ।

N]देवतानाम् अपि सैश्च ये गच्छन्त्य् अ-निवारिताः॥ [१]१२३॥[१४३
N] इति वानर-राजस् त्वाम् आहेत्य् अभि-हितं मया । [१४४पू
१३२उ] राम-दूतोऽहम् अस्मीऽति पुनश् चाऽऽवेदितं मया [२] १२४ [N
N] अवैक्षत स मां क्रुद्धः [३] चक्षुषा निर्-दहन्न् इव । [१४४उ
तेन वध्योऽहम् आ-ज्ञप्तो रावणेन दुर्-आत्मना ॥१२५॥ [१४५पू
१३४] राक्षसाऽधि-पतिं [४] ज्ञात्वा यतने मम निश्चितम् [५] । [N
विभीषणो नाम ततस् तस्य भ्राता महा-मतिः ।
१३५] तेन राक्षस-राजोऽसौ याचितो मम कारणात् ॥१२६॥ [१४६
१३६पू] दूता वध्या न दृष्टा हि राज-शास्त्रेषु रावण ।
N] दूतेन भवितव्यं हि यथाऽभिहित-वादिना ॥१२७॥ [१४८
N] सु-महत्य् अपराधेऽपि दूतस्याऽतुल-विक्रम ।
१३६उ] विरूप-करणं दृष्टं ताडनं चाऽपि शास्त्र-तः॥१२८॥ [१४९
N] विभीषणेनैवम् उक्तो रावणो राक्षसेश्वरः ।
१३७उ] राक्षसान् आ-दिदेशाऽस्य लांगूलं दह्यताम् इति १२९ [१५०
ततस् तस्य वचः श्रुत्वा लांगूलं ते [१४] समन्त-तः ।
१३८] वेष्टयन्त् छण-वस्त्रैश् च [१६] पटैः कार्पासिकैस् तथा १३० [१५१

---

१. फ च रा प्र म थ ल$_1$–सदो । २. आ फ च रा प्र म–०मन्त्रिताः । ३. ल$_2$–नास्ति ॥ ४. अ–अभिहतं । ५. फ–नास्ति ॥ ६. अ–क्रोधाच् ॥ ७. आ–राक्षसानामपि शासा । फ–राक्षसानां परं ज्ञात्वा । च–राक्षसानां वधं ज्ञात्वा । अ–राक्षसेन परिज्ञात्वा । ८. रा प्र थ म ल$_1$ ल$_2$–घातेन । अ–पापेन । ९. फ अ–निश्चियम् । १०. आ–नामतस्तस्य भ्राता म । ११. रा अ–०श्रुतिः ॥ १२. रा ल$_1$ ल$_2$–दूतवध्या । १३. आ–राजन् शास्त्रे म । फ च–राजन् शा० ॥ १४. च रा प्र म ल$_1$ ल$_2$–लांगूले । च अ–लांगूले ॥ १५. अ–च । १६. आ–वेष्टयं छ० । फ–वेष्टयश्छनवल्कैश्च । रा–वेष्टपञ्जीर्णवस्त्रैश्च । प्र म ल$_1$ ल$_2$ अ–वेष्टन्पदाण-पस्त्रैश्च ॥

राक्षसा बद्ध-सन्नाहास् ततस् ते चण्ड-विक्रमाः । [१५२पू
N] लांगूलम् अग्नि-संयोगैः संस्कर्तुम् अभिसं-स्थिताः ॥१३१॥ [N
N] क्रुद्धाः किलकिलायन्तस् ते शस्त्र-वर-पाणयः । [N
१३९पू] आऽदीपयन्त मे पुच्छं स्नेहाऽक्तं दुष्ट-चेतसः ॥१३२[१५२उ
बद्धस्य बहुभिः पाशैर् यन्त्रितस्य च रज्जुभिः ।
N] न मे पीडा भवेत् काचिद् दिदृक्षोर् नगरीं दिवा ॥१३३॥[१५३
N] ततस् ते राक्षसाः शूरा बद्धं माम् अग्नि-संस्कृतम् ।
१३९उ] घोषयन्तो महा-काया नगरी-द्वारम् आऽगमन् १३४॥ [१५४
ततोऽहं सु-महद् रूपं सं-क्षिप्य पुनर् आत्मनः ।
१४०] बंधान् सर्वान् समा-क्षिप्य प्रकृति-स्थः पुनः स्थितः १३५[१५५
आयसं परिघं माऽऽप्य नगर-द्वार्य् अहं पुनः ।
१४१] राक्षसांस् तान् समा-हत्य सूदयामि स्म सर्व-तः ॥१३६॥[१५६
लांगूलेन प्र-दीप्तेन तां पुरीं सौऽट्ट-तोरणाम् ।
१४२] दहाम्य् अहम् अ-संभ्रान्तो युगाऽन्ताऽग्निर् इव प्र-जाः १३७[१५७
दग्धा लंका ततः पश्चाच् छंका माम् अभ्य्-अपद्यत ।[14]
१४३] दग्धा सीता न सं-देहो दुष्-कृतं खलु मे[15] कृतम् ॥१३८॥[१५८
खे गतानां ततो वाक्यं चारणानां मया श्रुतम् ।

---

१. अ-क्रुद्धम् । २. ल₁ ल₂-अदी० ॥ ३. आ-राक्षसैः । ४. च-पीडाभवत्काचिद् दि० । रा प्र ब ल₁ ल₂-पीडाभवत्काचिद्दिधक्षो । म-पीडाभव-त्काचिद्दिधिक्षो ॥ ५. फ-क्रुद्धा । ६. फ-अपि सयुतम् । ७ आ-महारावान् ॥ ८. च रा प्र ब म ल₁ ल₂-पुनः ॥ ९ च-नास्ति । १०. फ-समुत्पत्य । अ-समाप्लुत्य । ११. अ-०शः ॥ १२. आ-साद० । १३. रा प्र ब म ल₁ ल₂-दग्धवानहम० ॥ १४ आ-दग्ध्वा लंका ततश्चाह सकामभ्य-वपद्यत । च-दग्धा लंका ततश्चाह शंका मा० । रा प्र ब म ल₁ ल₂-लंकां दग्धवतश्चैव शंका मे समजायत । अ-दग्धा लंका ततः पश्चा-च्छोकमभ्यवपद्यत । १५. फ-सुमहत् ॥ १६. आ-खग० । १७. अ-च मे ॥

दँग्धेयं नगरी लङ्का साऽट्ट-प्राकार-तोरणा । [N

१४४] जानकी तुं नें दग्धेति विस्मयोद्वात्तं-भाषिणाम् १३९ [१६१उ

ततो मे हर्ष उत्पन्नः श्रुत्वा ताम् अद्भुतां गिरम् । [१६२पू

N] खे गैतानां वचैः श्रुत्वा हर्षाद् द्विगुण-विक्रमः ॥[4]१४०॥ [N

पुच्छं निर्-वाप्य सहसा समुद्रे लवणाऽम्भसि ।[5]

N] निश्चयाऽर्थं पुनस् तत्र गत्वा दृष्ट्वा च जानकीम् ॥[6]१४१॥ [N

अभि-वाद्य ततो देवीं गँमनाऽर्थेऽहम् उँत्सुकः ।

N] अरिष्टं नगम् आ-साद्य पुप्लुवे सरितां पतिम् ॥१४२॥[8] [N

शत-योजन-विस्तीर्णं वेगेन हरि-यूथपाः ।

N] आँगतोऽहं गिरि-श्रेष्ठं[11] भवतां दर्शनोत्सुकः ॥१४३॥ [N

एतद् राम-प्रभावेण वैदेह्याश् च तपो-बलात् ।[12]

१४५] सु-ग्रीवस्य प्रीत्य्-अर्थं मया सर्वम् अनु-ष्ठितम् ॥१४४॥ [१६८

एतत् सर्वं यथा-तत्त्वं यथा-वद् उप-वर्णितम् ।[13]

---

१. फ अ—न तु । २. रा—विस्मयाद्दिवि भाषिताम् । प्र व ल$_1$ ल$_2$—विस्मयाद्दिति भाषितम् । म—विस्मयाद्दिति भाषिताम् ॥ ३. आ प्र म ल$_1$ ल$_2$—खग० । ४. आ—च श्रुत्वा च । ५. फ अ—नास्ति ॥ ६. फ अ—गत्वा च तां पुनर्दृष्ट्वाऽभिवाद्य ह मावरम् । अतः परमधिकः पाठः—च रा प्र य म ल$_1$ ल$_2$—गत्वा च तां पुनर्दृष्ट्वाऽभिवाद्याहमागतः ॥ ७. च रा व प्र म ल$_1$ ल$_2$—गमनार्थं । ८. फ अ—१४२—१४३श्लोकौ न स्तः ॥ ९. प्र म ल$_1$ ल$_2$—पुंगवाः । च रा व—पुगवः । १०. च रा व प्र म ल$_1$ ल$_2$—आदरादहं । ११. आ—०श्रेष्ठे ॥ १२. च रा व म प्र ल$_1$ ल$_2$—द्विवारं पठितः ॥ १३. फ—एतत्सर्वं मया तत्त्वं समासादुपदेशितम् । च—एतत्सर्वं यथातत्त्वं समासादुपवर्णितम् । रा प्र

१४६] अत्र यन्न कृतं किंचित् तत् पुनः क्रियताम् इति॥[1] १४५[१६९[2]

इत्यार्षे रामायणे सुन्दर-काण्डे हनुमत्-कर्म-निवेदनं
नाम षट्पंचाशः सर्गः ॥५६॥[3]

---

ब म ल$_1$ ल$_2$–एतत्सर्वं यथातत्त्वं समासेनोपवर्णितम्। अ–सर्वमेतन्मया तत्त्वं समासादुपवर्णितम्।

१. फ च रा प्र ब म–यदत्रानन्तरं कार्यं तत्सर्वं क्रियतामिति। अ–प्रत्ययाय च कृतं कृत्यं तत्पुनः क्रियतामिति॥ २. ल$_2$–इति। ३. अा–॰कर्मनिवेदनो। ब–हनुमन्निवेदनं। अ–हनुमत्कर्मनिवेदने सागरप्रत्यालंघनो नाम॥

एवम् आ-ख्याय तत् सर्वं हनुमान् मारुताऽऽत्म-जः ।
१] भूयः समुप-चक्राम वचनं वक्तुम् उत्तमम् ॥१॥ [१
स-फलो राघवोद्योगः सु-ग्रीवस्य च सं-गमः ।
२] शीलम् आ-साद्य सीताया मम च प्रवेनं महत् ॥२॥ [२
आर्यायाः सदृशं शीलं सीतायाः प्लवगर्षभाः ।
३] तपसा धारयेल् लोकान् क्रुद्धा सा निर्-दहेद् अपि ॥३॥
सर्वथाऽतिम-मात्रोऽसौ रावणो राक्षसाऽधिपः ।
४] परंपंतः स्पृशतः साध्वीं गात्रं न शतधा गतम् ॥४॥ [३
न तद् अग्नि-शिखा कुर्यात् सं-स्पृष्टा पाणिना सती ।
५] जनकस्य सुता कुर्याद् यत् क्रोध-कलुषी-कृता ॥५॥ [४
अशोक-वनिका-मध्ये रावणस्य दुर्-आत्मनः ।
६] अधस्तात् छिंशिंपायाः साध्वू अध्यू-आस्ते शोक-कर्षिता ६[२४
७पू] राक्षसीभिः परि-वृता शोक-संताप-दुर्मनाः ।
N] मेघ-लेखा-परि-वृता चन्द्र-लेखेव निष्-प्रभा ॥७॥ [२५
N] न चिन्तयति वैदेही रावणं बल-दर्पितम्[१७] ।

---

१. अ-उत्तरम् ॥ २. फ-संभ्रमः । ३. ल$_{1}$-दीप्तम् । ४. आ-दी० । ५. घ-मम कर्म च या । म-सफलो मम च । ल$_{1}$-मम तद्दर्शनं । रा-मम च पौरुषं । ङ घ-मम च क्रमणं । ६. आ-प्रति । म-श्रमः ॥ ७. अ-पुनः ॥ ८. च-मर्यादनिष्य० । आ-०र्यानिष्य० । अ-०र्या विप्र० । ९. अ-०मेश्वरः । १०. च रा व अ म ल$_{1}$ ल$_{2}$ अ-यस्य तां । ११. आ-कृतम् ॥ १२. अ-प्राणिना ॥ १३.अ -अधस्ताछिंशिपायाः ॥ १४. ल$_{1}$ल$_{2}$-त्रुटितः पाठः । १५. अ-०कर्षिता । १६. ल$_{1}$ ल$_{2}$-त्रुटितः पाठः ॥ १७. अ-त्रुटितः पाठः ।

७३] पति-व्रता तु सा देवी सततं सुव्यव-स्थिता ॥[1]८॥ [२६
अनु-रक्ता हि वैदेही[2] रामं सर्वाऽऽत्मना शुभा ।
८] अनन्य-चित्ता रामे सा पौलोमीऽव पुरं-दरे ॥९॥ [२७
तद् एव वासः सरजः पांशु-ध्वस्ता तथैव सा ।[6]
९] शोक-संताप-दीनांऽगी सीता भर्तृ-हिते रता ॥१०॥ [२८
सा मया राक्षसी-मध्ये तर्ज्यमाना पुनः पुनः ।
१०] राक्षसीभिः सु-घोराभिर् दुष्टाभिः प्रमदा-वने ॥११॥ [२९
एक-वेणी-धरा दीना भर्तृ-चिन्ता-परायणा ।
११] अधः-शय्या विवर्णांऽगी पद्मिनीऽव हिमाऽऽगमे ॥१२॥[३०
रावणाद् विनि-वृत्ताऽर्थी मर्त्तव्ये कृत-निश्चया ।
१२] कथं-चिन् मृग-शावाऽक्षी विश्वासम् उपं-पादिता ॥१३॥ [३१
ततः सं-भाषिता चैव तत्त्वम् अर्थं च दर्शिता ।
१३] राम-सुग्रीव-सख्यं च श्रुत्वा प्रीतिम् उपाऽऽगता ॥१४॥ [३२
नि-यमं समुद्-आचारं भक्तिं भर्तरि चोत्तमां । [३३पू.
१४] यां धारयति लोकेषु साध्वी सेयम् अभि-धीयते ॥[19]१५॥[
सर्व-था सीतया दग्धम् तपसा स निशा-चरः । [N

---

१. आ-पातिव्रतत्वे । च रा ब प्र म ल$_1$ ल$_2$-पतिव्रतात्वे । २. अ-त्रुटितः पाठ ॥ ३ अ-०वृता । ४ आ-रामे तु । च-रामेऽपि । ब प्र म ल$_1$ ल$_2$ ■ अ-रामेण ॥ ५ अ-च । ६. फ-सा एक वस्त्रसंवीता रजोध्वस्ता तथैव च । ७ फ-०दीनाङ्गी ॥ ८ आ-०णा । ल$_2$-०नः । ९ रा ब प्र म ल$_1$ ल$_2$ अ-रक्षिता ॥ १०. प्र-०णान्तात्रिवृ० । ल$_1$ ल$_2$-०णार्थान्निवृ० । ११. अ-०कृतनिश्चया ॥ १२ फ-प्रदर्शिता । १३. आ-०गतम् ॥ १४. आ-०मः।१५. आ-०रो । १६. आ-भर्तृभक्तिरिवोत्तमा । १७ प्र म ल$_1$ ल$_2$-सा । १८. अ-सा साध्वीय० । १९ आ-यस्सा धारयते तस्य महान्स खलु रावण० ॥ २०. रा म-तपसा । २१. रा म-०स्सीतया । २२. ल$_1$-च ।

निमित्त-मात्रं रामस् तु वधे तस्य भविष्यति ॥१६॥[N३३
एवम् आस्ते महा-भागा सीता शोक-परायणा ।
१९] यद् अत्र प्रति-कर्तव्यं तद् सर्वं क्रियताम् इति ॥१७॥ [३५
तस्य तद् वचनं श्रुत्वा वालि-सूनुर् अभाषत ।
५८,१]जाम्बवंत-प्रमुखान् सर्वान् अनुं-मान्य महा-कपिः१८[६०,१N
अस्मिन्न् एवं-विधे कार्ये भवतां च नि-वेदिते ।
२] न्याय्यं च सह वैदेह्या द्रष्टुं नृप-वराऽऽत्म-जौ ॥१९॥ [N
अहम् एको हि पर्य्-आप्तः स-राक्षस-गणां पुरीम् ।
३] लंकां तु तरसा हन्तुं रावणं च बलोत्कटम् ॥२०॥ [२
किं पुनः सहितो वीरैर् बलवद्भिः कृताऽऽत्मभिः ।
४] कृताऽस्त्रैः प्लवने शक्तैर् भवद्भिर् विजयोद्यतैः ॥२१॥ [३
अहं रावणं संख्ये स-सैन्यं स-पुरः-सरम् ।
५] स-पुत्रं वि-धमिष्यामि स-सुहृद्-बान्धवं युधि ॥२२॥ [N
ब्राह्मम् ऐन्द्रं च रौद्रं च वायव्यं वारुणं तथा ।
६] यदि शक्र-जितोऽस्त्राणि दुर्नि-रीक्ष्याणि सं-युगे॥ २३॥[N
तानि अहं वि-धमिष्यामि हनिष्यामि च राक्षसान् ।
७] तद् भवद्भिर् अनु-ज्ञातो दर्शयामि स्वे-विक्रमम् ॥२४॥[20] [N

१. आ-०भूतो । २. अ-०वन्तप्र० । ३. च-हनुमान्स ।
४. फ-०पीन् । ५. च रा ब प्र म ल$_{1}$ ल$_{2}$-०च महाकार्ये । ६. फ-०न्याय्यौ नः । ७. फ अ-लङ्कां तौ । ८. रा ब प्र म ल$_{1}$ ल$_{2}$-नाशयितुं । ९. अ-०स्त्रैश्च वने० । आ-०स्त्रैः प्लवणे । प्र म ल$_{1}$ ल$_{2}$-०स्त्रैः प्लवणैः । अ-०स्त्रैश्चरणे ।
१०. फ-०स्थितम् । अ-०द्यतैः ॥ ११. अ-०पुर बलम् । १२. ल$_{1}$-त्रुटितः पाठः । १३. म-०वाराणि । प्र-त्रुटितः । १४. प्र-त्रुटितः पाठः । १५. ल$_{1}$,ल$_{2}$-नास्ति । १६. प्र ल$_{2}$-त्रुटितः पाठः । १७. आ च प्र ल$_{2}$-निहंष्यामि च । रा-विनिहंष्यामि । १८. फ च-भवद्भिरनु० । रा म ल$_{2}$-भवद्भिरभ्यनु० । ब-भवद्भिरभ्यनु० । १९. फ च-नवि० । प्र-सुवि० । २०. ल$_{1}$-ल-नास्ति ।

मया[1]ऽतुल्या वि-सृष्टा चे शैल-शृष्टिरं[2] अनु-अन्तरा ।
८] देवान् अपि रणे हन्यात् किं पुनस् तान् निशा-चरान् ॥२५॥[N
अतीऽयात् सागरो वेलां मन्दरः प्र-चलेत् तथा[3] ।
९] जाम्ब-वन्तं न समरे जयेयुर् युधि राक्षसाः ॥२६॥ [N
सर्व-राक्षस-संघातो[4] राक्षसेश्वर[5]-पूर्वकाः ।
१०] अलम् एको हि[6] निधने तेषां वायु-सुतः[8] कपिः[7] ॥२७॥ [N
पनसस्योरु[9]-वेगेन नलस्य च महाऽऽत्मनः ।
११] गिरयश् च वि-दीर्यन्ते[10] किं पुनर् युधि राक्षसाः ॥२८॥[N
न[11] देवोऽसुर-यक्षेषु पन्न-गेषु नगेषु[12] च[13] ।
१२] मैन्दस्य[14] प्रति-योद्धारं पश्येयं द्वि-विदस्य वा ॥२९॥ [N
अश्वि-पुत्रौ महा-वेगौ तौ हि[15] प्लव-गोत्तमौ[16] ।
१३] पितामह-वरोत्सेकात् परमं यत्नम् आ-स्थितौ ॥३०॥ [N
अश्विनोर् माननाऽर्थं हि[17] सर्व-लोक-पितामहः[18] ।

---

१. रा ब प्र म ल$_2$–मत्पौरुष वि० । फ अ–०ष्टात्तु । ल$_1$–त्रुटितः पाठः । २. फ अ–०शिर्निरं । ३. फ–०लेदपि ॥ ४. फ–०संघा ये । रा–०संघातान् । अ–०संघातास्तु । ५. आ–०सेश्वर० । फ–०सेम्यश्वर । रा–०र्वक । ब प्र म ल$_1$ ल$_2$–०र्वकान् । ६. रा म–निहन्तु हि । ब–हि निधने । ७. रा म–कपिर् । ब–अयं । ८. [illegible] म–वायुसुतो ह्यहम् । ब–वायुसुतः प्रभुः । प्र ल$_2$–वायुसुतो जवे । ल$_1$–वायुसुतो ह्ययम । ९. ल$_1$–परमस्यो । १०. फ–०योप्यवदीर्येयुः । ब प्र म ल$_1$–०योपि । ल$_2$–यो हि । ११. आ–स देवा० । फ–०देवेन्द्र० । प्र–तदेवा० । १२. फ रा ब म ल$_1$ ल$_2$–नरेषु । प्र–सुरेषु वा । च अ–नागेषु वा । १३. आ रा–०मैंद्रस्य । १४. ब प्र म ल$_1$ ल$_2$ अ–च । १५. रा ब प्र म ल$_1$ ल$_2$–०वेगावेतौ प्लु० । आ–अश्विनागरुडावेतौ । १६. आ अ–महाप्लवगसत्तमौ । १७. आ–अश्विनौ मनितार्थौ हि । फ–अश्विनौ मननार्थं च । अ–अश्विनौ बलिनौ यौ हि । १८. अ–०महैः ॥

१४] सर्वोऽवेध्यत्वम् अतुलम् उभयोर् दत्तवांस् तथा ॥३१॥ [N
तेनोत्सेकेन महता प्र-मथ्य महतीं चमूम् ।
१५] सुराणाम् अमृतं वीरौ पीत-वन्तौ प्लवं-गमौ ॥३२॥ [N
तद् एताव् अपि सं-क्रुद्धौ स-वाजि-रथ-कुंजराम् ।
१६] लंकां नाशयितुं शक्तौ सर्वे तिष्ठन्तु वानराः ॥३३॥ [N
अ-युक्तं हि विना देवीं सीताम् असित-लोचनाम् ।
१७] समीपे गमनं तस्य राघवस्य महाऽऽत्मनः ॥३४॥ [४
दृष्टा देवी न चाऽऽनीतेत्य् एवं तत्र नि-वेदितुम् ।
१८] अ-युक्तम् अपि जानामि भवद्भिः ख्यात-कर्मभिः॥३५॥ [५
उ१९] न हि वः प्लवने कश्चित् नाऽपि कश्चित् पराऽऽक्रमे ।
तुल्यः समस्त-दैत्येषु लोकेषु हरि-सत्तमाः ॥३६॥ [६
२०] जित्वा लंकां राक्षसांश् च हत्वा तं रावणं रणे ।
पू२१] सीताम् आ-दाय गच्छामः सिद्धाऽर्था हृष्ट-मानसाः ॥३७॥ [७
तेष्व् एवं हत-शेषेषु राक्षसेषु हनूमता ।
N] किं प्राऽऽप्त-कालं कर्तव्यं प्राऽऽप्य गच्छाम मैथिलीम् ॥३८॥ [८
राम-लक्ष्मणयोर् मध्ये न्यस्येम जनकाऽऽत्म-जाम् ।

---

१. ल$_1$ ल$_2$—०युष्य० । २. श्रा ल$_1$ ल$_2$—वदा । ३. ल$_1$—तेनास्सु०। ४. व प्र ल$_2$—प्लवोत्तमौ । ५. अ—०रौ । ६. ल$_2$—०न्ति । ७. फ च—० पं ग० । ८. फ ल$_1$—सीता । ९. ल$_2$—नास्ति । १०. रा व प्र म ल$_1$ ल$_2$—०क्रमेव । ११. च—रहितः । रा व ल$_1$ अ फ—नहि नः । १२. श्रा—प्लवणे । १३. ल$_1$ ल$_2$—सामरदै० । अ—सागरदै० । १४. श्रा—लंकां सरक्षौघां । रा व प्र म ल$_1$ ल$_2$—सरक्षसां लंकाम् । १५. च रा व प्र म ल$_1$ ल$_2$ अ—वेष्वहम् । १६. फ—रक्षस्सु हरि-सत्तमाः । १७. रा प्र म ल$_1$ ल$_2$—०मि । १८. फ—न्यसामो । च रा व प्र म ल$_1$ ल$_2$—न्यसेरन् । अ—संन्यस्य ।

अंगदस्य वचः श्रुत्वा जांब-वान् वाक्यम् अब्रवीत् ।

१] नैषा बुद्धिर् महा-बाहो यद् ब्रवीषि महा-कपे ॥१॥ [११

वि-चेतुं वयम् आ-दिष्टा दक्षिणां दिशम् उत्तमाम् ।

२] नाऽऽनेतुं कपि-राजेन नैवं रामेण धीमता ॥२॥ [१२

कथंचिन् निर्-जितां सीताम् अस्माभिर् नाऽभि-रोचयेत् ।

३] राघवो नृप-शार्दूलः कुलं व्यप-दिशन् स्व-कम् ॥३॥ [१३

प्रति-ज्ञाय स्वयं राजा सीता-विजयम् अग्र-तः ।

४] सर्वेषां कपि-मुख्यानां कथं मिथ्या करिष्यति ॥४॥ [१४

वि-पुलं कर्म च कृतं भवेत् तुष्टिर् न तस्य तु ।

५] वृथा वो दर्शितं वीर्यं भवेद् वानर-पुंगवाः ॥५॥ [१५

तस्माद् गच्छामहे सर्वे यत्र रामः स-लक्ष्मणः ।

६] सु-ग्रीवश् च महा-तेजाः कार्यस्याऽस्य नि-वेदने ॥६॥ [१६

N] जयद्रथम् तेऽर्थं तद् वाक्यं कपेर् जाम्ब-वतस् तदा । [६१, १पू

७पू] बाढम् इत्य्-एव चोक्त्वा वै प्र-स्थानं सम्-अरोचयन् ॥७॥ [N

N] अंगद-प्रमुखा वीरा जाम्बवांश् च महा-कपिः । [१उ

८उ] प्रीति-मन्तश् च ते सर्वे वायु-पुत्र-पुरः सरा (:) ॥८॥

---

१. आ-महाबुद्धः । २. ल$_2$-विमेतुं । ३. अ-आदिष्टा । ४. च-नानेन । रा प्र घ ल$_2$-तेनैव । म ल$_1$-तेन वै । ५. रा म ल$_1$-राघवेण च । प्र घ ल$_2$-रामेणैव च । ६. अ-कथं विनिर्० । ७. आ-नावरो० । रा प्र घ म ल$_1$ ल$_2$-नैव रो० । अ-०भिरभिरो० । ८. फ च रा प्र घ म ल$_1$ ल$_2$-महत् । ९. फ-०ज्ञातं । अ-०ज्ञातुं । १०. अ-राज्ञा । ११. रा-न च । १२. अ-भविष्यति । १३. च रा प्र घ ल$_1$ ल$_2$-तस्कृत्वा । अ-कर्ता वै । १४. फ प्र ल$_1$ अ-च । १५. फ-कार्यस्य विनिवेदने । १६. अ-ते च । १७. आ-हनूमांश्च ।

महेन्द्रोऽग्रं परि-त्यज्य पुप्लुवुर् वानरोत्तमाः ।
N] मेरु-मन्दर-संकाशा मत्ता इव महा-गजाः । [२
८पू] छादयन्त इवाऽऽकाशं कपयस् तोय-दा यथा ॥९॥ [३
सं-पूज्यमानं भूतैश् च हनुमन्तं महा-बलम् ।
९] कपि-श्रेष्ठं महा-कायाः पिबन्त इव दृष्टिभिः ॥१०॥ [४
रामस्य चाऽर्थ-सिद्धिं च भर्तुश् च वि-पुलं यशः ।
१०] समा-धाय समृद्धाऽर्थाः कर्म-सिद्धिम् अन्-उत्तमाम् ॥११॥ [५
प्रियाऽऽख्यानोत्सुकाः सर्वे सर्वे युद्धाऽभि-नन्दिनः ।
११] सर्वे राम-प्रतीकारे निश्-चितोऽर्थौ मनस्-विनः ॥१२॥ [६
प्लवमानाः खम् आ-श्रित्य ततस् ते काननौकसः ।
१२] नन्दनोपमम् आ-सेदुर् वनं द्रुम-लताऽऽकुलम् ॥१३॥ [७
यत् तन् मधु-वनं श्री-मत् सु-ग्रीवस्य सु-रक्षितम् ।
१३] अ-धृष्यं सर्व-भूतानां सर्व-भूत-मनो-हरम् ॥१४॥ [८
यद् रक्षति महा-वीर्यः सदा दधि-मुखः कपिः ।
१४] मातुलः कपि-मुख्यस्य सु-ग्रीवस्याऽमितौजसः ॥१५॥ [९
ते तद् वनम् उपाऽऽगम्य बभूवुर् हृष्ट-मानसाः ।
१५] वानरा वानरेन्द्रस्य मनः-कान्तं मनो-रमम् ॥१६॥ [१०

---

१. अ–महेन्द्राद्रिं । २. फ प्र व म ल$_1$ ल$_2$–वानरर्षभाः । ३. फ–०द्विपाः । ४. च रा प्र व म ल$_1$ ल$_2$–तोयदोपमाः । ५. आ–०मानस्तु तैश्च । ६. अ–समाज्यमानो भूतैस्तैर्जाम्बवान्सुमहाबलः । ७. रा प्र ब म ल$_1$ ल$_2$–०श्रेष्ठं म० । अ–हनूमन्तं महावेगं । ८. फ–कपीत्यारभ्य सर्वे रामेत्यन्तः पाठो नास्ति । ९. प्र म ल$_1$ ल$_2$–राघवस्यार्थसिद्धिं च । अ–रामस्य चार्थसंसिद्धिं । १०. अ–जसः । ११. रा प्र ब म ल$_1$ ल$_2$–नास्ति । १२. अ–निश्चिताश्च म० । ल$_2$–निश्चिताऽर्थास्तपस्विनः । १३. अ–०णा । १४. फ–समाश्रित्य । १५. अ–हि चेच्छितम् । १६. आ–भूतैश्च रा म ल$_1$–०लोकानां । १७. रा म ल$_1$–वीरः । १८. रा प्र ब म ल$_1$ ल$_2$ अ–०हरम् ॥

ततस् ते वानरा हृष्टा दृष्ट्वा मधु-वनं महत् ।
१६] हनूमन्तम् अयाचन्त जाम्बवत्-प्रमुखास् तदा[1] ॥१७॥
स चाऽङ्गदम् उपाऽऽगम्य याचति[2] स्म तदा मधु ।[3]
१७] सिद्धाऽर्थानां किलाऽस्माकं प्रसादं कर्तुम् अर्हसि ॥[4]१८॥[N
अंगदस् तु हनूमन्तं प्र-शंस्य[5] शुभया गिरा ।
१८] किम् इच्छसि वदस्वेति प्रीतो वाक्यम्[6] उवाच ह ॥१९॥ [N
अंगदस्य वचः श्रुत्वा हनूमान् हरि-पुंगवः ।
१९] ज्ञातिभिः सहितो हर्षाद् इदं वचनम् अब्रवीत् ॥२०॥ [N
राज्ञस् तु यत् ते[7] पितुर् अप्य् अ-प्रधृष्यं
　　वनं बभूवाऽप्रतिमं सु-गुप्तम् ।
तद् देहि दायं हरि-पुंगवानां
　　सुदुर्-लभं नो हरि-राज-पुत्र ॥२१॥ [N

इत्यार्षे रामायणे सुन्दर-काण्डे वानर-प्रत्यागमनं
नामाऽष्टपंचाशः सर्गः[11] ॥५८॥

---

१. अ–नास्ति । २. आ–याचन्ति । रा प्र व म $ल_1$ $ल_2$–याचते । ३. अ–कुमारमयम्याचन्त मधूनि मधुपिंगलाः । ४. अ–इतः परं सर्गान्तः पाठो नास्ति । ५. व–प्रशंस्य । ६. फ–वाक्यं शुभ वहम् । ७. फ–ते यद् । ८ फ–तुष्टयै । ९. $ल_1$–इति । १०. आ–उद्योगपर्वणि वानर० । च–वानरप्रत्यागमनं । ११. अ–सर्गसमाप्तिर्नास्ति ॥

श्रुत्वा हनुमतो वाक्यम् अंगदः प्र-वराऽगंदः ।

१] प्रत्य्-उवाच महा-तेजाः पिबन्तु हरयो मधु ॥१॥[३] [२

ततः कुमारस् तान् सर्वान् जाम्बवत्-प्रमुखान् हरीन् ।

N] अनु-मान्य ददौ तेषां नि-सर्गं मधु-भक्षणे ॥२॥ [६०,६१

अवश्यं कृत-कार्यस्य कार्यं हनुमतो वचः ।

२] अ-कर्तव्यम् अपि प्राज्ञैः किम्-अंग पुनर् ईदृशम् ॥३॥[७] [३

एतत्व तु वचनं श्रुत्वा अंगदस्य मुखोद्-गतम् ।

३] साधु साध्व् इति स-हृष्टा वानराः प्रत्य्-अपूजयन् ॥४॥ [४

अंगदेनाऽभ्यनु-ज्ञाताः प्र-हृष्टास् ते तु वानराः । [N

४] पूजयित्वाऽगदं सर्वे यूथे प यूथ पर्षभाः ।

५पू] जग्मुर् मधु-वनं रम्यं नदी-वेगा इव द्रुतम् ॥५॥ [५

N] ते प्र-विष्टा मधु-वन पालान् नाऽगणयस् तदा ।

५उ] अति-हर्षाश् च पटवः सीताया दर्शनेन च ॥६॥ [६

६पू] उत्-पत्य च ततः सर्वे वन-पालान् समन्त-तः ।

ताडयन्ति स्म तरसा प्र-विशन्ति दिशो दश । [७

---

१ फ–हनू० । २ प्र ब म ल$_1$ल$_2$–वाक्य वानरप्रवरोऽगद । ३ अ–नास्ति । ४ ष–जाम्बवान् प्र० । ५ प्र ब म ल$_1$ल$_2$–विसर्गं । अ–नि सर्गं । ६ अ–वद । ७ अ–३ पश्चात्कादाऽस्य ७–प्रश्लोन्त पाठो नास्ति । ८ रा प्र ब म ल$_1$ ल$_2$–एव । ९ फ च प्र रा ब म ल$_1$,ल$_2$–मुखाच्च्युतम् । १० च रा प्र म ल$_1$,ल$_2$–प्रहृष्टा वानरास्तु त । ११ फ–यूथपा यूथपषमस् । १२ फ च रा म–सर्वे । १३ च रा म ०वेगा । १४ फ च रा म–द्रुमम् । १५ रा ल$_1$–फलान्यनमयस । ब प्र ल$_2$–फलान्यानमयस् । । १६ फ च–०हर्षाच्च । रा प्र ब म ल$_1$ ल$_2$ ०हर्षादपटव । १७ च रा प्र ब ल$_1$ ल$_2$–०पाला । १८ रा ब म ल$_1$ ल$_2$–ताडितास्तैश्च । प्र–ताडिताश्चैव । १९ फ–वरितास्ते द्रवन्ति । च–तरसा द्रवन्ति च । रा ब प्र म ल$_1$ ल$_2$–तरसा द्रवन्ति स्म ।

N] आसयित्वा तु तान् आशु वानरान् ते वलोत्कटाः ॥७॥[2] [N
६उ] अति-हृ(ह्र)ष्टाः कुमारेण धीमता वालि-सूनुना ।
हरयः प्रत्य्-अपद्यन्त द्रुमान् मधुकराऽऽकुलान् ॥८॥[4] [N
७] लोडयन्ति स्म शत-शः सर्वे मधु-वनं तदा ।[5]
भक्षयन्तः सु-गन्धीनि मधूनि रस-वन्ति च[6] ॥९॥ [N
९] जग्मुः प्र-हर्षं ते सर्वे बभूवुश् च मदोत्कटाः ।[8] [N
मधूनि द्रोण-मात्राणि बहूनि परि-गृह्य ते ॥[9]१०॥
N] पिबन्ति कपयः केचित् संघ-शस् ते[10] प्रहृष्ट-वत् ।
८उ] शातयन्ति च ते हृष्टा भक्षयन्ति स्म चाऽपरे ॥११॥ [८
पीत्वा केचित् प्र-विध्यन्ति वन्युं-यूथान् वली-मुखाः ।
१०] अपरे मधु-शिष्टेन जघ्नुर् अन्योऽन्यम् उत्कटाः ॥१२॥[13] [९
मधु पीत्वा प्र-णादांश् चाऽप्य्-उत्-सृजन्ति महा-बलाः ।[15]
N] अन्ये सुखोप-विष्टाश् च जघ्नुर् अन्ये मदोत्कटाः ॥[16]१३॥[N
N] अपरे तरु-शाखासु मदाऽऽविष्टा ललम्बिरे ।
अन्ये च वृक्ष-मूलेषु वि-हरन्तः प्लवं-गमाः ।
१.१] अत्य्-अर्थम् आशितांःक्रान्ताः पर्णान्य् आ-स्तीर्य शेरते१४[१.०

---

१. च प्र ब म ल१—तु तान्सर्वान् । ल२—च तान्सर्वान् । २. अ—नास्ति ॥ ल१—अतिहृष्टाः । अ—ते विसर्गः । ३. अ—प्रमप० । ४. फ—नास्ति । ५. ल१—क्षोभयन्ति । ६. फ अ—नास्ति । ७. अ—मूलानि च फलानि च । ८. अतः परमाधिकः पाठः—प्र—अतिघृष्टाः कुमारेण धीमता वालिसूनुना । फ—नास्ति । ९. अ—अत आरभ्य 'नृत्यन्ति हृष्टवत्' इत्यन्तः पाठो नास्ति । १०. फ—संघशस्तत्र हृ० । रा ना ल१—संघशश्च प्र० । ११. प्र म ल१ ल२—स्म । १२. फ—सक्षीर्यवान् । च रा प्र ब ल१ ल२—मधुयूथान् । म—मधुयूथान् । १३. च अ—नास्ति । १४. रा प्र च म ल१ ल२—पीत्वाथ नादांश्च विसृजन्ति । १५. फ च—नास्ति । १६. ल१ ल२—जग्मुर् । १७. फ—नास्ति । १८. आ—ते तु शा० । रा—मधु० । १९. आ फ च—आसितः । ल१—आश्रिताः । २०. फ च—

उन्मत्त-भूताः प्लव-गा मधु-पान-प्रहर्षिताः ।
१२] क्षीवाः कुर्वन्ति हास्यं च कलहांश् च प्र-कुर्वते ॥१५॥ [११
१४उ] अ-तृप्तवत् पिबन्त्य् अन्ये मधूनि मधु-पिंगलाः ।
१३पू] केचित् तालान् प्र-कुर्वन्ति केचिन् नृत्यन्ति हृष्ट-वत् ।
N] क्षिपन्ति च तथाऽन्योऽन्यं स्खलन्ति च पृथक्-क्रियाः ॥१६[N
खादन्ति केचिद् वि-हरन्ति केचिद्
N] द्रवन्ति केचित् प्र-हसन्ति केचित् ।[12]
१५[a]] नदन्ति केचित् प्र-हसन्ति केचिद्[b]
N] धावन्ति केचित् कथयन्ति केचित् ॥१७॥[N
१५[c]] गायन्ति केचिद् वि-मृशन्ति केचिद्
नृसन्ति केचित् प्र-पतन्ति केचित् ।[d]
ध्यायन्ति केचित् प्र-पठन्ति केचित्[21]
N] क्रुध्यन्ति केचित् क्षमयन्ति केचित् ॥१८॥[e] [N
स्तुवन्ति केचिद् वि-हसन्ति केचिद्

---

१. प्र ल$_2$–क्ष्वेडाः । ल$_1$–क्ष्वेडः । २. आ–कुर्वन्विहास्यं । ३. ब–स्म । ४. रा म ल$_1$–कलहं च । ब–कलहं स्म । ५. फ–तालानि कुर्वन्ति । ब–तालान्स्म कु० । ल$_2$–कालान्प्र० । ६. फ–०वान् । ७. च–चलन्ति । ८. आ च–०क्रियाम् । ९. रा प्र ब म ल$_1$ ल$_2$–केचिरिक्षिपन्ति चान्योन्य चलन्ति च पृथक् क्रियाः । अ–हृष्टो मधुना मत्ताः केचि. स्सुप्ताः महीतले ॥ १०. फ–रुदन्ति । ११. रा प्र ब ल$_1$ ल$_2$–प्रहरन्ति । १२. म अ–नास्ति । १३. च रा प्र ब म ल$_1$ ल$_2$ अ–नास्ति । १४. फ–स्वपन्ति । अ–प्लवन्ति । १५. रा प्र ब म ल$_1$ ल$_2$–प्रपतन्ति । १६. रा प्र ब म–स्मयन्ति । ल$_1$ ल$_2$–स्नायन्ति । १७. च–प्रमृशन्ति के० । आ–विमृशन्ति के० । रा प्र ब म–ल$_1$ ल$_2$–प्लवगाः प्रहृष्टाः । १८. च–केचिच्च नदन्ति । १९. रा प्र ब म ल$_1$ ल$_2$–नास्ति । २०. च–नमन्ति । २१. प्र ब ल$_1$ ल$_2$–नास्ति । २२. आ–क्षपयन्ति । म–प्रतासन्ति । २३. अ–विवदन्ति ।

दीव्यन्ति केचित् प्र-पतन्ति केचित् ।
पिबन्ति[1] केचित् प्र-हरन्ति[2] केचित्
N] . . स्मयन्ति[3] केचित् प्लव-गाः प्र-हृष्टाः[4] ॥१९॥[5] [N
परस्परं केचिद् अ (?उ)पाऽऽश्रयन्ति[6]
परस्परं केचिद् अपाऽऽक्रमन्ति ।[7]
मही-तलोत्[10] केचिद् उदीर्ण-सत्त्वा
१६] द्रुमाद् द्रुमाऽग्राण्य् अभिसं-पतन्ति ॥२०॥ [N
प्र-गीतम् अन्येषु[12] तु हसन्न्[13] उपैति
प्र-हस्य चाऽन्यैः प्र-नुदन्न् उपैति ।[14]
प्र-यान्तम्[15] अन्यः सहसाऽभ्युपैति[16] ।
१७] हसन्तम् अन्यः प्र-पतन्न्[18] उपैति ॥२१॥[17] [N
द्रुमाद् द्रुमं केचिद् अपाऽऽक्रमन्ति

---

१. म अ-प्रलपन्ति ।२. अ-स्वपन्ति । ३. म-प्रवसन्ति । अ-•श्रमयन्ति । ४. अ-हसन्ति केचिद्व्यहरन्ति केचित् । ५. रा प्र घ ल$_1$, ल$_2$-नास्ति । ६. आ-अश्रासयन्ति । ७ म-अपाश्रवन्ति । रा घ ल$_1$ ल$_2$-अपः स्रवन्ति । प्र-अपश्रपन्ति । ७. अतः परमधिकः पाठः—अ-नदन्ति केचिद्विवदन्ति केचित् पिबन्ति केचिच्च वदन्ति केचित् । स्मरन्ति केचित् प्रहरन्ति केचित् प्लवंगमाः साधुतया प्रहृष्टाः॥ ८. आ-अपाश्रयन्ति । च-अपश्रवन्ति । रा घ ल$_1$ ल$_2$-अपश्रपन्ति । ९. अतः परमधिकः पाठः-च अ-परस्परं केचिदपत्रपन्ति । १०. रा प्र घ ल$_1$ ल$_2$-•गताः के० । म-•तले के० । अ-•तलं के० । ११. च रा प्र घ म ल$_1$ ल$_2$-द्रुमाग्राण्यपि सं०। अ-द्रुमाग्रानभि० । १२. आ-अन्ये प्रहसन् । च-अन्यं च ह० । १३. आ-प्रमत्तमन्यः । १४. रा प्र घ म ल$_1$ ल$_2$-नास्ति । १५. प्र म-प्रयान्तमन्यः । ल$_2$-प्रपतन्तमन्यः । आ फ च ब- •न्तमन्यं । १६. आ-सहसाभ्युपैति । ल$_2$-सहसाभ्युपैति । १७. फ च रा प्र घ ल$_1$ ल$_2$-अन्यं । १८. आ-प्रणदन् । फ-प्रपठन् । रा प्र घ म ल$_1$ ल$_2$-प्रपतन्तमन्यं । १९. अ-नास्ति ॥ २०. ल$_1$-अपक्र० ।

यष्टी-तलात् केचिद् अपाऽऽक्रमन्ति

क्षितिं नगाऽग्रात् नि-पतन्ति केचित्

N] क्षितेर् नगाऽग्रं नि-पतन्ति केचित् ॥२२॥ [N

समा-कुलं तत् कपि-सैन्यम् आसीत्

मधु-प्रपानोत्कट-सत्त्व-चेष्टम् ।

न चाऽत्र कश्चिन् न बभूव मत्तो

१८] न चाऽत्र कश्चिन् न बभूव तृप्तः ॥२३॥ [N

ततो वनं तत् परि-भज्यमानम्

द्रुमांश् च विध्वंसित-पत्र-पुष्पान् ।[13]

सम्-ईक्ष्य सर्वान् दधि-वक्त्र-नामा

१९] नि-वारयामास कपिः कपींस् तान् ॥२४॥ [N

स तैर् मदोद्रं अप्रति-वीर्य-रूपैः[14]

बलाद् बलौघैः परि-वार्यमाणः ।[15]

प्र-धर्षितस् सक्त-भयैः सम्-एत्य

N] प्र-कम्पितः कम्पितवान् परान् सः[16] ॥२५॥ [N

स तैः प्र-मत्तैः परि-भर्त्स्यमानो

१. फ—०तले । २. रा प्र थ म ल, ल२—अति क्र० । ३. ल१—नुगाग्रात् । ल२—नगाग्रानि । ४. च रा प्र थ म ल१ ल२—केचिच्चितेरभ्यमाव्रजन्ति । ५. क—नास्ति । अतः परं । च रा प्र थ म ल१ ल२—'अपतन्नुपेति' इति पूर्वपठितः पुनरावृत्तः ॥ ६. घ—प्रपाणे० । ७. था च—०चेष्टाः । अ—०दष्टे । ८. अ—तत्र । ९. ल१—केचित् । १०. फ—त्रितृप्त एव । ११. म—०मद्यमार्गं । ल१—०मुग्य-मानं । ल२—प्रविभज्यमाणं । १२ अ—नास्ति । १३. अ—कपीश्वरस् । १४. आ—महात्माऽप्रति० । १५. अ—सुदुर्मदांश्चाप्रतिरूपधैर्यः । १६. म—०माणः । १७. फ अ—बलाच्च तेनोपरि वार्यमाणः । १८ ल१—०परादः । १९. आ—प्रकृष्यताकर्षेत चापरान्सः । अ—प्रकम्पिताकर्षेत वा परस्परं । २०. म ल२—प्रमत्तः । अ—प्रवृत्तैः ।

वनस्य गोप्ता हरि-वीर-वृद्धः ।
चकार भूयो मतिम् उग्र-तेजा
२०]　　वनस्य तस्य अति-वारणाऽर्थम् ॥२६॥ [N
उवाच कांश्चित् परुषाणि धृष्टः
कांश्चित् तलैनाऽपि जघान रोषात् ।
सम्-एत्य कैश्चित् कलहं चकार
N]　　तथैव साम्नोप-जगाम कांश्चित् ॥२७॥ [N
नखैश् च तीक्ष्णैर् दशनैर् दशन्तस्
तलैश् च पादैश् च सम्-आप्नुवन्तः ।
महा-कपिं ते कपयः समेता
N]　　महा-वनान् निर्-विषयं च चक्रुः ॥२८॥ [N.

इत्यार्षे रामायणे सुन्दर-काण्डे मधु-भक्षणं
नामैकोनषष्टितमः सर्गः ॥५९॥

---

१. अ—०मुख्यः । २. घ रा म ल$_1$ अ—०रक्षणार्थम् । च प्र ल$_2$—०रक्षणाय । ३. फ अ—क्रुद्धः । च प्र ल$_2$—रुष्टः । ल$_1$—दुष्टः । ४. रा ल$_1$ अ—तलेनाभिज० । ५. आ अ—कैश्चित् । ६. अतः परमधिकः पाठः—अ—स वानरो वानरयूथनाथः । अयं च सार्धश्लोकः २८—शश्लोकाद् परं पठितः ॥ ७. ल$_1$—केचिद्दशनैर् । ८. फ—धाप्लुवन्तः । घ रा प्र व म ल$_1$ ल$_2$—आप्लवन्तः । ९. फ म—वं । १०. म—०वलानि । ल$_2$—०वणात् । अ—०वने । ११. आ म ल$_2$ अ—स्म । १२. ल$_2$—इति सु० । अ—सुन्दरकाण्डे । ल$_1$—इत्यार्षे रामायणे । १३. अ—०भक्षणो ॥

तत्र[1] वै[2] मधु-पाला ये स्थिता दधि-मुखाऽऽज्ञया ।[3] [१४पू.
३] नाऽचिन्तयन्त[4] तान् सर्वान्[5] वार्य-माणाः[6] प्लवं-गमाः॥[7] १ [N
ते[8] विकृष्टाश् च जानुभ्यां देव-मार्गाश्[9] च दर्शिताः ।[10] [१५पू.
४] वानरैर् बहुभिर् भीमैः[11] प्रति-षिद्धा दिशो गताः ॥२॥[12] [१४उ
अब्रुवन् परमोद्विग्नाः पाला[13] दधि-मुखं[14] तदा । [१५उ
५] तैराऽङ्गद-हनूमद्भिर्[15] हतं मधु-वनं प्रभो[16] ॥[17]३॥
वयं नि-घृष्टा[18] जानुभ्यां देव-मार्गाश्[19] च दर्शिताः ।[20] [१६
६] यद् अत्राऽनन्तरं कार्यं तत् त्वं कर्तुम् इहाऽर्हसि ॥[21]४॥ [N
ततो दधि-मुखः[22] क्रुद्धो वन-पालाऽधिपस् तदा ।
७] हतं मधु-वनं मत्वा[23] हतांश् चाऽऽश्वासयद् हरीन्॥[24]५॥ [१७

---

१. ध म-तत्रैव । २. प्र-०वशः । ३. अ-ये तत्र मधुपालस्य प्रेक्षया दधिमुखस्य ते । अतः परमधिकश्च पाठः-तानुवाच हरिश्रेष्ठो हनूमान्पवनात्मजः । सुग्रीवमनसः ·····मधु सेवत वानराः । अतः परं च ५९तमसर्गारम्भे त्यक्ताः कतिचिच्छ्लोकाः "श्रुत्वा हनुमतो वाक्य" मित्यारभ्य "हरयो मधुना मत्ताः" इत्यन्ताः पुनरालिखिताः । ४. फ-न चिन्तयतस्तान्सर्वे । ५. म-०णान् । ल$_2$-०णः । ६. ध प्र ल$_2$-०मान् । ७. अ-नास्ति ॥ ८. म ल$_1$-तैर्विकृष्टाश्च । ल$_2$-तैस्तैर्विकृष्टा । ९. रा ध प्र ल$_2$-०मार्गाश्च । ११. अ-०वीरैः । १२. फ-द्विधो ॥ १३. ल$_2$-गात्वा ? । अ-गात्वा । १४. ध-०मुखाद् । १५. फ-तावांग० । १६. रा ध प्र म ल$_1$ ल$_2$-प्रभो । १७. अ-हनूमता दुष्टवीरैर्हतं मधुवनं च यत् ॥ १८. च ध प्र ल$_2$-प्रहृष्टा । रा म-विकृष्टा । १९. च ध प्र ल$_2$ म-०मार्गाश्च । ल$_1$-मार्गं च । २०. अ-जानुभिस्ते प्रघृष्टाश्च देवमार्गं प्रदर्शिताः । २१. अ-नास्ति ॥ २२. ल$_1$-मुखं । २३. प्र म ल$_1$ ल$_2$-श्रुत्वा । २४. आ-हतान्सान्त्वमृगानहरीन् । अ-सान्त्वयामास तान्कपीन् । रा ध-हतानाश्वासयद्धरीन् ॥

एह्य[1] आगच्छत गच्छामो वानरान् अति-दर्पितान्[2] ।
८] बलेन वारयिष्यामो भक्ष-माणान् मधूऽत्तमम् ॥[3]६॥ [१८
श्रुत्वा दधि-मुखस्यैतद्[4] वदतो वानरर्षभाः ।[5]
९] पुनर् वीरा मधु-वनं तेनैव सहिताः[6] ययुः ॥[7]७॥ [१९
ते लता-पादपांश् चैव पाषाणान् अपि वानराः ।
११] गृहीत्वाऽभ्य् अगमन् क्रुद्धा[8] यत्र ते कपि-कुञ्जराः ॥८॥ [२१
ते स्वामि-वचनं श्रुत्वा हृदयेष्व् अव-शाप्य[9] तत्[10] ।
१२] हरयोऽपि[11] गताः सर्वे शाल-ताल-शिलाऽऽयुधाः[12] ॥९॥[13] [२२
मध्ये चैषां[14] दधि-मुखः प्र-गृह्य द्रुमम् उत्तमम् ।
N] समभ्य् अधावद् वेगेन[†] ते[15] च सर्वे[‡] प्लवं-गमाः ॥१०॥ [२०
वृक्ष-स्थांश् च स्थल-स्थांश् च वानरा बल-दर्पितान् ।
N] अभि-चक्रमिरे वीराः पालास् तत्र सहस्र-शः ॥[16]११॥ [२३

---

१. फ–तत्रागच्छत । प्र–एह्यागच्छामि । २. प्र–०हर्षितान् । ३. अ–धारयिष्यामि शार्न् गत्वा प्रभुञ्जानान् मधूत्तमान् ॥ ४. फ–०स्यैव व० । ५. अ–नास्ति । ६. फ–सहसा । ७. अतः परमधिकः पाठः—च रा व प्र म ल₁ ल₂ अ–समभ्यधावन्योगेन। ते च सर्वे‡ प्लवंगमाः ॥ ८. फ–०त्वा भ्यद्रवन् क्रु० । रा ल₁–०त्वाभ्यागमंस्तत्र ॥ ९. प्र–०पु विशाप्य । फ–०प्ववसद्य । प्र च घ म ल₁ ल₂–०प्ववसज्य । रा–०प्ववसज्य । प्र–पु विसज्य । अ–०ष्ववसज्य । १०. अ–च । ११. फ–हरयः समहृष्यन्त । अ–हरयोऽभिगताः सर्वे । १२. ल₁–सालतालशिलायुधाः । १३ आ अ फ च–अतः परं ७ड पुनः पठितः ॥ १४. अ–नेषां दधि० । व प्र ल₂–दधि मुखश्चैषां । १५. अ–सर्वे चैत्र ॥ १६. आ–०स्याश्च । १७. आ–०स्याश्च । १८. च–अथ च० । रा व प्र म ल₁ ल₂–उप० । अ–अतिच० । १९ रा व प्र म ल₁ ल₂–लाः शतस० । २१. अ–कोषे सर्गः समाप्तिर्दृश्यते ॥

---

†म ल₂–०धावन्वेगेन । ल₁–०धावद्वेगेन । ‡ल₁–सर्वे च ।

बलान् निवारयिष्यन्त आ-सेदुर् हरयो हरीन् ।
N] सं-दष्टौष्ठ-पुटाः क्रुद्धा भर्त्सयन्तो मुहुर् मुहुः ॥१२॥[2] [२४
अथ दृष्ट्वा दधि-मुखं क्रुद्धं वानर-पुंगवाः ।
१३] अभ्य्-अधावन् सुसं-क्रुद्धा हनूमत-प्रमुखास् तदा॥१३॥[6] [२५
स-वृत्तं तं महा-बाहुर् आ-पतंतं महा-बलः ।[10]
१४] वेग-वंन्तं नि-जग्राह बाहुभ्यां कुपितोऽङ्गदः ॥१४॥ [२६
मदाऽन्धो न कृपां चक्रे आर्यः कोऽयं ममेति सः ।[15]
१५] अथैनं निष्-पिपेषाऽऽशु वेगेन वसुधा-तले ॥१५॥ [२७
स भग्न-बाहूऽऽरु-मुखो विह्वलः शोणितोक्षितः ।
१६] सं-मुमोह महा-वीर्यो मुहूर्तं कपि-कुञ्जरः ॥[17]१६॥ [२८
स कथंचिद् वि-मुक्तस् तैर् वानरैर् वानरर्षभः ।[18]
६२,१] उवाचैकान्तम् आ-गम्य तान् भृत्यान् समुपाऽऽगतान् ।[20] १७
तत्राऽऽगच्छत गच्छामो भर्त्ता नो यत्र वानराः ।
२] सु-ग्रीवो विपुल-ग्रीवः सह रामेण धीमता ॥१८॥ [३१
सर्वं चाप्यंगदे दोषं श्रावयिष्यामि वानराः ।

---

१. ल₂–आसीदुर् । २. अ–नास्ति ॥ ३. फ म–सर्वे । ४. फ–अभ्यद्रवन्त सं०।अ–०धावत सं०।५ फ–०खाः कपिम्। म–०खा अपि। अ–०खास्तथा। ६. घ रा घ प्र ल₁,ल₂–नास्ति ॥ ७. आ–सवृक्षस्तं । ८. म–०बाहुर् । ६. म–०बलं । १०. घ रा घ प्र ल₁ ल₂–नास्ति । ११. ल₂–०वन्ता । १२. फ–कपिमङ्ग० ॥ १३. आ–मदान्धो । १४. फ–कार्यः । १५. अ–मदान्धश्च न वेदैनमार्यः कोऽयं ममेति यत् । १६. ल₂–अथेनां ॥ १७. घ व प्र ल₁ ल₂–नास्ति ॥ १८. फ–वानरोत्तमः । १६. घ–आगत्य । २०. रा घ प्र म ल₁ ल₂–समभाषत तान् सर्वान् वानरान्समुपागतान् । अ–उवाच कान्ति० मागत्य तान् हरीन् समुपागतान् ॥ २१. ल₁–भर्त्तारो । २२. ल₂ अ–वानरः । २३. म ल₁,ल₂–०वो रामेण सह । २४. फ–वा अङ्गदे। घ–चाप्यंगदे। २५. आ–०ष्याम ।

३] अ-मर्षी न हि तां श्रुत्वा धर्षणां मर्षयिष्यति ॥१९॥ [३२
मियं मधु-वनं ह्य् एतत् सु-ग्रीवस्य महाऽऽत्मनः ।
४] पितृ-पैतामहं दिव्यं देवतैर् अप्य् अ-धर्षितम् ॥२०॥[1] [३३
स वानर-पतिः श्रीमान् मधु-लुब्धान् गताऽऽयुषः ।
५] घातयिष्यति दण्डेन तीक्ष्णेन स-सुहृज्-जनान् ॥२१॥ [३४
वधम् एषां नृ-शंसानां नृपाऽऽज्ञा-परिदूषिणाम् ।
६] धर्षणाऽऽमर्षितो रोषात् सर्वेषां कारयिष्यति ॥२२॥[8] [३५
एवम् उक्त्वा दधि-मुखो वन-पालो महा-बलः ।
७] जगाम सहसोत्-पत्य वन-पालैः समा-वृतः ॥[12]२३॥ [३६
निमेषाऽन्तर-मात्रेण संप्राऽऽप्तः स वने-चरः ।
८] सहस्रांऽशु-सुतो धीमान् सु-ग्रीवो यत्र वानरः ॥२४॥ [३७
राघवं सह सु-ग्रीवं लक्ष्मणं च सम-ईक्ष्य सः ।[15]
९] सर्व-प्रतिष्ठां जगतीम् आकाशान् नि-पपात ह ॥[17]२५॥[३८
१०पू] स नि-पत्य महा-वीर्यः सर्वैस् तैः परि-वारितः ।[18] [३९पू
स दीन-वदनो भूत्वा कृत्वा शिरसि चाऽञ्जलिम् ।
११] सु-ग्रीवस्य शुभौ मूर्ध्ना चरणौ नि-पपात ह ॥२६॥ [४०

---

१. फ-अमर्षन् । च-अमर्षी । २. फ-वैः । च-वान् । रा-वं । ब प्र ल१ ल२ अ-वच् । ३. ब प्र ल१ ल२ अ-सु० ॥ ४. ल२-नास्ति ॥ ५. फ-वानरानिमान् सर्वान् । ६. आ-०युषा ॥ ७. अ-वधाहान्सुनृशंसांश्च । ८. फ-०कारणात् । अ-०दूषकान् । ९. फ-धर्षितं । आ-धर्षणां म० । अ-मर्षतो । १०. फ-स करिष्यति ॥ ११. ल२-हन्त्वायुधः । १२. फ-संमन्ततः । १३. ल१-नास्ति ॥ १४. आ-०रमार्गेण । १५. अ-स राघवं सहसु० । १६. म-दृष्टवतः । १७ आ अ-सर्वे प्र० । अ-०सर्वे प्रतिष्ठा ॥ १८. च रा ब प्र ल१ ल२-नास्ति । अतः परमधिकः पाठः-फ अ-हरिर्दधिमुखः पालः पालानां परमेश्वरः । म-हरिं दधिमुखः पालैर्वनपालाधिपस्ततः । १९. अ-०वीरः । २०. अ-चांऽञ्जलिम् । २१. ल२-शुभो ॥

स तैः कथंचित् कपिभिर् वि-मुक्तः
सप्-एत्ये रोज्ञा मन्चरो हरीणाम् ।
विवेचयामास वनं च भग्नं
N] मधूनि मुख्यानि च भक्षितानि ॥२७॥ [N

ईत्यार्षे रामायणे सुन्दर-काण्डे मधुवने-विलोपनो,
नाम षष्टितमः सर्गः ॥६०॥

---

१. अ–मर्मात्य ।२ फ–राज्ञे । ३. आ–रक्षितानि ॥ ४. ल२ अ–इति । ल१–इत्यार्षे सु० ।५.फ–वाल्मीकीये मधुवनविलोपनं । म–०काण्डे मधुवनविलोपनं । अ–मधुभक्षणे सुग्रीवनिवेदनो । च–काण्डे मधुवणवि ०॥

ततो मूर्द्ध्ना नि-पतितं वन-पालं कपीऽऽश्वरः ।
१] दृष्ट्वोद्विग्न-हृदयं वाक्यम् एतद् उवाच ह ॥१॥ [१
उत्तिष्ठोत्तिष्ठ कस्मात् त्वं पादयोः पतितो मम ।
२] अ-भयं ददामि ते वीर तत्त्वम् एवाऽभि-धीयताम् ॥२॥ [२
किं सं-भ्रमाद् विवक्षुर्स् त्वं ब्रूहि यद् वक्तुम् इच्छसि ।
३] कच्चिन् मधु-वने स्वस्ति श्रोतुम् इच्छामि वानर ॥३॥ [३
स समा-श्वासितस् तेन सु-ग्रीवेण महाऽऽत्मना ।
४] उत्थाय च महा-प्राज्ञो वाक्यं दधि-मुखोऽब्रवीत् ॥४॥ [४
ऋक्ष-राजेन यद् वोऽपि न त्वयाऽपि न वालिना ।
५] वनं विसृष्ट-पूर्वं हि वानरैस् तद् वि-नाशितम् ॥५॥ [५
न्य्-अवारयम् अहं चैतान् सहैभिर् वन-चारिभिः ।
६] अ-विचिन्त्य तु मां हृष्टा भक्षयन्ति पिबन्ति च ॥६॥ [६

---

१. घ--०पालो । २. फ--महाकपिः । च रा प्र व म ल१ ल२--हरीश्वरः ॥ ३. आ--दृष्टि ॥ ४. अ--विवक्षुस् । ५. आ--कश्चिन् । रा घ--किंश्चिन् । ६. आ--मानद । ल१--वाण ॥ ७. आ--०श्वासितस् । ८. आ च प्र व ल२--म म० । फ रा म--सुम० । ९. ल१--नाकि ॥ १०. फ च रा प्र म ल२--यत्पूर्वं । घ--जगाम । ११. फ ल२ घ--त्वया न च । च रा प्र व म--त्वया नापि । १२. ल१--निसृष्ट० । अ--निसृष्ट० । १३. अतः परमधिकः पाठः--फ--अङ्गदप्रमुखैः सर्वैर्वानरैस्तत्प्रदर्शितैः । म--हनूमता जाम्बुवता तारेण च नलेन च । कुमुदेन च मैन्देन सरभेनाङ्गदेन च ॥ सर्वैः प्रचण्डैर्हरिभिर्ध्वस्तं तैस्तन्महावनं । महाबलैस्तैः कपियोधमुख्यैः समन्ततः सम्परिवार्य सर्वैः । हतं प्रहृष्टैर्बहुमुख्यवानरैर्महावनं तत्प्रथितं महात्मनः ॥ भग्नं वृक्ष (?) मथितं समन्तात् प्रसादलब्धं मधु तत्पिबामः । अहं समभ्यत्य च तान्न्यवारयम् न मे वचः कश्चिदपि शृणोति ॥ १४. आ फ--निवारयच्चहं । अ--न्यवारयमहं । १५. घ--चैभिर्वानरैर् । १६. फ--०गोचरैः । १७. फ सर्वे ॥

केचिंद् च रोषाद् गर्जन्ति वि-द्विपन्ति तथाऽपरे ।
१०] प्र-स्फुरन्त्य् अपरे क्रुद्धा भ्रुवोऽन्ये वि-क्षिपन्ति च ॥७॥ [N

१२पृ] इत्य् एवम् अतिसं-क्रुद्धाः सम्प्र-हारं प्र-कुर्वते ।
७उ] ते मया प्रति-षिध्यन्तो भर्त्सयन्ति वली-मुखाः ॥८ [N
अहं तु संरब्ध-तरैस् तथा तैः सम्प्र-धर्षितः ।
८] नि-वारयामि बाहुभ्यां सहैभिर् वन-गोचरैः ॥९॥ [९
ततस् तैर् बहुभिः क्रूरैर् वानरैर् अंगदेन च ।
९] संरक्त-नयनैः क्रूरैर् अहम् एत्य(ऽपा)स ताडितः॥१०॥[१०
जगतां कृष्य-माणश् च जानुभ्यां विनि-पातितः ।
११] प्र-कृष्य च यथा-कामं देव-मार्गे च दर्शितः । [११
१२उ] तैः सर्वैः परम-क्रुद्धैर् वन-पालाश् च मामकाः ॥ ११॥ [N
एवम् अस्मि हतः शूरैस् त्वयि तिष्ठति भर्तरि ।
१३] कृत्स्नं मधु-वनं चैव प्र-कामं सम्प्र-धर्षितम् ॥१२॥ [१२
एवं वि-ज्ञाप्यमानं तु सु-ग्रीवं प्लवगर्षभम् ।

---

१. फ–केचिद्रोषात्प्रगर्जन्ति । आ–०द्रोषादूगच्छन्ति । २. फ–कूरा ॥ ३. फ ल$_1$ ल$_2$–अभिसं० । ४. फ–०हारान । ५. फ अ–प्रचुक्रिरे । ६. रा व म ल$_1$ ल$_2$–०पिद्वाश्च । ७. अ–मया प्रतिनिषिध्यन्तस्तर्जयन्ति वलामुखाः । फ–नास्ति । अतः परमधिकः पाठः–च रा प्र व म ल$_1$ ल$_2$–अति चैवोच्छ्रेय-स्तेषां भुवन्ति परुषाणि च ॥ ८. रा प्र ल$_1$ ल$_2$–च । ९. फ–वारयामि स । रा–निवर्तयामि । १०. फ–वनचारिभिः ॥ ११. च रा प्र व म ल$_1$ ल$_2$–सर्वैर । १२. अ–क्रुद्धैर् । १३. ल$_1$–अहं प्रच्युत । फ अ–०मुत्पाय ॥ १४. फ–निहतश्चास्मि । च–कृष्यमाणश्च । १५. च–नानाभ्यां । १६. अ–च नि० । १७. च रा प्र व ल$_1$ ल$_2$ अ–आकृष्य । १८ फ–०मार्गश्च । ल$_2$–०मार्गे स । १९. अ–नास्ति । अतः परमधिकः पाठः–म–वानरेश महाप्राज्ञ महाबल महाद्युते ॥ २०. ल$_2$–अस्ति । २१. आ–तं प्र० । ल$_1$–संप्रदर्शितं ॥ २२. फ प्र व ल$_1$ अ–प्लवगेश्वरम् । रा म ल$_1$–वानरेश्वरम् ।

१४] अपृच्छत्[1] स महा-तेजा लक्ष्मणः पर-वीर-हा ॥१३॥ [१३
[2]किम् अयं वानरो राजन् वन-पः प्रत्युप-स्थितः ।
१५] किं चाऽर्थम्[3] अभिनिर्-दिश्य दुःखितो वाक्यम् अब्रवीत् ॥१४॥ [१४
एवम् उक्तस्[4] तु सु-ग्रीवो लक्ष्मणेन महाऽऽत्मना ।
१६] लक्ष्मणं प्रत्यु-उवाचेदं वाक्यं वाक्य-विशारदः[5] ॥१५॥ [१५
N] अयं लक्ष्मण सम्प्राऽऽप्तो वन-पः शृणु कारणम् ।
वि-चिं[6]त्य दक्षिणाम् आशाम् आ-गतैर् हरि-यूथ-पैः[7] ॥१६॥ [१६उ
१७] अंगद-प्रमुखैर् वीरैर् हतं[8] मधु-वनं मम ।[9]
आ-ख्यातं चांगद-मुखैर् वानरैर् मधु भक्षितम् ॥१७॥ [१६पू
N] तेषाम्[10] अकृत-कार्याणां नेदृशः स्याद् व्यति-क्रमः । [१७पू
यद् अर्थम्[11] अभि-पन्नाम् ते साधितं कर्म तैर्[12] ध्रुवम् ॥१८॥ [१८
N] आ-गतोऽसौ प्र-हृष्टश्[13] च यथा मधु-वनं हरिः । [१७पू
१८उ] प्र-[14]हृष्टैर् वानरैः सर्वैर् हनुमत्-प्रमुखैर् वृतः ॥१९॥[15] [N
धर्षितं च वनं कृत्स्नम् उप-भुक्तं च तत्र मधु ।[15] [१७उ
१९] वारयन्तश्[16] च सम्प्राऽऽप्ताः पाला जानुभिर् आ-हताः ॥२०॥
तथा न गणितश्[17] चाऽयं कपिर् दधि-मुखो बली ।
पतिर् मधु-वनस्याऽयम् अस्माभिः स्थापितः स्वयम् । [१९

---

१. फ च रा प्र व म ल१—अपृच्छत्सुम० । अ—अपृच्छत म० ॥ २ फ—किमर्थम० । च—किं चार्थमभिनिर्देशात् । प्र म—किं चार्थम० ॥ ३. अ—उक्तः सुसुग्रीवो । ४. अ—०विदां वरः । ५. आ—विमयः ॥ ६. आ—विचिंत्य । ७. अ—नास्ति ॥ ८. रा म ल१—महत् । ९. फ—आख्याति पालानुक्रम्य वानरैर् । रा प्र—आख्याति सांगदमुख्यैर् । १०. अ—नैवमकृतकार्याणामीदृशः ॥ ११. फ अ—तदर्थम् । च रा म ल१—वनं यद् । प्र व ल२—वयं यद् । १२. फ—तद् । १३. फ—प्रविष्टश्च ॥ १४. आ—प्रवृष्टो ॥ १५. अ—नास्ति । १६. फ—चैव ॥ १७. अ—सदा ।

N] सं-सिद्धाऽर्थाश् च कपयः पिबन्तु तृषिता मधु ॥[2]२१॥ [N
दृष्टा च मन्ये वैदेही[3] न चाऽन्येन हनूमतः ।
N] महान् स साधने हेतुः कर्मणस् तद्-विधो भवेत् ॥२२॥ [२०
हनूमतो हि सिद्धिश् च कपेर् मतिर् अतीऽव च ।
N] व्यव-सायश् च वीर्यं च शौर्यं तेजं इव ध्रुवम् ॥२३॥ [२१
जाम्ब-वान् यत्र नेता स्याद् अंगदश् च महा-बलः ।
N] हनूमांश् च प्रति-ध्राता न तत्र गतिर् अन्यथा ॥२४॥ [२२
अंगद-प्रमुखैर् वीरैर्, हतं मधु-वनं किल । [२३पू
N] वि-चिंत्य दक्षिणाम् आशाम् आ-गतैः कपि-कुंजरैः २५[12] [N
कौमम् अर्थम् अनुप्राऽऽप्तो वक्तुं मधु-वनेश्वरैः ।
२०] नाम्ना दधि-मुखश् चैव कपिः प्रख्यात-विक्रमः ॥२६॥ [२४
दृष्टां तु मन्ये वैदेहीं सुमित्राऽऽनन्द-वर्द्धन ।
२२] सं-सिद्धाऽर्था हि कपयः पिबन्तु सहिता मधु ॥२७॥[18] [२५
अ-दृष्ट्वा न हि ते सीतां वानराः पुरुषर्षभ ।
२३] धर्षयेयुर् मधु-वनं व्यक्तं दृष्टा हि जानकी ॥२८॥ [२६
तस्य तद् वचनं श्रुत्वा सु-ग्रीवस्य महाऽऽत्मनः ।
N] लक्ष्मणो मति-सम्पन्नो वानरेशम् अथाऽब्रवीत् ॥२९॥[22] [N

---

१. रा ल१–तृषिताः पिबन्तु कपयो । म–तृषिताः पिबन्ति कपयो॥ २. अ–नास्ति । ३. फ–दृष्टा मन्ये च । च रा प्र ब म ल२–दृष्टां तु मन्ये वैदेहीं । ल१–दृष्टा तु मन्ये । ४. आ फ च रा प्र घ म ल१–हनूमता । ५. फ रा प्र ब म ल१ ल२ अ–न ह्यस्य: ॥ ६. अ–व्यवसाय च । ७. अ–सौर्यतेज ॥ ८. अ–तस्माद् । ९. च–गतिम् ॥ १०. अ–विचिंत्य । ११. अ–आता वानरैः । १२. फ–नास्ति ॥ १३. च प्र ब म ल१ ल२ अ–एतद् । १४. अ–प्राप्तुं । १५. अ–०वन स्थित ॥ १६. अ–दृष्ट्वा ममेति । १७. आ–सुमित्रानन्दि० । १८. म–पिबन्ति ॥ १९. फ–नास्ति । २०. ल२–अदृष्टानि। २१. च–०भाः ॥ २२. ल१–२९-वाश्लोकादारभ्य ३४-वाश्लोकान्तः पाठो नास्ति ॥

-अंगदो येषु अनुप्राऽऽप्तो वि-चित्वा दक्षिणां दिशम् ।
N] प्र-हृष्टर्[2] वानरैः सर्वैर् हनूमत्-प्रमुखैर् वृतः ॥[3]२०॥ [N
धर्षितं च वनं सर्वम् उप-भुक्तं च तन् मधु ।
N] वारयन्तश् च सम्प्राऽऽप्ताः पाला जानुभिर् आ-हताः ॥२१॥[N
यथा न गणितश् चाऽयं कपिर् दधि-मुखो बली ।[4]
N] पतिर् मधु-वनस्यौऽयं युष्माभिः स्थापितः स्वयम् ॥२२॥[N
दृष्टां तु मन्ये वैदेहीं शत-पत्र-निभाऽऽननाम् ।
N] कृत-कार्यास् ततः सर्वे पिवन्तु हरयो मधु ॥२३॥ [N
नाऽनवाऽऽप्य हि सीतां ते वानरा वानरेश्वर ।
N] धर्षयेयुर् मधु-वनं व्यक्तं दृष्टा हि जानकी ॥२४॥ [N
ततः प्र-हृष्टो धर्माऽऽत्मा राघवः सह-लक्ष्मणः ।
२४] श्रुत्वा कर्ण-सुखां वाणीं सुग्रीव-वदन-च्युताम् ॥२५॥
माऽहृष्यत भृशं रामो लक्ष्मणश् च महा-बलः । [२७
N] दृष्ट्वा दधि-मुखं चैवं सु-ग्रीवश् चाप्यं-अहृष्यत ॥२६॥
२५उ] वन-पालं पुनर् वाक्यं सु-ग्रीवः प्रत्य्-अभाषत । [२८
प्रीतोऽस्मि सौम्य यद् भुक्तं वनं तव कृत-कर्मभिः ॥२७॥
२६] तेषां च कृत-कार्याणां [11]मर्षणीयं वि-चेष्टितम् । [२९
गच्छ शीघ्रं मधु-वनं सं-रक्षस्व त्वम् एव हि ।

---

१. फ व-यदि संप्राप्तो । प्र अ-यत्तु० । २. फ म अ-प्रहृष्टो । ३. च प्र ब ल₂-नास्ति ॥ ४. फ अ-युष्माभिः स्थापित स्वयम् । ५. ल₂-वनस्याहं । ६. फ म अ-पिबन्ति ॥ ७. म-वानरर्षभ । ल₂-वानरेश्वराः । अ-०रः । ८ आ-कर्णसुखावाणी ॥ ९. फ अ-दधिमुखस्यैवत् । १०. च प्र व म-चाप्यभाषत । रा ल₂ अ-चाभ्यभाषत ॥ ११. फ-मर्षनीयं ।

२७] तांश् च प्रेषय सर्वांस् त्वं हनूमत्-प्रमुखान् कपीन् ॥२८॥[३०

इच्छामि शीघ्रं हनुमत्-प्रधानान्
शाखा-मृगांस् तान् मृग-राज-दर्पान् ।
द्रष्टुं कृताऽर्थान् सह राघवाभ्यां
२८] श्रोतुं च सीताऽधि-गमं प्र-यत्नात् ॥२९॥ [३१

इत्यार्षे रामायणे सुन्दर-काण्डे मधुवन-भंगे सुग्रीव-वाक्यं नामैकषष्टितमः सर्गः ॥६१॥

---

१. रा $ल_1$—तान्प्रेषयेह । ब—तान्प्रेषयस्व च । प्र $ल_2$—तान्प्रेषय च । फ प्र ब $ल_2$—हरीन् ॥ ३. श्रा—॰मृगांश्च । ४. रा—कृतार्थास् ॥ ५. श्रा फ—आर्षे रा० । $ल_2$—इति । ६. फ—दधिमुखसुग्रीववाक्यं नाम । $ल_2$ $ल_2$—मधुवनभंगो नाम । श्र—सुग्रीववाक्यं नाम ॥

सु-ग्रीवेणैवम् उक्तस् तु हृष्टो दधि-मुखः कपिः ।
१] उक्त्वा धन्योऽहम् अस्मीऽति चरणात् अभ्य्-अवादयत्॥१॥[१
राघवं लक्ष्मणं चैव सु-ग्रीवं चाऽभि-पूज्य सः ।
२] वानरैः सह शूरैस् तैर् दिवम् एवोत्-पपात ह ॥२॥ [२
यथैवं चाऽऽगतः शीघ्रं तथैव त्वरितं गतः ।
३] नि-पत्य गगनाद् भूमिं तद् वनं प्र-विवेश ह ॥३॥ [३
स प्र-विष्टो मधु-वनं ददर्श हरि-यूथपान् ।
४] वि-मदान् उत्-थितान् सर्वान् वेर्ध-मानान् मदाऽत्ययात्॥४[४
सं तांन् अनु-गतांन् वीरो बद्ध्वा कर-पुटाऽञ्जलिम् । [५पू
५] उवाच वचनं हृष्टं इदं दधि-मुखः कपिः ॥५॥ [N
सौम्यो रोषो न कर्तव्यो यद् अमीभिर् नि-वारिताः ।
६] अ-ज्ञानाद् यदि वा ज्ञानाद् भवन्तः संप्र-धर्षिताः॥६॥ [६पू
N] उवाच वचनं श्लक्ष्णम् अंगदं कनकाऽंगदम् । [५उ
७पू] युव-राज त्वम् ईशस् च वनस्याऽस्य महा-बलः ॥७॥ [७पू

---

१. घ प्र म ल$_1$–क्ते । २. फ–उक्त्वास्मकोधं धन्योस्मि ॥ ३. अ–०धमभि० । ४. फ–स प्रणम्य तु सुग्रीवं राघवं लक्ष्मणं तथा । ५. अ–०रः । ६. प्र–स्थविरैस् ॥ ७. फ अ–स यथैवागतः ॥ ८. रा ल$_1$ ल$_2$–हीपमा० । व प्र–वधिमावम० । ९. रा ल$_1$ ल$_2$–०थान् । म–०थे ॥ १०. प्र–सीताम् । ११. फ अ–०नयन् । घ रा थ ल$_1$–०गतो । १२. म–०हीन् । १३. अ–हृष्टो हृदि जातः सुखः ॥ १४. फ–सौम्य । १५. फ–०तः । १६. अ–मया मूढेन चाज्ञानाद् । १७. फ–०मनाद्भिश प्र० ॥ १८. अ–श्लाघ्यम् । १९. व प्र ल$_1$ ल$_2$–कांचनो० । २०. आ–०राजम् । २१. अ–ईशोस्य । २२. रा य प्र म ल$_1$ ल$_2$–०बल ॥

८पृ] श्रान्तो दूराद् अनुप्राऽऽप्तो भक्षयस्त्वं[1] स्वकं मधु । [६उ
N] सर्वम् एतद् यद् उक्तस् त्वं तत्र वद्धोऽयम् अञ्जलिः ॥८॥ [N
८उ] योऽयं मौर्ख्याद् प्रकारो मे तत्र त्वां सं-प्रसादये[2] ।
७उ] मया मौर्ख्यान् न वि-ज्ञातम् तत्र वद्धोऽयम् अञ्जलिः॥९॥[3][७उ
यथैव हि पिता तेऽभूद् पूर्वं हरि-गणेश्वरः ।[4]
९] तथा त्वम् अपि सु-ग्रीवान् नाऽन्यो वै हरि-सत्तम॥१०॥[5][८
इहोप-यानं भवतां सर्वेषां वन-चारिणाम् ।
१०] गत्वाऽऽख्यातं[6] मया तात[7] पितृव्यस्य तवाऽनघ ॥११॥ [९
स तु त्वाम् आ-गतं श्रुत्वा सहैभिः कपि-कुञ्जरैः ।[8]
११] प्र-हृष्टो न त्व् असं-हृष्टो वनं श्रुत्वा [9]प्र-धर्षितम् ॥१२॥[१०
[10]मां त्वं[11] अब्रवीद् पितृव्यस् ते सु-ग्रीवो वानरेश्वरः ।
१२] शीघ्रं प्रेषय तान् सर्वान् इति छन्देन गम्यताम् ॥१३॥ [११
श्रुत्वा दधि-मुखस्यैतद् वचनं श्लक्ष्णम् अंगदः ।
१३] अब्रवीद् तान् हरि-श्रेष्ठान् वाक्यं वाक्य-विशारदः॥१४॥ [१२
शंके[12] श्रुतोऽयं[13] वृत्तान्तो राज्ञा वानर-यूथपाः ।
१४] अयं च[14] हर्षाद् आ-ख्याति तेन जानामि हेतुना॥[15]१५॥

---

१. फ–०यस्त्वं ॥ २. च–०दयन् । ३. रा ब प्र म $ल_1$ $ल_2$ अ–नास्ति ॥ ४. रा प्र $ल_1$–नास्ति । ५. रा म $ल_1$–नास्ति । च प्र $ल_2$–अतः परं ९-मश्लोको ऽत्रस्थानेन पठितः ॥ ६. अ–मस्वाख्यतं । फ–ख्यातुं । ७. फ–तुभ्यं । ८. फ–महात्मनः ॥ ९. $ल_1$–अतः परं "यथैव हि पिता ते भूत्" "तथा त्वमपि" "तत्र बद्धोयमञ्जलि" रित्यन्तो भिन्नक्रमः पाठो मूलीयैः–१०–९–८ संख्याकैः श्लोकैः समः पाठः । १०. अ–श्रुत्वापि ध० ॥ ११. फ अ–मामब० । च रा ब प्र म $ल_1$–मां चाब० । $ल_2$–स त्वब० ॥ १२. आ–शब्दैः । १३. प्र–वृत्तोप्ययं० । १४. फ–हि । १५. प्र–नास्ति ॥

तव् क्षेमं नेह नः स्यात्तु कृते-कार्यैर् विशेष-तः । [१३

१५] पीतं मधु यथा-कामं वि-श्रान्ता वन-चारिणः ।

N] किं शेषं गमनं तत्र सु-ग्रीवो यत्र वानराः ॥१६॥ [१४

सर्वे यथा च वक्ष्यन्ति सम्-एत्य हरि-यूथपाः ।

१६] तथाऽस्मि कर्ता तद् वाक्यं भवद्भिः पर-वान् अहम् । [१५

१७पू] नाऽऽज्ञापयितुम् ईशोऽहं युव-राजोऽपि यद् अहम् ॥१७॥

N] अ-युक्ता: कृत-कर्माणो यूयं धर्षयितुं मया । [१६

१७उ]युक्तं(?क्ता)हि कृत-कर्माणो यूयं माम(?मया)अनु-वर्तितुम्॥ N

एवं तस्य ब्रुवाणस्य श्रुत्वा वचनम् उत्तमम् ।

१८] प्र-हृष्ट-वदना वाक्यम् इदं ऊचुर् वनौकसः ॥१९॥ [१७

कं एवं वक्ष्यते वाचं प्रभुः सन् वानरोत्तम ।

१९] ऐश्वर्य-मद-मत्तो हि सर्वोऽहम् इति मन्यते ॥२०॥ [१८

तव चैतद् तु संदृशं नाऽन्यस्य हरि-पुंगव ।

२०] सं-नतिर् हि तवाऽऽख्याति भविष्यच्-छुभ-भाग्यताम्॥२१ [१९

---

१. आ-कृतं । रा ब म ल$_1$ ल$_2$-कृते कार्यैर् । २. आ रा च म ल$_1$ ल$_2$-कृते कार्ये । ३ अ-पीते । ४. अ-०तय० । ५. फ-नास्ति । ६ आ-गमने । अ-गम्यते । ७. प्र-नास्ति ॥ ८. रा-वीक्ष्यन्ते । घ-वीक्षन्ते । ल$_1$-भीक्ष्यन्त । ल$_2$-चीक्ष्यन्त । अ-पथावद्वक्ष्यामः । ९. रा-समेता । १० फ-परिवारित । ११. च-न ज्ञा० । १२. अ-ईशो वै ॥ १३. रा घ प्र म ल$_2$-न युक्त । आ-अयुक्त । १४ च-०कार्याणा । १५. रा म ल$_1$-युष्माकमनु० । अ-युष्माभिरनु० । १६ ब प्र ल$_2$-नास्ति ॥ १७. घ-सत्य ॥ १८ आ-एकान्ता । फ अ-कपीना । १९ ल$_2$-वीक्ष्यते । २० ब प्र म ल$_1$-वीर । २१. आ-स त्वा नरोत्तमा । फ अ-मत्वा नरोत्तमा ॥ २२. आ घ-चैवन्तु सन्देश । रा म ल$_1$-चैव सु० सदृश । अ-चर सुद० । २३ घ प्र ल$_2$अ-हरि सत्तम । २४ आ-०त चात्मावि । अ-सान्निभिर्हित मा । फ-सन्तिर्हितमा० । घ-सन्नतिर्हितमा० । २५. अ-०शुभमीयते ।

सर्वे वयम् अपि प्राप्ता गन्तुं तत्र कृत-क्षणाः ।
२१] यत्राऽसौ वानर-श्रेष्ठः सु-ग्रीवो हेम-पिंगलः ॥२२॥ [२०
त्वया त्व् अनु-उक्तैर् हरिभिर् नैव शक्यं पदात् पदम्।
२२] कचिद् गन्तुं हरि-श्रेष्ठ सम्-एतैतद् वदामहे ॥२३॥ [२१
एवं तु ब्रुवतां तेषाम् अंगदः सम्-अहृष्यत।
२३]बाढं गच्छाम इत्य्-उक्त्वा खम् उत्-पप(?पा)च(?त) भू-तलात्२४
तम् उत्-पतंतम् उत्-पेतुः सर्वे ते हरि-यूथ-पाः ।
२४] कृत्वाऽऽकाशं निर्-आकाशं यन्त्र-क्षिप्ता इवोत्पलाः ॥२५॥[२३
तेऽम्बरं सहसोत्-पत्य वेग-वन्तः प्लवं-गमाः ।
२५] वि-नदन्तो महा-नादान् मेघा वातेरिता इव ॥२६॥ [२४

इत्यार्षे रामायणे सुन्दर काण्डे मधुवनाद् वानरोत्पतनं
नाम द्विषष्टितमः सर्गः ॥६२॥

---

१. अ-इति । २. थ प्र ल$_2$-प्राप्ता । ३. अ--०क्षणो । ४. फ-हरिपुङ्गवः ॥ ५. अ-त्वयानुरक्तै । ६. आ फ-कश्चित्तं । ७. च थ प्र म ल$_1$ल$_2$ अ--०श्रेष्ठं । ८ फ- ब्रुवामहे ॥ ९. आ-त्रस्यमापत। अ-ब्रुवतां वरः। १०. फ-खे समुत्पत्य । ११. अ-तु । १२. आ-यभूव च । १३ अ-सर्गे समाप्तिर्द-दृश्यते ॥ १४ अ-उत्पतंत स मु० । १५. च-फाशनिर्० । १६. अ-पंच क्षिप्ता । १७ च-०क्षिप्ताम्॥१८. अ-वेगेनैव । १९. प्र-विनंद० । २०. फ-यथा ॥२१. रा- इत्यार्षे । ल$_2$-इति सुन्दरकाण्डे । २२. फ-वानरप्रयाणो । ल$_2$-वानरपतनं । अ-सर्गसमाप्तिर्न दृश्यते ।

अंगदे समनुप्राऽऽप्ते सु-ग्रीवो वानरेश्वरः ।
१] उवाच शोक-सन्तप्तं रामं कमल-लोचनम् ॥१॥ [२५
समा-श्वसिहि भद्रं ते दृष्टा देवी न सं-शयः ।
२] नाऽऽगन्तुम् इह शक्यं तैर् अतीत-समयैर् मयात् ॥२॥
N] अंगदस्य प्र-हर्षं तु जानामि शुभ-दर्शनम् । [२६
न मे सकाशम् आ-गच्छेत् कृत्ये हि विनि-पातिते ॥३॥
३] युव-राजो महा-प्राज्ञः सुवृत्तः प्र-वरोऽगदः । [२७
N] दर्शनीयो महा-बाहुर् वालि-सूनुः कृत-श्रमः ॥४॥ [N
यदि स्य् अकृत-कार्योऽसौ मत्-समीपम् अनु-व्रजेत् ।
४] भवेत् तु दीन-वदनः श्रान्तोऽविपुल-लोचनः ॥५॥ [२८
पितृ-पैतामहं चैव पूर्व-जैः परि-रक्षितम् ।
५] न मे मधु-वनं हन्याद् अ-दृष्ट्वा जनकाऽऽत्म-जाम् ॥६॥ [२९
६पू] कौशल्या सु-प्रजा राम समा-श्वसिहि सु-व्रत ।
१२पू] सर्व-था खलु वैदेही लक्षिता नाऽत्र सं-शयः ॥७॥ [३०
७उ] यथा हि दर्पितोदग्र-अग्राः सं-मेताः काननौकसः ।

---

१. प्र-०नुप्राप्ते । २. च-सुग्रीवं । ३.रा म ल$_1$-वानरर्षभः । च-०श्वरं । ४. ल$_1$-राजीव० ॥५. आ-सम्यक् श्वसिहि । ६. ब ल$_2$-भानीत० ॥ ७. फ म अ-प्रहर्षात् । च प्र च ल$_1$ ल$_2$-प्रहर्षं । ८. च-जानासि । ९. च रा प्र ब म ल$_1$ ल$_2$ अ-मत् । १०. फ रा-कृते ॥ ११. अ-युव० । १२. प्र-०राजः ॥ १३. अ-यद्यपि कृत० । १४. आ-श्रचोविं० । प्र-शान्तोविं० । अ-श्रान्तोऽविप्लुत० ॥ १५. अ-पूर्वकं परिरक्षितुं ॥ १६. रा ब म ल$_1$ ल$_2$-कौसल्या । १७. प्र ल$_2$-राघव ॥ १८ आ-दयितोद्गमाः । रा-दर्पिता व्यग्राः । ब-दर्पितो व्यग्रः । प्र म ल$_1$- ल$_2$-दर्पिता व्यग्राः । १९. आ-संगताः ।

नैषाम् अ-कृत-कार्याणाम् ईदृशः स्यात् परो-क्रमः ।
८] वन-भंगेन जानामि मधूनां भक्षणेन च ॥८॥[2] [३४
१२उ] ततः किलकिला-शब्दः शुश्रुवे वि-मलेऽम्बरे ।
हनुमत्-कर्म-दृप्तानां सं-गतानां वनौकसाम् ।[7]
१३] किष्किन्धाम् उप-यातानां सिद्धिं कथयताम् इव ॥९॥ [३५
ततः श्रुत्वा नि-नादं तं कपीनां कपि-कुंजरः ।
१४] आयतांऽश्चित-लांगूलः सोऽभवद् हृष्ट-मानसः ॥१०॥ [३६
आ-गतास् तु अथ हरयो राम-सुग्रीव-दर्शनम् ।
१५] अंगदं पुरतः कृत्वा हनूमन्तं च वानरम् ॥११॥ [३७
तेऽगद-प्रमुखा वीराः सं-हृष्टाः परया मुदा ।
१६] नि-पेतुर् हरि-राजस्य राघवस्य च सन्नि-धौ ॥१२॥ [३८
हनुमांश् चैव महा-कायः प्र-णम्य शिरसा ततः ।[16]
N] नियताम् अ-क्षतां देवीं राघवाय न्य्-अवेदयत् ॥१३॥ [३९
निश्चि-चिताऽर्थम् ततस् तस्मिन् सु-ग्रीवः पवनाऽऽत्म-जे ।

---

१. आ-स्याद्यतिक्रमः । २. अतः परमधिकः पाठः–म–नैवं शोक-समायुक्तस्तिष्ठ त्वमतिविक्रमः । त्यज शोकं च चिन्तां च सीतां प्राप्स्यसि न संशयः ॥ ३. घ–नत्र । ४. फ–स तदांऽवरे । अ–विमलेऽवरे । ५. [illegible] म–हनूमत्कर्म० । फ–०कर्मतृप्तानां । प्र–हनूमत्कर्मकृष्टानां । अ–हनुमत्कपिदृप्तानां । ६. फ–नर्दतां कामनौकसाम् । ७. अतः परमधिकः पाठः–म–अतिक्रम्य बहून् देशान् अन्योऽन्यपरिसर्पणात् । ८. व प्र–किष्किंधाद्दाप० । म ल$_1$ ल$_2$–किष्किधाधाप० । अ–विधानमुपजातानां । ९. म ल$_1$ ल$_2$ अ–इह ॥ १०. च–आयताञ्चित० । रा घ म ल$_1$ ल$_2$–आयताच्छ्रित० । प्र–आसमुच्छ्रित० ॥ ११. च प्र घ म ल$_1$ ल$_2$–वे तु । रा–वे च । अ–तेऽथ । १२. च रा प्र घ म ल$_1$ ल$_2$ अ–०वशासनात् ॥ १३ रा प्र घ म ल$_1$ ल$_2$–प्रहृष्टाः ॥ १४. फ घ अ–हनुमांस्तु । प्र म ल$_1$ ल$_2$–हनूमांश्च । १५. फ अ–गतः । १६. अतः परमधिकः पाठः—म–रामलक्ष्मणयोर्भ्रात्रोः सुग्रीवं चाभ्यवादयत् ॥

१८] लक्ष्मणः प्रीति-मांश् चैवं[1] बहु-मानम्[2] अवैक्षत ॥१८॥ [४१

प्रीत्या[3] च परयोपेतो राघवः सह-लक्ष्मणः ।

१९] बहु-मानेन[4] महता हनूमन्तम्[5] अवैक्षत ॥१९॥[6] [४२

इत्यार्षे[7] रामायणे सुन्दर-काण्डे वानराणां समागमे सीता-नन्दने[8]

नाम त्रिषष्टितमः सर्गः[9] ॥६३॥

---

१. अ– चैनं । २. फ–बहुमानं त्ववैक्षत । च रा प्र व ल$_1$ अ–बहु-मानादवैक्षत ॥ ३.आ–प्रीत्या परमयो० । फ च अ–स प्रीत्या प० । ४.अ–बहुना । ५.रा ल$_1$ अ–हनुमन्तम् । ६. व–नास्ति ॥ ७.ल$_2$–इति श्रु० । ८.फ–अंगदोपयानं नाम सर्गः । च रा प्र व म ल$_1$ ल$_2$–वानरसमागमो नाम सर्गः । ९. अ–इति रामायणे सुन्दरकाण्डे उद्योगपर्वणि अंगदोपयानं नाम सर्गः ॥

[1]ते तु प्र[2]-स्रवणं शैलम्[3] आ-गताश् चित्र-काननम् ।
१] प्र-णम्य शिरसा रामं लक्ष्मणं च महा-बलम् ॥१॥ [१
युव-राजं पुरस्-कृत्य सु-ग्रीवम् अभि-वाद्य च ।
२] आ-ख्यातुं[4] तत्र सीतायाः प्र-वृत्तिम् उप-चक्रमुः ॥२॥ [२
रावणाऽन्तः-पुरे[5] घोरे[6] राक्षसीभिश्[7] च तर्जनम् ।
३] अनु-रागं च वैदेह्या यश् चाऽपि समयः कृतः ।
एवम्[8] आ-चक्षि(?ख्य)रे वीरा हरयो राम-सन्निधौ ॥३॥ [३
४] वैदेहीम् अ-क्षतां श्रुत्वा[9] रामश् चोत्तरम् अब्रवीत् ।
क्व सीता वर्तते देवी कथं वा मयि वर्तते ॥
५] एतन्[10] मे[11] सर्वम् आ-ख्यात वैदेहीं प्रति वानराः ॥४॥[11] [४
रामस्य तु वचः श्रुत्वा हरयो राम-सन्निधौ ।[11]
६] चोद[12]यन्ति हनूमन्तं सीता-वृत्तान्त-कोविदम् ॥५॥ [५
श्रुत्वा तु व[13]चनं तेषां हनुमान्[13] मारुताऽऽत्म-जः ।
७] उवाच वाक्यं वाक्य-ज्ञः सीताया दर्शनं त[14]था ॥[15]६॥ [६
तं मणिं कां[16]चनं दि[16]व्यं दीप्य-मानं स्व-तेज[17]सा ।

१. ल₁-तत्ते । २. आ-प्रश्र॰ । म-प्रस्रवनं । ३. फ-चैवम् ॥ ४. अ-प्रवक्तुम् ॥ ५. च घ प्र ल₂ अ-॰पुरं । ६. फ-रोधं । घ ब प्र ल₂ अ-घोरं । ७. च ब प्र ल₂-॰सीभी च । ८. फ-एतदाच॰ । रा म ल₂-समाच॰ । ब प्र ल₁-सर्वमा॰ ॥ ९. घ रा ब प्र म ल₁ ल₂-रामः श्रुत्वा । १०. च-एतत्ते ॥ ११. आ ल₁ ल₂ अ-नास्ति । १२. फ-अवादयन् । आ-चोदयन्तो । ल₂-चोदयन्तं । अ-नोदयन्ति ॥ १३. रा ब प्र ल₂-हनुमांस्तेषां वचनं । १४. म ल₁-यथा । १५. फ-नास्ति ॥ १६. फ-कनकावद्धं । च-काञ्चनीं दिव्यम् । अ-काञ्चनं चैव । १७. रा घ प्र ॥ ल₂-स्वरोचिषा । ल₁-सुरोचिषा ।

N] दत्त्वा रामाय हनुमांस्[1] ततः प्राऽञ्जलिर् अ-ब्रवीत्॥[4] ७॥ [७
समुद्रं लंघयित्वाऽहं शत-योजनम् आ-यतम्[5] ।
८] आ-गच्छं[6] जानकीं सीतां मार्गमाणो यदृच्छया ॥८॥ [८
तत्र लंकेति नगरी रावणस्य दुर्-आत्मनः ।
९] दक्षिणस्य समुद्रस्य तीरे वसति दक्षिणे[7] ॥९॥ [९
तत्र दृष्टा[8] मया सीता रावणाऽन्तः-पुरे सती ।
१०] सं-न्यस्य[9] त्वयि भावं सा राम राम-मनोरथा ॥१०॥ [१०
दृष्टा[10] मे राक्षसी-मध्ये भर्त्स्यमाना पुनः पुनः ।
११] राक्षसीभिर् वि-रूपाभी रक्षिता प्रमदा-वने ॥११॥ [११
दुःखं[11] सा वर्तते सीता सुखानाम् उचिता सती । [१२
१२] रावणाऽन्तः-पुरे रुद्धा राक्षसीभिः सु-रक्षिता ॥१२॥
एक-वेणी-धरा दीना त्वद्-चित्ता त्वत्-परायणा ।[12] [१३
१३] अधः-शय्या वि-वर्णाऽङ्गी पद्मिनीऽव हिमाऽऽगमे ।
१४पू] रावणाद् विनि-वृत्ताऽर्था मर्तव्ये[13] कृत-निश्चया ॥१३॥ [१४पू
१५पू] इक्ष्वाकु-वंशं[15] नि-ख्यातं शनैः कीर्तयता मया ।
१४उ] कथंचिद् एवं काकुत्स्थ वि-श्वासम् उप-पादितः(ता) ।
१५उ] सा[16] मया रघु-शार्दूल समा-श्वासम् उपाऽऽगता ॥१४॥ [१५

१.ओ—रामं हनूमांश्च । २.रा—तत्र । ३.फ—आस्थितः । ४.अतः परमधिकः पाठः— फ—उवाच वाक्यं वाक्यज्ञः सीताया दर्शनं वदा॥ इहासंगतःक्रमःश्लो०तु०२०शश्लो०। ५.ल₂—आगतः । ६.फ ब म ल₁—अगच्छं । प्र—आगच्छन् ॥ ७. फ—दुर्गमे॥ ८. फ रा—सीता मया दृष्टा । ९. श्रा—सन्न्यस्य ॥ १०. फ—संरुद्धा । अ—सा रुद्धा ॥ ११. ब—दुःखमाव० । प्र—दुःखिता । ल₂—दुःखया ॥ १२. श्र—एकमतधरा शीता त्वयि तावत्परायणा ॥ १३. ल₁—मृत्यवे । १४. श्रा—०यश्च ॥ १५. श्रा—०वंशविख्यात । ल₁—०वंशे व्याख्यात । प्र—०वंश-विख्यातं । फ च ल₂—०वशंवि० । १६. रा म ल₁—अपि ॥

समा-श्वास्य ततो देवीं (॰वी) सर्वम् अर्थं च ग्राहितो ।
१६] राम-सुग्रीव-सख्यं च श्रुत्वा प्रीतिम् उपाऽऽगता ॥१५॥[१६
नियमैः समुदा-चारो भक्तिस् तस्यास् तथा त्वयि ।[१७
१७] हन्ति यन् न दशं-ग्रीवं तन् महाऽऽत्मा स राक्षसः ॥१६॥[N
एवं तदा मया दृष्टा सीता जनक-नन्दिनी ।
१८] उग्रेण तपसा युक्ता त्वद्-भक्त्या पुरुषर्षभ ।[१८
N] सा धारयति लोकेषु माहाऽऽत्म्यं गुण-भूषितं ॥१७॥ [N
सर्व-था सीतया दग्धो राक्षसोऽसौ महा-बलः ।
N] निमित्त-मात्रं त्वं तत्र वधे तस्य भविष्यसि ॥१८॥ [N
मणिं च दिव्य-रूपं ते माऽदाच् छोकाऽऽकुलेक्षणा ।
N] यद् अत्र प्रति-पत्तव्यं तत् सर्वम् उप-पाद्यताम् ॥१९॥[N
तं मणिं दिव्य-रूपं च दीप्यमानं स्व-तेजसा ।
१९] दत्त्वा रामाय हनुमांस् तदा प्राऽञ्जलिर् अब्रवीत् ॥२०॥[N
तासाम् अन्तरम् आ-साद्य राक्षसीनां वराऽऽनना ।
२०] अब्रवीत् सा तदा सीता राक्षसीभिः सु-रक्षिता ॥२१॥[N

---

१. आ-अर्थश्च ग्राहिता । फ-अर्थं च श्राविता । अ-॰र्थं च ग्राहितं ॥ २. फ अ-विनयः । ३. फ-॰ग्रीवस् । ४. फ-महात्म्यात् । ५. आ-राघवः । रा म ल१-रावणः । अ-राक्षसो ॥ ६. रा व प्र म ल१ ल२-एवं वृत्ता । ७. ल१-युक्ता । ८. फ-भक्त्या । ९. फ-॰र्षभः । १०. फ-॰भूषितम् ॥ ११. फ म ल१-न संशयः । प्र ल२-निशाचरः ॥ १२. अ-दद्यं । १३. आ ल२-च । च रा व प्र म ल१ अ-मे । १४. ल२-दीप्यमानं स्वतेजसा । १५. फ-॰कर्तव्यं । १६. फ-सर्वं प्रतिपा॰ ॥ १७. ल२-नास्ति ॥ १८. फ-प्रतिरूपं । रा-दिव्यरूपां । १९. व म ल१ ल२-हनुमान् पुनः ॥ २०. फ-सा ततोन्तरम् । २१. व म ल१-॰वीन्मा । २२. फ-देवी । २३. रा व म ल१-॰सीनां च सन्निधौ । प्र ल२॰सीनां च सम्मतं ॥

वक्तव्यस् ते महा-बाहो रामः सत्य-पराक्रमः ।
२१] नि-खिलेन च यद् दृष्टं राक्षसीनां च यच् छ्रुतम् ॥२२॥[3][N
गर्जितं राक्षसेन्द्रस्य तर्जनं भीषणं तथा ।
२२] द्वौ मासौ जीवितव्यौ मे येन् चोऽपि समयः कृतः ॥२३॥[N
२३पू] अयं चाऽस्मै प्र-दातव्यो यत्नात् सुपरि-रक्षितः ।[7] [२१पू
२४पू] एष चूडा-मणिर् दिव्यो मया सुपरि-रक्षितः ॥[8]२४॥
मनःशिलायास् तिलकं सं-स्मरस्वेति चाऽब्रवीत्(?:)। [२२
,२५] वि-ज्ञाप्यश् च नर-व्याघ्रो यत्नाद् वायु-सुत त्वया ॥
अखिलेनेवं[12] यद् दृष्टम् इति माम् आह जानकी ॥२५॥[२०
२६] एष निर्-यातितः श्री-मान् मया ते वारि-सम्भवः । [२३
२७उ] एनं दृष्ट्वा प्र-हृष्यामि व्य्-असने त्वाम् इवाऽनघ ॥२६॥
जीवितं धारयिष्यामि मासं दशरथाऽऽत्म-ज ।
२८] ऊर्ध्वं मासान् न जीवेयं रक्षसां वशम् आ-गता ॥२७॥ [२४
अभि-ज्ञानं च मे दत्तं यथा-वृत्तं तवाऽन्तिके ।
N] चित्र-कूटे महा-प्राज्ञ वायसं प्रति मान-द ॥२८॥ [१९
भूयश् चेदम् अभि-ज्ञानं वैदेह्या शृणु राघव ।
२९] उत्तरे चित्र-कूटस्य पादे वृत्तं मनो-रमे ॥२९॥ [N

---

१. अ-वक्तस्ते महबो । २. रा व प्र म ल$_1$ ल$_2$-नास्ति॥ ३ आ-सदा । ४. रा-जीवितव्यं । अ-जीवितव्ये । ५. फ-यथास्ति । रा-यच्चापि । अ-यथापि । ६. आ-यत्नाच्च सुपरीक्षितः । प्र ल$_2$-मया सु० । ७. अतः परमधिकः पाठः—आ रा च प्र च ल$_1$ ल$_2$ अ-श्रुवन्त्या वचनान्येवं सुग्रीवस्योपशृण्वतः ॥ ८ ल$_1$-स्म० । ९. फ ल$_2$-नास्ति । १०. फ-स्मारयस्वेति । रा व म ल$_2$-संस्मरेदिति । प्र-संस्मरेति च । ल$_1$-संस्मरेद् च । ११. प्र-विज्ञसश्च । १२. फ रा व प्र म ल$_1$ ल$_2$ अ-०नेह । १३. आ-निर्जा० । १४. फ-नूनं । १५. आ-प्रसन्ने । १६. आ-द्रमं । १७. आ-ऊर्ध्वमा० । १८. रा व प्र म ल$_1$ ल$_2$-राक्षसेन समागता ॥

रटमानस्य[1] काकस्य मांसाऽर्थे[2] स्मर्तुम् अर्हसि ।
३०] दिप्ताम्[3] इषीकां तत्राऽस्य रोषाद् एकांऽग-नाशिनीम् ।[4]
ऐषीकम्[5] अस्त्रम् अपि[6] ते कार्याऽर्थे[8] संनि-पातितम्[7]।।[9]३०[N
३१] जहि पापम् इदं रक्षः क्रूरं दाराऽप-हारिणम् ।
इति माम् अब्रवीत् सीता तन्व्-अंगी धर्म-चारिणी ।
३२] रावणाऽन्तः-पुरे रुद्धा मृगीऽवोत्फुल्ल-लोचना ।।३१।। [२५
उपायो दृश्यतां कश्चित् यथा नद-नदी-पतिम्[10] ।
३४][11] न चिरेण भवान् घोरं[11] स-सैन्यः[12] सागरं तरेत्[13] ।।[14]३२।। [N
एतत् ते सर्वम् आ-ख्यातं मया राघव तद् यथा ।[15]
३३] सर्व-था सागर-जले सं-तारः[16] प्रति-चिन्त्यताम्।।[17]३३।। [२६
जाताऽऽश्वासौ राज-पुत्रौ विदित्वा
तत् साऽभिज्ञं[18](?) राघवाय प्र-दाय ।[17]
देव्या वृत्तं सर्वम् एवाऽनु-पूर्व्या[19]
N] सम्यक् पूर्णं[20] वायु-पुत्रः शशंस ।।३४।। [२७
सीता युक्तौ[21] राज-पुत्रौ निर्-ईक्ष्य[22]

---

१. फ—नोदमानस्य । अ—इदमानस्य । २. आ—मांसार्दं । ल१—मांसार्थैः । अ—मांसार्थं । ३. ल२—दिप्ताम् । ४. प्र—नास्ति ॥ ५. अ—इ० । ६. आ—०पिककार्यार्थं । च—०पिके भार्यार्थं । रा घ म ल१ ल२—०भिके भार्यार्थं । ७. आ—०रकम् । ९. घ म ल१ अ—०हारकम् । १०. आ—०पतिः । ११. आ—न चिरेणैवाम्बुधौ घोरे । फ—अचिरेण भवान् घोरं । रा प्र म—अचिरेण महाघोरं । ल१—न चिरेण महाघोरं । प—रचिरेण महाघोरं । १२. प्र—तथा राघव । १३. आ—०तरे । च अ घ—०तरेः । प्र—तथया ॥ १४. ल२—नास्ति । १५. प्र ल२—नास्ति । १६. रा घ प्र ल१—सन्तरः । १७. आ—नास्ति । १८. रा घ प्र म ल१—साभिज्ञं । अ—तस्य च भिज्ञानं । १९. आ—वृत्तं सर्वमेवानुपूर्व्या । २०. आ—पूर्वं । २१. ल१—युक्तो । २२. फ—प्रहृष्टो ।

सं-सिद्धार्थौ वानरेन्द्रश् च राजा ।
गात्रैः श्लिष्टौ वानरं तं कृतार्थं
N] भूयो हैवं कर्म-तश् चाऽऽशशंस ॥ ३५॥ [N

इत्यार्षे रामायणे सुन्दर-काण्डे मणि-निर्यातनो
नाम चतुःषष्टितमः सर्गः ॥६४॥

—:o:—

---

१. न व–सिद्धार्थौ तौ । २. प्र म ल$_1$–वानराणां च । ३. आ–अ–गात्रैराश्लिष्य । व म ल$_1$–आश्लिष्यैनं । प्र–आश्वास्यैवं । ४. च म ल$_1$–वानरं वै । अ–वानरेन्द्रम् । ५. आ–च्चं । ६. आ–०शशंस । ७. रा–ल$_2$–नास्ति ॥ ८. ल$_2$–इति सुं० । ६. अ–उद्योगपर्वणि। १०. ल$_1$–मनि-निर्यातनो । ल$_2$–मनिनिर्यापनो । च अ रा व प्र म–मणिनिर्यातनं ॥

एवम् उक्तो हनुमता रामो दशरथाऽऽत्म-जः ।

१] तं मणिं हृदये धृत्वा रुरोद सह-लक्ष्मणः ॥१॥ [१

तं तु दृष्ट्वा मणिं श्रेष्ठं राघवः शोक-कर्पितः ।

२] नेत्राभ्याम् अश्रु-पूर्णाभ्यां सुग्रीवं वाक्यम् अब्रवीत् ॥२॥[२

यथैव धेनुः स्रवते स्नेहाद् वत्सस्य लालनात् ।

३] एवं मे मणि-रत्नस्य वैदेह्या इव दर्शनम् ॥३॥ [३

मणि-रत्नम् इदं दत्तं वैदेह्याः श्वशुरेण वै ।

४] वधू-काले पुरा बद्धम् अधिकं मूर्ध्न्य् अ-शोभत ॥४॥ [४

अयं हि जल-सम्भूतो मणिः परम-भूषणः ।

५] यज्ञे परम-तुष्टेन दत्तः शक्रेण धीमता ॥५॥ [५

इमं दृष्ट्वा मणि-श्रेष्ठं यथा तैस्त्वार्थ-दर्शनम् ।

६] अद्याऽभ्युपाऽऽगतं सौम्य वैदेह्या इवं दर्शनम् ॥६॥ [६

अयं हि शोभते तस्याः प्रियाया मूर्ध्नि मे मणिः ।

---

१. अ-एवं । २. फ च रा प्र घ म ल१ ल२ अ-मणिश्रेष्ठं । ३. प्र म ल१ ल२-अश्रु० ॥ ४. अ-प्रस्तौति । ५. फ रा प्र घ म ल१ ल२ अ-वत्सला । घ-वत्सलाद् । ६. आ-वं ॥ ७. आ-वैदेह्याश्चापि दर्शनम् । घ प्र य ल१ ल२ अ-०रेण मे । ८. रा-नास्ति । आ-अत आरभ्य 'मूर्ध्नि मे मणिः' इत्यन्तः पाठो नास्ति । ९. म ल१ ल२-त्विदम् । १०. अ-मूर्ध्नि शोभयात् । घ प्र य म ल१ ल२-मूर्ध्नि तस्याश्च शोभते । ११. घ-मम । १२. घ प्र य म ल१-भवर० ॥ १३. फ रा घ य प्र म ल२-इदं । १४. ल१ अ-तातस्य द० । १५. रा च घ म ल१-वैदेह्याश्चापि ॥

७] यद् अस्य दर्शनेनाऽहं तां प्राऽऽप्ताम् इव चिन्तये ॥७॥ [७

किम् आह सीता वैदेही ब्रूहि सौम्य पुनः पुनः ।

८] पुरा शोकेन दग्धोऽहं सिञ्च मां वाक्य-वारिणा ॥८॥ [८

अतस् तु किं दुःखतरं ममेमं वारि-सम्भवम् ।

९] मणिं पश्यामि हनुमन् वैदेहीम् आ-गतां विना ॥९॥ [९

चिरं जीवति वैदेही यदि मां सं-स्मरिष्यति ।

१०] क्षणं सौम्य न जीवेयं विना ताम् इति चिन्तये ॥१०॥ [१०

नय माम् अपि तं देशं यत्र दृष्टा मम प्रिया ।

११] मुहूर्त्तं नाऽव-तिष्ठेयं प्र-वृत्तिम् उप-लभ्य हि ॥११॥ [११

कथं मे वद सु-श्रोणी भीरुर् भीत-तरा सती ।

१२] मया वि-हीना पापानां मध्ये वसति रक्षसाम् ॥१२॥ [१२

शारदस् तिमिरान् मुक्तो नूनं चन्द्र इवाऽम्बरे ।

१३] अथ तद् वदनं तस्या न वि-राजत् अ-संशयम् ॥[17]१३॥ [१३

किम् आह सीता हनुमन् ब्रूहि सौम्य पुनः पुनः ।

१४] एतेन खलु जीवामि भेषजेन यथाऽऽतुरः ॥१४॥[20] [१४

---

१. फ च रा प्र व म ल$_1$, ल$_2$ अ—अस्याद्य ॥ २. रा प्र व म ल$_1$, ल$_2$ अ—शोकाग्निनिर्दग्धं । फ—०न दह्येयं । च—०न दग्धानां । ३. रा प्र व ल$_1$, ल$_2$ अ—शाप्यवा० ॥ ४. आ—ममेवं । च—ममेयं । ५. च—०वाम् । ६. फ अ—हनुमन् । ७. फ—प्रियाम् । ८. रा प्र व म ल$_1$, ल$_2$ अ—संधरिष्यति । ९. फ—निश्चयः॥ १०. फ अ—सा । च रा प्र व म ल$_1$, ल$_2$—वा । ११. आ प्र—भीरुभीव० । फ—भर्तृहीना मया । अ—भीरुर्मीता मया । १२. फ अ—भयावहानां घोराणां । १३ फ—जानकी ॥ १४. अ—शारदाम्बुदनिर्मुक्तो । आ—०रान् मुक्त्वा । १५. प्र—चन्द्रम् । १६. आ—इवाद्य वै । फ— इवाम्बुदैः । अ—इवाम्बुधौ । १७. अ—तद्वक्त्रं मुखं तस्या न विरायति राक्षसौ । फ—तद्वक्त्रं मुखं तस्या न विजानाति राक्षसैः ॥ १८. आ—पथ्येन । १९. अ—जीविष्ये । २०. फ—नास्ति ॥

१पू] एवम् उक्तः स हनुमान् राघवेण महाऽऽत्मना ।
N] सीतायाः भाषितं सर्वं न्य्-अवेदयत राघवे ॥१॥ [१
N] एवम् उक्तवती देवी जानकी पुरुषर्षभ ।
१उ] पूर्व-वृत्तम् अभि-ज्ञानं चित्र-कूटे यथा तव ॥२॥ [२
तत्र सुप्ता त्वया सार्धं जानकी पुनर् उद्-थिता ।[11]
२] वायसः सहसोत्-पत्य वि-ददार स्तनाऽन्तरे ॥[14]३॥ [३
३उ] पुनश् च किल पक्षी स देव्या जनयति व्यथाम् । [४
ततः पुनर् उपाऽऽगम्य वि-ददार भृशं किल ॥[17]४॥[18]
४] अथ त्वं प्रति-बुद्धोऽसि शोणितेन सम्-उक्षितः ।[21] [५
वायसेन च तेनैव सततं बाध्यमानया ।[24]

---

१. अ फ-उक्तस्तु । २. $ल_1$ $ल_2$ अ-राघवेन । ३. प्र $ल_1$ $ल_2$-वैदेह्याः ॥ ४.फ-इदम् । ५ अ-०भाः । ६.अ-०दृपम् । ७.रा प्र घ म $ल_2$-तदा । ८. $ल_1$-२य श्लोकपूर्वार्धादारभ्य ४१शपूर्वपादं यावदेकं पत्रं लुप्तम् । ९. रा प्र व म-साकं । १०. व-परिशुष्यिता । ११. आ-२य ४र्थ श्लोकौ व्यत्यासेन पठितौ । १२. आ-ततः पुनरुपागम्य । म-अथास्याः वायसोऽभ्येत्य । १३. फ च-०रम् । १४. प्र-नास्ति । अतः परमधिकः पाठः-फ ष-पर्यायेण घ सुप्तस्त्वं देव्यंके पुरुषर्षभ । म-पर्यायेण च सुप्तोंके वस्यास्त्वं भरताग्रजः ॥ १५. म-जनयते भयम् । १६. आ च म-स्तनान्तरे । १७. म-नास्ति । १८. रा प्र व $ल_2$ अ-नास्ति ॥ १९. आ-भ्रान्तिबुद्धश्च । फ-अथावबुद्धस्त्वं तत्र । २०. आ-०तां । फ- समुक्षितः । २१. च रा प्र व $ल_2$ अ-पादोऽयं ४श्लोकपूर्वार्धात्परं पठितः । २२. $ल_2$-तत्रैव ।२३ फ-क्षरया तया। घ रा प्र $ल_2$ म-ताड्यमानया । २४. व अ-नास्ति ।

५] बोधितः किल देव्या त्वं सुखं सुप्तः परं-तप ॥ ५॥ [६
तच् च दृष्ट्वा महा-बाहो प्र-तुन्नं वै स्तनाऽन्तरम् ।[3]
६] आशी-विष इव क्रुद्धस् ततो वाक्यं त्वम् ऊचिवान् ॥६॥ [७
नखाऽग्रैः केन ते भीरु वि-तुन्नं वै स्तनाऽन्तरम् ।
७] कः क्रीडति स-रोषेण भुज-गेन वराऽऽनने ॥७॥[10] [८
अवेक्ष्य (ईक्ष) मीणश् च ततो वायसं सम्-अपश्यथाः ।
८] नखैः स-रुधिरैस् तीक्ष्णैर् माम् एवाऽभि-मुखं स्थितम् ॥८॥[13] [९
सूनुः स किल शक्रस्य वायसः पततां वरः ।
९] धाराऽन्तर-गतः शीघ्रं पवनस्य गतौ समः ॥९॥[15] [१०

---

१. च रा ब म ल$_2$–बोदितः । २. अ–नास्ति ॥ ३. आ–ततश्च दृष्ट्वा महद्व्रणं वैदेह्या वा स्तनान्तरम् । च रा–तच्च दृष्ट्वा महादेव्या वैदेह्या स्तनान्तरम् । प्र ब म–तच्च दृष्ट्वा महादेव्या वैदेह्या स्तनान्तरे । ल$_2$–तच्च दृष्ट्वा महादेव्या वैदेह्यास्त्वं स्तनांतरे । अ–नास्ति । ४. रा–ततस्त्वं वाक्यमब्रवीत् ॥ ५. आ–रके । ६. आ च–विभिन्नं । रा प्र ब म ल$_2$–भिन्नं वै । ७. आ–वा । रा–तत् । ८. रा–स्तनांतरे । ९. आ–०ण । १०. अतः परमधिकः पाठः—आ–केन तेनांग वामोरु✱ विक्षिप्तं वै स्तनांतरम् । आसीविषमिव क्रुद्धं कालाग्निमिव सन्निभम् । च–आशीविषमिव क्रुद्धस्ततो वाक्यं त्वमूचिवान् ‡ । प्र ब ल$_2$–आशीविषमिव क्रुद्धं कालाग्निसमतेजसम् ॥ ११. आ च रा–०माणः स । १२. आ च रा–०त । १३. फ–नास्ति ॥ १४. अ–पुत्रः किल स । १५. आ–प्लवतां वर । १६. आ–०गतिः ॥

---

✱ म–केन तेऽनागसो भीरु । ल$_2$–केन तेनामलं भीरु । ‡ च–अतः परं 'नखाग्रैः केन भीरुरित्यादि आशीविष इव क्रुद्ध' इतिश्लोकान्तं यावत्पुनरुल्लिखितः पाठः ।

ततस् तस्मिन् महा-बाहो कोप-संवर्तितेक्षणः ।

१०] वायसे कृत-वान् क्रूरां मतिं मति-मतां वर ॥१०॥ [११

गृहीत्वा सं-स्तराद् दर्भं ब्राह्मैर् मन्त्रैर् अयोजयः ।

११] स दीप्त इव कालाऽग्निर् जज्वालाऽभि-मुखं गतः॥११॥ [१२

स त्वं प्र-दीप्तं चिक्षेप दर्भाऽग्रं वायसं प्रति ।

१२] ततस् तु वायसो दीप्तः स-दर्भोऽभि-संसार ह ॥१२॥ [१३

पित्रा स तु परि-त्यक्तः सुरैः सर्वैः सहर्षिभिः ।

१३] त्रींल् लोकान् स ततो गत्वा त्रातारं नाऽध्य्-अगच्छत १३[१४

ततो नि-पतितं भूमौ शरण्यः शरणाऽऽगतम् ।

१४] वधाऽर्हम् अपि काकुत्स्थ हतवान् नाऽसि वायसम्॥१४॥[१५

१५पू] मोघम् अस्त्रम् अति-शक्यं कर्तुम् इत्य्-एव राघव ।

१६उ] दक्षिणं किल काकस्य घातितं नयनं त्वया ॥१५॥ [१६

राम तुभ्यं नमस्-कृत्य राज्ञे दशरथाय च ।

१७] वि-सृष्टः स त्वया काकः प्रति-पेदे स्वम् आ-लयम्॥१६॥ [१७

एवम् अस्त्र-विदां श्रेष्ठ सत्त्व-वान् बल-वान् अपि ।

१८] किम्-अर्थम् अस्त्रं रक्षोभ्यो न योजयसि राघव॥१७॥ [१८

---

१. आ–त्त्रः ॥ २. आ–संस्तराद्दर्भं । अ–संस्तरान्दर्भात् । ३. आ अ–०येत् । रा–०ये: । ४. प भ ब ल₂–संदीप्त । ५. अ–खगं ॥ ६. भ ल₂–तं । रा. घ–तत । ७. अ–दर्भाग्र्यं । ८. ल₂–ततः स । ९. अ फ भ–वायसं । १०. अ–सदर्भो तु स० । फ–संदर्भोतुस० । भ–सदर्भोऽभि० । ११. ल₂–च । १२. फ–स तेः । १३. आ–तं । १४. ब–नाधिगच्छत ॥ १५. आ–शरण्यं । १६. अतः परमधिकः पाठः—आ–धारान्तरगतः शीघ्रं पवनस्य गतौ समः । ततस्तस्मिन्महाबाहो कोपसंवर्तितेक्षणः । वायसे कृतवान्क्रूरां मतिं मतिमतां वरः ॥ १७. फ–मोघ शस्त्रमशक्यं च । रा–मोघशस्त्रे न शक्यं च । अ च भ ल₂–मोघमस्त्रं न शक्यं च । १८. अ–घातितं न० । फ–नयनं घातितं ॥ १९. फ–[illegible] । २०. आ–०यति ॥

न नागा नाऽपि गन्धर्वा नाऽसुरा न मरुद्-गणाः ।
१९] तव राम रणे शक्ता वेगं प्रति सम्-आसितुम् ॥१८॥ [१९
तव वीर्य-वतः कश्चिद् यदि वै मेऽस्त्य् अनु-ग्रहः ।
२०] क्षिप्रं सु-रुचिरैर् बाणैर् हन्यतां युधि रावणः ॥१९॥ [२०
भ्रातुर् आ-देशम् आ-दाय लक्ष्मणो वा परं-तपः ।
२१] स किम्-अर्थं नर-वरो न मां रक्षति राघवः ॥२०॥ [२१
शक्तौ तौ पुरुष-व्याघ्रौ वाय्व्-अग्नि-सम-विक्रमौ ।
२२] सुराणाम् अपि दुर्-धर्षौ किम्-अर्थं माम् उपेक्षतः ॥२१॥[२२
ममैव दुष्-कृतं किञ्चिन् महद् अस्ति न सं-शयः ।
२३] सम्-अर्थौ तौ न मां वीरौ वीऽऽक्षेते यत् परं-तपौ॥ २२ [२३
वैदेह्या वचनं श्रुत्वा करुणं साधु भाषितम् ।
२४] पुनर् अप्य् अहम् आर्यां ताम् इदं वचनम् अब्रुवम् ॥२३॥[२४
त्वच्-छोकाऽभि-युतो रामो देवि सत्येन ते शपे ।
२५] रामे (ऽः) शोकोऽभि-भूतश् च लक्ष्मणः परि-तप्यते २४॥[२५
कथञ्चिद् वैदेही दृष्टा न कालः पुनर् आसितुम् ।

---

१. ल२—अपि । २. ल२—०गणः ॥ ३. अ—यथा मय्यस्त्यनु० । फ च रा प्र व म ल२—मय्यस्त्यनु० । ४. प्र व म ल२—सु र० । ५. फ—यदि ॥ ६. आ—वाय्वग्नि० । रा प्र व म ल२—कालाग्निसमतेजसौ । फ—वाय्वग्निसदृशप्रभौ । ७. आ—उपेक्ष्यतः । अ—उपेक्षितः ॥ ८. आ—न सं॰वीरौ वीक्ष्येते । अ—महात्मानौ वी० । ९. फ—समर्थौ सह तौ यन्मां न प्रेक्षेते परन्तपौ । रा—समर्थावपि न तौ मां वीरौ वीक्षाते यत्परन्तपौ । व—समर्थावपि न तौ मां वीरौ वीक्षते [illegible] रम् । प्र—सम[illegible] मां वीरौ वीक्ष्यते यः परस्परम् । म [illegible] तौ मां वीरौ [illegible] स्परम् ॥ १०. आ—आर्याम् । ११[illegible] ॥ १२. [illegible]

२६] न चिराद् देवि दुःखानाम् अन्तं द्रक्ष्यसि भामिनि ॥२५॥ [२६
ताव् उभौ नर-शार्दूलौ राज-पुत्राव् अरिं-दमौ ।
२७] त्वद्-दर्शन-कृतोत्साहौ लंकां भस्मी-करिष्यतः ॥२६॥ [२७
हत्वा च समरे क्रूरं रावणं सह-बान्धवम् ।
२८] राघवस् त्वां महा-भागः स्वां पुरीं प्रति-नेष्यति ॥२७॥ [२८
यत् तु रामो वि-जानीयाद् अभि-ज्ञानम् अ-निन्दिते ।
२९] प्रीति-सञ्जननं तस्य तन् मे त्वं दातुम् अर्हसि ॥२८॥ [२९
साऽभिवीऽऽक्ष्य दिशः सर्वा वेण्य्-अग्राद् अथ भामिनी ।
३०] मुक्त्वैवं प्र-ददौ मह्यं मणि-रत्नम् इदं शुभम् ॥२९॥ [३०
प्रति-गृह्य मणिं देव्यांस् चेलितोऽहं रघूऽत्तम ।
३१] शिरसा च प्र-णम्यैतां गमनाय मनो दधे ॥३०॥ [३१
गमने च कृतोत्-साहं मां वीऽऽक्ष्य वर-वर्णिनी ।
३२] वि-वर्द्धमानं च मृगं विनिश्-श्वस्याऽऽयतेक्षणा॥३१॥ [३२
अश्रु-पूर्ण-मुखी दीना बाष्प-गद्गदया गिरा ।
३३] माम् उवाच ततः सीता स-भाग्योऽसि महा-कपे॥३२॥ [३३
यो द्रक्ष्यसि महा-बाहुं रामं कमलं-लोचनम् ।
३४] लक्ष्मणं च महा-भागं देवरं मे यशस्-विनम् ॥३३॥ [३४
सीतया त्व् एवम् उक्तोऽहम् अब्रुवं मैथिलीं तदा ।
३५] पृष्ठम् आ-रोह मे देवि क्षिप्रं जनक-नन्दिनि ॥३४॥ [३५

---

१. फ-चिरार्थं ॥ दुः० । २. फ-माविनि ॥ ३. अ फ-अनिंदिती । ४. अ-०य ॥ ५. अ-स सुहृत्सुवम् । ६. फ च प्र म ल$_2$-०मागे ॥ ७. रा ल$_2$ अ-रामोभिजा० ॥ ८. फ-माविनी । ९. फ-मुक्त्वा च । १०. अ फ-प्रमो ॥ ११. अ फ-देव्यास्तव हेतो । १२. अ-०म्यैनां । च रा प्र व ल$_2$-०म्येतां । १३. च रा प्र व ल$_2$-मतिमागमने ।१४. अ-दधौ ॥ १५. अ-शीता ॥ १६. रा व ल$_2$-यद् । १७. रा प्र व म ल$_2$-राजीव० ॥ १८. ल$_2$-०मी ॥

न नागा नाऽपि गन्धर्वा नाऽसुरा न मरुद्-गणाः ।
१९] तव राम रणे शक्ता वेगं प्रति सम्-आसितुम् ॥१८॥ [१९
तव वीर्य-वतः कश्चिद् यदि वै मेऽस्त्य् अनु-ग्रहः ।
२०] क्षिप्रं सु-रुचिरैर् बाणैर् हन्यतां युधि रावणः ॥१९॥ [२०
भ्रातुर् आ-देशम् आ-दाय लक्ष्मणो वा परं-तपः ।
२१] स किम्-अर्थं नर-वरो न मां रक्षति राघवः ॥२०॥ [२१
शक्तौ तौ पुरुष-व्याघ्रौ वाय्व्-अग्नि-सम-विक्रमौ ।
२२] सुराणाम् अपि दुर्-धर्षौ किम्-अर्थं माम् उपेक्षतः ॥२१॥[२२
ममैव दुष्-कृतं किञ्चिन् महद् अस्ति न सं-शयः ।
२३] सम्-अर्थौ तौ न मां वीरौ वीऽऽक्षेते यत् परं-तपौ॥२२ [२३
वैदेह्या वचनं श्रुत्वा करुणं साधु भाषितम् ।
२४] पुनर् अप्य् अहम् आर्यां ताम् इदं वचनम् अब्रुवम् ॥२३॥[२४
त्वच्-छोकाऽभि-युतो रामो देवि सत्येन ते शपे ।
२५] राम (ः) शोकोऽभि-भूतश् च लक्ष्मणः परि-तप्यते २४॥[२५
कथञ्चिद् रुदतीं दृष्ट्वा न कालः पुनर् आसितुम् ।

---

१. ल$_2$–अपि । २. ल$_2$–०गणः ॥ ३. अ–यथा मय्यस्त्यनु० । फ च रा प्र घ म ल$_2$–मय्यस्त्यनु० । ४. प्र घ म ल$_2$–सु र० । ५. फ–यदि ॥ ६. आ–वाय्वग्नि० । रा प्र घ म ल$_2$–कालाग्निसमतेजसौ । फ–वाय्वग्निसदृशप्रभौ । ७. आ–उपेक्ष्यतः । अ–उपेक्षितः ॥ ८. आ–न संवीरौ वीक्ष्येते । अ–महात्मानौ वी० । ९. फ–समर्थौ सह तौ यन्मां न प्रायेते परन्तपौ । रा–समर्थावपि न तौ मां वीरौ वीक्षाते यत्परन्तपौ । घ–समर्थावपि न तौ मां वीरौ वीक्षते यत्परस्परम् । प्र–समर्थौ दायितौ मां वीरौ वीक्ष्यते यः परस्परम् । म ल$_2$–समर्थावपि तौ मां वीरौ वीक्षेते यत्परस्परम् ॥ १०. आ–भाषितम् । ११. घ रा–अब्रवीत् ॥ १२. प्र–०भिहतो । १३. अ–रामो दुःखाभि० ॥ १४. अ–भवता । फ म–भवती । १५. अ–आशितुम ।

२६] न चिराद् देवि दुःखानाम् अन्तं द्रक्ष्यसि भामिनि ॥२५॥[२६
तौ उभौ नर-शार्दूलौ राज-पुत्राव् अरिं-दमौ ।
२७] त्वद्-दर्शन-कृतोत्साहौ लंकां भस्मी-करिष्यतः ॥२६॥ [२७
हत्वा च समरे क्रूरं रावणं सह-बान्धवम् ।
२८] राघवस् त्वां महा-भागः स्वां पुरीं प्रति-नेष्यति ॥२७॥ [२८
यत् तु रामो वि-जानीयाद् अभि-ज्ञानम् अ-निन्दिते ।
२९] प्रीति-सञ्जननं तस्य तन् मे त्वं दातुम् अर्हसि ॥२८॥ [२९
साऽभिवीऽऽक्ष्य दिशः सर्वा वेण्य्-अग्राद् अथ भामिनी ।
३०] मुक्त्वैवं प्र-ददौ मह्यं मणि-रत्नम् इदं शुभम् ॥२९॥ [३०
प्रति-गृह्य मणिं देव्यास् चलितोऽहं रघूऽत्तम ।
३१] शिरसा च प्र-णम्यैतां गमनायं मनो दधे ॥३०॥ [३१
गमने च कृतोत्-साहं मां वीऽऽक्ष्य वर-वर्णिनी ।
३२] वि-वर्द्धमानं च भृशं विनिश्-श्वस्याऽऽयतेक्षणा॥३१॥ [३२
अश्रु-पूर्ण-मुखी दीना बाष्प-गद्गदया गिरा ।
३३] माम् उवाच ततः सीता स-भाग्योऽसि महा-कपे ॥३२॥ [३३
यो द्रक्ष्यसि महा-बाहुं रामं कमल-लोचनम् ।
३४] लक्ष्मणं च महा-भागं देवरं मे यशस्-विनम् ॥३३॥ [३४
सीतया तु एवम् उक्तोऽहम् अब्रुवं मैथिलीं तदा ।
३५] पृष्ठम् आ-रोह मे देवि क्षिप्रं जनक-नन्दिनि ॥३४॥ [३५

---

१. फ-चिरात्वं तु दुः० । २. फ-माविनि ॥ ३. अ फ-अर्निन्दितौ । ४. अ-०य ॥ ५. अ-म सुहृत्सुवम् । ६ फ च प्र म ल$_2$-०भागे ॥ ७. रा ल$_2$ अ-रामोभिजा० ॥ ८. फ-भाविनी । ९. फ-मुक्त्वा च । १०. अ फ-प्रभो ॥ ११. अ फ-देव्याखर हेता । १२. अ-०म्यैनां । च रा प्र च ल$_2$-०म्येवां । १३. च रा प्र व ल$_2$-मतिमागमने ।१४. अ-दधौ ॥ १५. अ-कीता ॥ १६. रा च ल$_2$-यद् । १७. रा प्र व म ल$_2$-राजीव० ॥ १८. ल$_2$-०नी ॥

यावत् ते दर्शयाम्य् अद्य स-सुग्रीवं स-लक्ष्मणम् ।

३६] राघवं च महा-भागं भर्तारम् अ-सितेक्षणम् ॥३५॥ [३६

साऽब्रवीन् मां तदा देवी नैष धर्मो महा-कपे ।

३७] यत् ते पृष्ठं नि-षेवेऽहं भार्या रामस्य धी-मतः ॥३६॥ [३७

अ-वशा यद् अहं वीर स्पृष्टा गात्रेण रक्षसा ।

३८] तत्राऽहं किं करिष्यामि कालेन परि-पीडिता ॥३७॥ [३८

गच्छ त्वं हरि-शार्दूल यत्र तौ राम-लक्ष्मणौ ।

३९] इत्य् एवं सा समा-भाष्य भूयः सं-देष्टुम् आ-स्थिता ॥३८[३९

हनुमन् सिंह-संकाशौ ताव् उभौ राम-लक्ष्मणौ ।

४०] सु-ग्रीवं च महा-बाहुं सर्वान् ब्रूया अन्-आमयम् ॥३९। [४०

यथा च स महा-बाहुर् मां तारयति राघवः ।

४१] अस्माद् दुःखोपसं-रोधात् तथा त्वं कर्तुम् अर्हसि । [४१

N] गत्वा राम-समीपं त्वं शीघ्रं वानर-पुंगव ॥४०॥ [N

इमं तु तीव्रं मम शोक-वेगं

रक्षोभिर् एभिः परि-भर्त्सनं च ।

रामस्य पार्श्वे हि गतो वदेस् त्वं

४२] नित्यं शिवं तेऽस्तु हरि-प्रवीर ॥४१॥ [४२

---

१. आ-सुग्रीव सहलक्ष्मणम् । २ अ-सुम० । ३ अ फ प्र-०णे ॥ ४. फ रा प्र घ $ल_2$ अ-वतो । ५. रा प्र व म $ल_2$-पृष्ठे । ६. फ घ रा प्र व म $ल_2$ अ-निषेवेय ॥ ७ फ प्र-अवश्य । ८. फ-यत्र किं तु । ९. प्र व म $ल_2$ अ-कालेनोपनिपीडिता । घ-कालेनोपरि० । रा-कालेन विनि० ॥ १०. प्र म-कपि० । ११. फ अ-नृपतेः सुतौ । १२. फ-इत्येव । १३ फ घ म-मा । १४ आ-समष्टुम् । फ सदष्टुम् । १५. रा प्र $ल_2$-नास्ति ॥ १६ आ-हनुमत् । १७ अ-०बाहो । १८ फ घ-अनामयम् ॥ १९. रा व-स च । अ-च सुम० ॥ २० $ल_1$-एन । २१ रा प्र घ म $ल_1$-पार्श्वं हि । फ-पार्श्वेऽभिगतो । $ल_2$-पार्श्वविगतो । २२. $ल_2$-वदम ॥

एवं तदाऽऽर्या नृप-सिंह-वीर
सीता वचः प्राऽऽह विषाद-युक्तम् ।
एवं च श्रुत्वा गदितं यथा त्वं
४३] सीतोप-लम्भे च कुरुष्व यत्नम् ॥४२॥ [४२

इत्यार्षे रामायणे सुन्दर-काण्डेऽभिज्ञान-दर्शनो
नाम षट्षष्टितमः सर्गः ॥६६॥

---

१. रा—तदा मा । २ घ म $ल_1$ $ल_2$—नृपवीरसिंह । ३. रा ब म $ल_1$ $ल_2$—०युक्ता ४. च—नास्ति । ५. फ अ—एतच्च । ६ अ—मया त्व । फ—मया ते । रा म $ल_1$ $ल_2$—त्वया । ७. अ—सीतामलम्भे प्रकु० । फ—०लम्भे प्रकु० । घ ब म $ल_1$ $ल_2$—सीतोपलम्भाय । ८ फ अ—शुविम् । घ म $ल_1$ $ल_2$—शीघ्रम् । ९.प—नास्ति॥ १०. $ल_2$—इति सु० । ११. फ—०न प्रदानो । रा प्र घ म $ल_2$—०नदर्शनं ॥

अथेदम् उत्तरं देव्यो पुनर् उक्तमे अ-सम्भ्रमम् ।
१] तव स्नेहान् नर-व्याघ्र हृदयं चाऽनु-दर्शितम् ॥१॥ [१

तथौ बहु-विधं वाच्यो रामो दाशरथिस् त्वया ।
N] यथा मार्मे आ-प्नुयाद्धे शीघ्रं हत्वा रावणम् आ-हवे ॥२॥ [२

यदि वाँ मन्यसे वीर वसैकाऽहम् अरिं-दम ।
२] कस्मिंश्चित् सं-वृते देशे वि-श्रान्तः श्वो गमिष्यसि ॥३॥ [३

मम वै चाऽल्पे-भाग्यायाः सान्निध्यात् तव शत्रु-हन् ।
३] शोकस्याऽस्याऽप्र-मेयस्य मुहूर्त्तं स्याद् अपि क्षयः॥४॥ [४

गते हि हरि-शार्दूल पुनः सम्प्राऽऽप्तये त्वयि ।
४] प्राणानाम् अपि सं-देहो मम स्यान् नाऽत्र सं-शयः॥५॥ [५

तथौ दर्शनम् अर्प्यं एतद् भूयो मां तापयिष्यति ।
५] दुःखाद् दुःख-तरं भूत्वा दुःखितैं दुःख-भोगिनीम् ॥६॥ [६

अयं च वीर सं-देहस् तिष्ठतीऽव ममाऽग्र-तः ।
६] सु-महांस् त्वंवे-सहायेषु वानरेषु महा-मते ॥७॥ [७

कथं नु खलु दुष्-पारं तरिष्यन्ति महोदधिम् ।
७] तानि हर्य्-ऋक्ष-सैन्यानि तौ वाँ नृपं-वराऽऽत्म-जौ ॥८॥ [८

---

१. आ-मिथाः-देव्याः । २. अ-उक्त-स्वस० । ३. फ च रा प्र थ म ल$_1$, ल$_2$ अ-सौहृदं । ४. रा प्र च फ म थ ल$_1$ ल$_2$-चार द० ॥ ५ च-यथा । ६ रा-समाप्नुयाच ॥ ७ आ च-मा । ८. आ-यदी० ॥ ९. रा प्र च म ल$_1$ च फ-चैवाल्प० । १०. आ च फ-वीर्यवान् ॥ ११. अ-ततो ॥ १२. फ रा च थ म ल$_1$ ल$_2$ अ-नवाद० । प्र-उवाच दर्शन प्येतद् । १३. आ-सा । १४. आ-दुःखिता दुःखभागिनी ॥ १५. फ प्र-तन् ॥ १६. फ अ-तु । १७. आ-वा नर० ॥

त्रयाणाम् एव भूतानां सागरस्याऽति-लंघने¹।
८] शक्तिः स्याद् वैनतेयस्य तव वा मारुतस्य वा² ॥९॥ [९
तद् अस्मिन्³ कार्य-नियोगे दैवैर् अपि दुरा-क्रमे⁴।⁵
९] किं पश्यसि समा-धानं त्वं वै कार्य-विदां वर ॥१०॥ [१०
कामम् अस्य त्वम् एवैकः कार्यस्य परि-साधने।
१०] पर्य्-आप्तः पर-वीर-घ्नं यशस्यस् ते बलोदयः॥११॥ [११
बलैः समग्रैर् यदि मां जित्वा रावणम् आ-हवे।
११] अयोध्यां स्वां पुरीं रामो नयेत् तत् स्याद् यशस्-करम् १२[१
यथा तस्य नृ-वीरस्य वचनीं वि-विधा कृता।
१२] रक्षसा तद्-भयाद् एवं न तथाऽर्हति राघवः ॥१३॥ [१३
बलैस् तु सं-कुलां कृत्वा लंकां पर-पुरं-जयः।
१३] मां नयेद् यदि काकुत्स्थस् तत् तस्य सदृशं भवेत्॥१४॥ [१४
तद् यथा तस्य वि-क्रान्तम् अनु-रूपं महाऽऽत्मनः।
१४] भवत्य् आहव-शूरस्य तथा त्वम् उपे-पादय ॥१५॥ [१५
तद् अर्थोप-हितं वाक्यं प्र-सृतं हेतु-संयुतम्।
१५] प्र-शस्याऽहं ततश् तस्या वाक्यम् उत्तरम् अब्रुवम् ॥१६॥ [१

१. आ—सागरस्याभि॰। रा प्र घ म ल₁ ल₂—॰स्यास्य कं॰। २. प्र घ—च॥ ३. ल₂—उर्फं। ४. ल₂—दुरक्रमे। ५. अ—तदस्मिन् कार्यनियोगैर्वान-रैर्दुरतिक्रमे। ६. आ—॰थानं॥ ७. अ—॰ग्र:। ८. आ—परवाबुद॰। फ च अ—यशास्स्तु॥ ९. प्र ल₂—वां। १०. रा प्र घ म ल₁ ल₂—वनादं-पहृता पुरा। च—वनादुपहृता पुरा। ११. फ अ—यथाहं तस्य वीरस्य वनादुपहृता पुरा। १२. च रा प्र व म ल₁ ल₂—एवं। १३. आ फ—हन्ति॥ १४. ल₂—उदपादये। रा प्र ल₁—॰पादये:। च व म—॰पादये। १५. अ—एवमुक्तसुमं। १६. प्र रा घ म ल₁ ल₂—प्रश्रितं। १७. प्र ल₂—॰संश्रितम्। १८. च रा—अब्रवीत॥

देवि हर्य्-ऋक्ष-सैन्येन सं-वृतः प्लवतां वरः ।
१६] सु-ग्रीवः सत्त्व-सम्पन्नस् तवाऽर्थे कृत-निश्चयः ॥१७॥[१७
तस्य विक्रम-सम्पन्नाः सत्त्व-वन्तो महा-बलाः ।
१७] मनः-संकल्प-सिद्धाऽर्थाः नि-देशे हरयः स्थिताः॥१८॥[१८
तेषां नोपरि नाऽधस्तान् न तिर्यक् सज्जते गतिः।
१८] न च कर्मसु सीदन्ति महत्स्व् अमित-तेजसः ॥१९॥ [१९
तैश् चाऽपीऽयं महा-भागैस् ससागर-वरा धरा ।
१९] प्रदक्षिणी-कृता शीघ्रं सत्त्व-वद्भिर् महाऽऽत्मभिः॥२०॥[२०
मद्-विशिष्टाश् च तुल्याश् च सन्ति तत्र वनौकसः ।
२०] मत्-तः प्रत्य्-अवरः कश्चिन् नास्ति सुग्रीव-सन्निधौ २१॥[२१
अहं तावद् इह प्राऽऽप्तः किं पुनस् ते महा-बलाः ।
२१] न हि प्र-कृष्टाः प्रेष्यन्ते प्रेषयन्त्य् अ-वरान् वराः ॥२२॥ [२२
तद् अलं परि-तापेन देवि मन्युर् अपैतु ते ।
२२] एकोत्-पातेन ते लंकाम् एष्यन्ति कपि-कुञ्जराः ॥२३॥[२३
हृष्ट-तुष्टा हि वैदेहि भविष्यस्य् अ-चिराद् इव ।
२३] त्वत्-सकाशं महा-भागौ नृ-सिंहाव् आ-गमिष्यतः२४॥[२४
अरि-घ्नं सिंह-विक्रान्तं क्षिप्रं द्रक्ष्यसि राघवम् ।

---

१. फ च रा प्र म व ल₂–हर्यृक्ष॰ । अ–हर्यृक्षसैन्यानामीश्वरः। २. फ–त्वदर्थे । ३. अतः परमधिकः पाठः–फ–शीघ्रमेष्यति वैदेहि मा भूच्चेवात्र संशयः॥४. रा–तिर्यग् ।५. आ–ऋज्जते । ल₁–ह्यमज्जते। ६.रा च प्र घ म॰ ल₁ ल₂ अ–॰धराधरा। ७.अ–पूर्वं ।८.घ म रा–॰ब्धि वसुन्धरा।अ–महाबलैः। ९. फ–नास्ति ॥ १०. ल₂–वनोकसः । ११. ल₁–स [illegible] । १२. फ–दूत्येनामिततेजसः । अ–प्रेष्यन्ते हीतरे जनाः ॥ १३. आ च–उपैतु । व रा–अपैति । १४. फ–नास्ति ॥ १५. रा प्र घ म ल₁ ल₂ अ–हृष्टा तुष्टा । १६. रा प्र व म ल₁ ल₂–च । अ–तु । १७.व–भविष्यसि चि॰ ॥ १८. फ–तदलं । १९. अ–॰सङ्काशं । २०. फ–द्रक्षसि ।

२४] लक्ष्मणं च धनुष्-पाणिं लंका-द्वारम् उप-स्थितम्॥[2]२५॥ [२५

नख-दंष्ट्राऽऽयुधान् वीरान् सिंह-शार्दूल-विक्रमान् ।

२५] वानरान् वानरेन्द्रं चे क्षिप्रं द्रक्ष्यसि सं-हतान् ॥२६॥ [२६

शैलाऽम्बुद-निकाशानां लंका-मलय-सानुषु ।

२६] कपीनां नर्दताम् आर्ये श्रोष्यसे न चिराद् गिरः॥[6]२७॥ [२७

निवृत्त-वन-वासं तं त्वया सार्धम् अरिं-दमम् ।

२७] अभि-षिक्तम् अयोध्यायां क्षिप्रं द्रक्ष्यसि राघवम्॥२८॥[10][२८

तथा मया वाग्भिर् अ-दीनभाषिणी

शिवाभिर् आर्या त्वरितं प्र-सादिता ।

चकार शान्तिं मम मैथिलाऽऽत्म-जा

२८] तवाऽपि शोकेन तथाऽति-पीडिता ॥२९॥ [२९

इत्यार्षे रामायणे सुन्दर-काण्डे उत्तरोत्तर-वाक्यं

नाम सप्तषष्टितमः सर्गः ॥६७॥

---

१. अ–०मन्तं । २. रा प्र व म $ल_1$ $ल_2$–उपागतम् । ३. फ–नास्ति । ४. फ–वानरेन्द्रांश्च । ५. फ रा प्र व $ल_1$ $ल_2$ अ–संगतान् ॥ ५. फ–०सि । ६. रा प्र व म $ल_1$–कपीनां नर्दतामार्ये न चिराच्छ्रोष्यसे गिरः । $ल_2$–नास्ति ॥ ७. फ अ–निर्वृत्त० । ८. प्र व म $ल_1$–च । ९. फ प्र व म $ल_2$ अ–अभिनन्दिते । १०. $ल_2$ रा–नास्ति । ११. आ–शिवाभि राम । १२. आ $ल_2$ रा प्र व म ष $ल_1$ अ–न चापि । १३. आ–तथापि पी० । प्र ष म $ल_1$ अ–तथा निपी० । रा–तथा प्रपी० ॥ १४. आ–आर्षे । $ल_1$ $ल_2$–इति रा० । रा–इत्यार्षे सु० । अ–सुन्दरकाण्डे । १५. व म ष–उत्तरवाक्यं ॥

श्रुत्वा हनुमतो वाक्यं यथा-वद् अभि-भाषितम् ।
१] रामः प्रीति-समायुक्तम् उत्तरं वाक्यम् अब्रवीत्॥१॥ [१
कृतं हनु-मता कृत्यं सु-महद् भुवि दुर्ध्-करम् ।
२] मनसाऽपि यद् अन्येन कर्तुं खलु न शक्यते ॥२॥ [२
न हि तं परि-पश्यामि यस् तरेत् तु महाऽर्णवम् ।
३] अन्यत्र गरुडाद् वायोर् अन्यत्र च हनू-मतः॥३॥ [३
देव-दानव-यक्षाणां गन्धर्वोरग-रक्षसाम् ।
४] अ-प्रधृष्या पुरी लंका रावणेनोऽभि-पालिता ॥४॥ [४
दुर्-गा दुर्ग-गिरेर् मूर्ध्नि वीरेणैकेन धर्षिता ।
५] को वीर्य-बल-सम्पन्नः समः स्याद् हि हनू-मतः॥५॥ [६
भृत्य-कार्यं हनु-मता सु-ग्रीवस्य कृतं महत् ।
६] अ-संनिधौ तत् सं-बलं सदृशं वि-क्रमस्य तु? ॥६॥ [७
यो हि भृत्यो नि-युक्तः सन् तत्-तत्-कर्मणि दुर्ध्-करे।
७] कुर्यात तद् अनु-अनुर... आहुः पुरुषोत्तमम्॥७॥[८

भृत्यो वै नृ-पतेः कार्यं न कुर्याद् यः समा-हितः ।[2]
८] शक्तो न यः सम्-अर्थश् च तम् आहुः पुरुषाऽधमम् ॥८॥ [१०
तन् नियोग-नियुक्तेन कृतं कर्म हनूमता ।
९] न चाऽऽत्मा लघुतां नीतः सु-ग्रीवश् चाऽपि तोषितः ॥९॥ [११
अहं च रघु-वंशश् च लक्ष्मणश् च महा-बलः ।
१०] वैदेह्या दर्शनेनाऽद्य धर्म-तः परि-रक्षिताः ॥१०॥ [१२
एतत् तु मम दीनस्य मनो भूयः प्र-कर्षति ।
११] यद् इहाऽस्य प्रियाऽऽख्यानैर् न कुर्यां सदृशं प्रियम् ॥११॥ [१३
एष सर्वस्व-भूतस् ते परि-ष्वङ्गः कृतो मया ।
१२] अवस्था-काल-सदृशो गृहाण त्वम् इमं मम ॥१२॥ [१४
N] शुभं वाक्यम् इदं श्रुत्वा तव वक्त्रान् महा-मते । [N
सर्व-था तु कृतं तावत् सीतायाः परि-मार्गणम् ॥१३॥
१६] सागरं तु समा-साद्य पुनर् मे व्यथितं मनः । [१७
कथम् एते समुद्रस्य दुष्-पारस्य महाऽऽत्मनः ।
१७] हरयो दक्षिणं तीरं गमिष्यन्ति समा-गताः ॥१४॥ [१८
प्राऽऽप्तश् च खलु वैदेह्या वृत्तान्तम् तावद् अद्य मे ।

श्रुत्वा हनुमतो वाक्यं यथा-वद् अभि-भाषितम् ।
१] रामः प्रीति-समायुक्तम् उत्तरं वाक्यम् अब्रवीत् ॥१॥ [१
कृतं हनु-मता कृत्यं सु-महद् भुवि दुष्-करम् ।
२] मनसाऽपि यद् अन्येन कर्तुं खलु न शक्यते ॥२॥ [२
न हि तं प्रति-पश्यामि यस् तरेत् तु महाऽर्णवम् ।
३] अन्यत्र गरुडाद् वायोर् अन्यत्र च हनू-मतः ॥३॥[8] [३
देव-दानव-यक्षाणां गन्धर्वोरग-रक्षसाम् ।
४] अ-प्रधृष्या पुरी लंका रावणेनाऽभि-पालिता ॥४॥[10] [४
दुर्-गा दुर्ग-गिरेर् मूर्ध्नि वीरेणैकेन धर्षिता ।
५] को वीर्य-बल-सम्पन्नः समः स्याद् हि हनू-मतः ॥५॥ [६
भृत्य-कार्यं हनु-मता सु-ग्रीवस्य कृतं महत् ।
६] अ-संनिधौ तव स्व-बलं सदृशं वि-क्रमस्य तु ? ॥६॥[16] [७
[17]यो हि भृत्यो नि-युक्तः सन् तव-तत्-कर्मणि दुष्-करे ।
७] कुर्यात् तद् अन्-अस्यूर् वै तम् आहुः पुरुषोत्तमम् ॥७॥[८

---

१. फ–हनू० । २ आ–अति० । ३. फ रा प्र ब म ल$_1$–उत्तमं ॥ ४. ल$_2$–सुमहच्चाविदु० । प्र–सुमहदुष्कृतं कृतम् । ५. ब म रा अ–न कर्तुं खलु ॥ ६. प्र ब म ल$_2$–परिप० । ७. प्र–तरेत । फ–तरेत्सुम० । ८. अ–नास्ति ॥ ९.आ–०नापि पालिता । अ–०नानुपालिता ।१०. ल$_2$–४र्थ-श्लो-कादारम्य ९म-श्लोकपूर्वार्धाऽन्तः पाठो नास्ति ॥ ११. आ–दुर्गाद्दुर्ग० । फ अ ल$_1$,ल$_2$–दुर्गा दुर्गगि० । १२. फ–०मंपन्नः । १३ रा प्र ब म ल$_1$–हनूमतः ॥ १४. ल$_1$–हनीमतम् । १५. फ–असंनिधाय स्व० । आ–०धौ यत्र वर्ले ॥ १६. रा प्र ब म ल$_1$–नास्ति ॥ १७ म–को । १८. ल$_1$–सन् भर्त्सकर्मणि दुष्कर । म–सम्भर्तृकर्मणि दुष्करं । फ अ–सम्भर्या क० । १९. फ म–कुर्यात् तद् अनुरूपं । अ–कुर्यादनसूयुर् ॥

भृत्यो वै नृ-पतेः कार्यं न कुर्याद् यः समा-हितः ।[2]
८] शक्तो न यः सम्-अर्थश् च तम् आहुः पुरुषाऽधमम्[4] ॥८॥[१०
तन् नियोग-नियुक्तेन कृतं कर्म हनूमता ।
९] न चाऽऽत्मा लघुतां नीतः सु-ग्रीवश् चाऽपि तोषितः[5][6]॥९॥[११
अहं च रघु-वंशश् च लक्ष्मणश् च[7] महा-बलः[7] ।
१०) वैदेह्या दर्शनेनाऽद्य धर्म-तः परि-रक्षिताः ॥१०॥ [१२
एतत्[8] तु मम दीनस्य मनो भूयः प्र-कर्षति ।
११] यद् इहाऽस्य प्रियाऽऽख्यानैर्[10] न कुर्यां सदृशं प्रियम्॥११॥[१३
एष सर्वस्व-[11] भूतस् ते परि-ष्वङ्गः कृतो मया ।
१२] अवस्था-काल-सदृशं गृहाण त्वम्[12] इमं मम ॥१२॥ [१४
N] शुभं वाक्यम् इदं श्रुत्वा तव वक्ष्यन् महा-मते । [N
सर्व-था[13] तु कृतं तावत् सीतायाः परि-मार्गणम् ॥१३॥
१६] सागरं तु समा-साद्य पुनर् मे व्यथितं मनः । [१७
कथम्[15] एते समुद्रस्य दुष्-पारस्य महाऽऽत्मनः ।
१७] हरयो दक्षिणं[17] तीरं गमिष्यन्ति समा-गताः ॥१४॥ [१८
माऽऽस्येश्[18] च खलु वैदेह्या वृत्तान्तम् तावद् अद्य मे ।

---

१. रा प्र म-कुर्याद्यो न । अ-कुर्याद्वै । २. फ-यो भृत्यः परमं कार्यं न कुर्यान्नृपतेः प्रियम् । ३. म-शक्तो युक्तः । च अ-शक्तो नयस० । फ-स्वस्थो युक्तः । ४. ल$_1$-नास्ति ॥ ५. रा प्र व म ल$_1$ ल$_2$-शोभितः । च-पोषितः ॥ ६. ल$_1$ ल$_2$-चापि तोषितः । च रा प्र व म-चापि पोषितः । ७ च रा प्र व म ल$_1$ ल$_2$ अ-०रक्षितः ॥ ८. आ-एवं । ९. व-इहाय । १०. फ च रा व प्र ल$_2$-प्रियाख्याने । ल$_3$-प्रियाख्याने । म-प्रियाख्याते ॥ ११. फ-धर्मस्थम्० । १२. अ-इदं ॥ १३. ल$_2$-सुमयं । फ च रा प्र व ल$_1$ अ-सुकृतं ॥ १४. अ-अन्तः स० । १५. प्र रा व म ल$_1$ ल$_2$-गमिष्यन्ति । १६. म-महाम्बुधेः । रा व-महोदधेः । १७. रा प्र व म ल$_1$ ल$_2$-पार्श्वं समुद्रस्य ॥ १८. फ रा प्र व म ल$_2$ अ-शासः स ।

१८] समुद्र-पार-गमने हरीणां हि किम् उत्तरम् ।[१९
कथं सर्वे तरिष्यन्ति वातोद्धत-तरंगिणम् ॥१५॥
इत्य्-उक्त्वा शोक-सम्भ्रान्तो रामो शत्रु-निर्बर्हणः ।
१९] हनूमन्तं महा-वेगं ततो ध्यानम् उपाऽऽगतः ॥१६॥[२०

इत्यार्षे रामायणे सुन्दर-काण्डे श्रीराम-वाक्यं
नामाऽष्टाषष्टितमः सर्गः ॥ ६८॥

---

१. म—॰गमनं । २. आ—स्वम् । ३. च—उत्तमम् । ४. ल$_1$ ल$_2$ म य रा च फ प्र अ—गमिष्यन्ति । ५. [illegible] य च म—वातोद्भूत॰ । फ प्र—वातोद्भूत॰ । अ—वातोद्भूततरंगिणः ॥ ६. आ—॰सम्भ्रान्तो । फ—मंत्रसो । ७. ल$_1$ ल$_2$—॰विबर्हणः । ८. आ—उपागमं । ल$_2$—उपागताः । ९. ल$_2$—इतिसुं॰ । १०. ल$_1$ च म प्र य रा—रामवाक्यं ना॰ । अ—उपयोगे हनूमं ॰ो नाम सर्गः । ११. फ—सर्गसमाप्तिर्न दृश्यते ॥

## अं-७१]= [ एकोनसप्ततितमः सर्गः ] =[दा-२]

ततः शोक-परिद्यूनं रामं दशरथाऽऽत्म-जम् ।
१] उवाच वचनं श्री-मान् सु-ग्रीवः शोक-नाशनम् ॥१॥ [१

किम्-अर्थं तप्यसे वीर यथाऽन्यः प्राकृतस् तथा ।
२] मैवं भूस् त्यज सं-तापं कृत-घ्न इव सौहृदम् ॥२॥ [२

३उ] सं-तापस्याऽद्य वै स्थानं न हि पश्यामि राघव ।
प्र-वृत्त्याम् उप-लब्धायां ज्ञाते हि नि-लये रिपोः ॥ ३॥[३

४] धृति-मान् शास्त्र-वित् प्राज्ञः पण्डितश् चाऽसि राघव ।
N] त्यजैतां प्राकृतां बुद्धिं कृताम् एवाऽऽत्म-दूषिकाम् ॥४॥ [४

वानरेषु समा-सक्तं न ते कार्यं वि-पत्स्यते ।
१०] अ-चिराद् द्रक्ष्यसे सीतां तीर्त्वा राघव सागरम् ॥८॥ [२०

नह्य् एषाम् अस्त्य् अ-कर्तव्यं त्वद्-अर्थे किंचिद् एव तु ।[10]
N] वीर्य-विक्रम-सम्पन्ना बल-वन्तो हि वानराः ॥६॥ [N

तद् अलं वि-क्लवां बुद्धिं कृत्वा सर्वाऽर्थ-नाशिनीम् ।
N] पुरुषस्य हि लोकेऽस्मिन् शोकः शौर्याऽप-कर्षणः ॥७॥ [१५

---

१. फ च रा प्र ब म ल$_1$ ल$_2$–वं तुं । २. फ–०परिक्लान्तं । ३. प्र–कपिनायकः । ४. अ–किं त्वं सन्तप्यसे ॥५. आ च रा प्र च म ल$_1$ ल$_2$–०स्यास्य। ६. आ–विप० । ७. फ च प्र ब म ल$_1$ ल$_2$–प्रवृत्तावुप० । ८. अ–ज्ञातो । फ–विज्ञाते । च ब म ल$_1$ प्र–ज्ञातो वै । ल$_1$–ज्ञातोऽयं । ९. च–निलया । ब म ल$_1$ ल$_2$–निर्णयो । प्र–निलयो । १०. रा–नास्ति ॥ ११. अ–बुद्धिमान् । १२. रा–त्यज्यतां । १३. अ–वीर तामेवात्म-प्रदूषिकाम् । १४. फ–समायुक्तं । १५. अ–तत्ते कार्यं विनश्यति । १६. च–रावण । १७. अ–राम येनमर्थकार्यं त्वदर्थं किंचिदेव तत् ॥ १८. आ–विक्लवं । १९. अ–शौर्योपकर्षकः । फ–शौर्यापकर्षकः ॥

यत् तु कार्यं मनुष्येण शौण्डीर्यम् अव-लम्बिना ।
६] अस्मिन् काले महा-प्राज्ञ तत् त्वम् आ-तिष्ठ तेजसा ॥८॥[१६
शूराणां हि मनुष्याणां त्वद्-विधानां महाऽऽत्मनाम् ।
७] वि-नष्टानां प्र-नष्टानां शोकं न ह्य् अनु-शोचनम् ॥९॥ [१७
त्वं तु बुद्धि-मतां श्रेष्ठः सर्व-शस्त्र-भृतां वरः ।
८] साधम् अस्मद्-विधैर् भृत्यैर् अरीन् जेतुम् इहाऽर्हसि १०॥[१८
न हि पश्याम्य् अहं किञ्चित् त्रिषु लोकेषु राघव ।
९] गृहीत-धनुषो यस् ते तिष्ठेद् अभि-मुखो रणे ॥११॥ [१९
११पू] तद् अलं शोकम् आ-विश्व(?श्य) धैर्यम् आ-लम्ब्य राघव।
N] क्षात्र-धर्मम् उपाऽऽतिष्ठ सर्वो दण्डाद् विभेति हि ॥१२॥[२१
लंघनेऽर्थे हि घोरस्य सागरस्य नदी-पतेः ।
N] सहाऽस्माभिर् महा-बाहो सूक्ष्मा बुद्धिर् वि-धीयताम् १३॥[२२
समुद्रं लंघयित्वा तु बहु-नक्र-झषाऽऽकुलम् ।
N] लंकां तां वि-धमिष्यामो जेष्यामश् च रणे रिपून् ॥५॥[८

---

१. फ–सौंडीर्यमवष्टम्भता । प्र य ल$_2$–शौटीर्यम० । २. अ–यस्मिन् । ३. आ–०प्राज्ञः । ४. अ–ता त्वमुत्तिष्ठ । फ च रा प्र व म ल$_1$ ल$_2$–स त्वमा ॥ ५. अ–विनष्टे विप्रनष्टे वा क्षण । फ–विनष्टे वा प्रणष्टे वा क्षम । ६. च रा व म ल$_1$ ल$_2$–०शोचितु ॥ ७. रा प्र व म ल$_1$–०विदा । ८ च–०भृत्यैर् । ९. ल$_1$–त्वसि । १० रा प्र व ल$_1$–न शोचितुम् । म–अरि जेतुम् । ल$_1$–कार्यं कर्तुम् । च–अरीन् हयेतुम् । आ–अरीन् क्षेप्तुम् ॥ ११. ल$_1$–रहयामेह कश्चित् । १२. च अ–अति० ॥ १३. अ–शोकवेगेव क्रोधम् । १४. रा प्र म म ल$_1$ ल$_2$–उपाश्रित्य । १५ अ–विभेत्यहे ? ॥ १६. अ–०र्थं सुघो० । फ च रा प्र व म ल$_1$ ल$_2$–रघनार्थं हि । १७. अ–महीपते । १८. ल$_2$–महा० । १९. ल$_1$–सूक्ष्मबुद्धिर् ॥ २०. ल$_1$ अ– च । २१. अ–च । २२. प्र ल$_2$–विधमिष्यामि । २३ ल$_2$–जेष्यामि ॥

निरुत्-साहस्य दीनस्य शोक-पर्याकुलाऽऽत्मनः ।
N] सर्वाऽर्था व्यव-सीदन्ति सत्त्वं-हीनस्य रावव ॥१५॥ [६
११उ] इमे सम्-अर्थाः शूराश् च सर्वे वै हरि-पुंगवाः ।
त्वत्-प्रियाऽर्थे कृतोत्-साहाः प्र-वेष्टुम् अपि पावकम् ॥१६॥ [७
१२] एषां हर्षेण जानामि तर्कश् च सु-दृढो मम । [८
वि-क्रमेणाऽऽहरिष्यामः सीतां हत्वा रिपूं रणे ॥१७॥ [९पू
१३] सेतुर् बध्येत हि यथा पश्येम तां पुरीम् ।
तस्य राक्षस-राजस्य तथा त्वं कर्तुम् अर्हसि ॥१८॥ [१०
१४] दृष्ट्वा सा हि पुरी लंकां त्रिकूट-शिखरे स्थितां ।
१५पू] समरे च हतं सेतुं दर्शनाद् अव-धारय ॥१९॥ [११
१६उ] इमे हि समरे शूरा वानराः काम-रूपिणः ।[14]
१७पू] तां पुरीं वि-धमिष्यन्ति शिला-पाषाण-दौरुभिः ॥[15] २०॥[२४
१५उ] सेतुर् बद्धः समुद्रे तु लंका च वशम् आगता ।

---

१. अ–व्यसनार्तस्य । फ–व्यसनीभस्य ॥ २. अ–सर्वार्थेषु० । रा–सर्वार्थाः ॥ ३ अ–एवं कर्पेण । ४. अ–महान् । ५. अ–०ण्यानयिष्यामि । प्र घ ल$_2$–०ण्यानयिष्यामः । ६. अ–हित्वा । ७. फ प्र घ ल$_2$ अ–रणे रिपून् ॥ ८. फ–हि बंधेत तथा । च व ल$_1$ ल$_2$–बंधेन हि यथा । रा–बंधेन हि तथा । प्र–बंधेन ह्ययथा । ९ रा प्र फ च व म ल$_1$ ल$_2$ अ–पश्येम ॥ १०. अ–दृष्ट्वा चेद्दिपुरी लङ्का । प्र म ल$_1$–दृष्टा हि सा पुरी । ११. अ–०रे स्थितां । प्र म ल$_1$–०रास्थिता । १२. अ फ रा प्र ल$_1$ ल$_2$ व च म–हतः शत्रुर् । १३. फ–एव धा० ॥ १४. रा ल$_1$ अ–नास्ति । १५. फ च प्र व म ल$_1$ ल$_1$–शिलापादपयोधिनः । १६. रा अ–नास्ति ॥ १७. रा–सेतुर्बन्धः स० । अ–सेतुं बद्धं सागरं च । व–सेतुं समुद्रे बद्धा तु । १८. अ–आगतम् । फ रा–वशमुपागता ।

१६७] सर्वं[1] तीर्णं[2] च[3] नः सैन्यं सर्व-था[3] वि-जयी भवान्[4] ॥२१॥[5] [१३
बहु चिन्तयितव्यं ते संग्रामोऽर्थे नरेश्वर ।[6]
N] महतश् च समुद्रस्य लंघनाऽर्थम् अरिं-दम ॥[7]२२॥[8] [N

इत्यार्षे रामायणे सुन्दर-काण्डे सुग्रीव-वाक्यं
नामैकोनसप्ततितमः सर्गः ॥६९॥

---

१. आ–सर्वतीर्णं । २. अ–च तद् । रा–तु तद् । ३. अ–त्रिवं पूर्वोपराधय । ४. फ च रा व म म ल, ल₂–अयं श्लोकः १९।११श्लोकात्परं पठितः । अतः परमधिकश्च पाठ–फ रा च व म प्र ल, ल₂–कथं चिदेव पर्यामस्ते[1] वयं वरुणालयम् । अ–कथंचिदेव आनीया सैन्यस्तं वरुणालयम् । ५. आ–समुद्रार्थे । ६. अतः परमधिकः पाठः–फ च प्र म ल, ल₂ अ–किमुक्त्वा[2] बहुनैनेनं[3] सर्वथा विजयी भवेत् । ७. अ–नास्ति । ८. अतः परमधिकः पाठ–म अ–तस्मादुद्योगमातिष्ठ प्रयत्ने सिद्धिमास्थितः । म–इति वचनं सूर्यपुत्रे श्रुत्वा सुरपतिसमरसारे सूर्यवंशावतंसे । नियमितपरितापस्तापनो राक्षसानां सपदि हृषितरोमा राघवः संबभूव ॥ ९. अ–उद्योगे सु० । ल₂–इति सुन्दरकाण्डे । १०. आ–उद्योगे पर्वणि उत्तरोत्तरवाक्यं नाम । रा म ल₂–उत्तरोत्तरवाक्यं नाम । प्र–उत्तरोत्तरं नाम ।

---

१. फ प–त्वं । २. अ–बहुनात्र किमुक्तेन ।

स वि-नीतम् अन-आयासं सु-ग्रीवेण प्र-हर्षितः ।
१] सु-ग्रीवम् अभि-नंद्यैव हनूमन्तं ततोऽब्रवीत् ॥१॥ [१.उ

तपसा सेतु-बन्धेन सागरोच्-छोषणेन वै ।
२] सर्वथा सुसमर्-अर्थो हि सागरस्याऽति-लङ्घने ॥२॥ [२

बलस्य परि-माणं च द्वार-दुर्ग-क्रियाम् अपि ।
३] गुप्ति-कर्म च लंकायां रक्षसां साधनानि च ॥३॥ [४

यथं च यावत् च यादृक् च लंकायाम् अभि-दृष्टवान्
४] तथा तद् सर्वम् आचक्ष्व सर्वस्य कुशलो ह्य् असि ॥४॥ [५

श्रुत्वा रामस्य वचनं हनुमान् मारुताऽऽत्म-जः ।
५] वाक्यं वाक्य-विदां श्रेष्ठः प्रोवाच समव-स्थितः ॥५॥ [६

श्रूयतां सर्वम् आख्यास्ये दुर्ग-कर्म-विधानतः ।
६] यथा गुप्ता पुरी लंका यथैव च सु-रक्षिता ॥६॥ [७

७पू] महा-प्र-मुदिता रम्या मत्त-द्विप-समाऽऽकुला । [१०पू
N] सं-हतो रथ-संपूर्णा रक्षो-गण-निषेविता ॥७॥ [N

---

१. फ–सुविनीम तथाकामं । श्र–संविनीतमनायासं । २. फ–सुग्रीवेन प्रचोदितः । ३. श्र–०मतमयाब्रवीत् ॥ ४. फ–या । ५. श्रा–सुमर्थोहं । म–०हं सुसमर्थो सा० । ६. रा प्र म ल$_1$ ल$_2$–०रस्यास्य लं०। ७. रा–तु । ८. ल$_2$–गुप्त०। ९. ल$_1$–लङ्कायां राक्षसा सा० ॥ १०. ल$_1$ ल$_2$–यश्च । फ–यथा । ११. श्र–यातयथवच्च । १२. च ल$_1$ ल$_2$–०थामपि द० । म प्र व रा–०थामसि द०। श्र–०यां परिद०। १३. ल$_1$–वं स० । १४. ल$_1$–चश्च । १५. ल$_1$–सर्वस्यं दत्तो। श्र–सर्वथा कु० । १६ श्र–ग्रवि ॥ १७. श्र–समुपस्थितः । १८. श्र–आख्यास्य ।१९. ल$_1$ च व रा म–मद्रप्टा सु०।२०.प्र–हयद्विप० ।२१.श्रा–सहमा रससं०। ल$_1$,ल$_2$ म घ रा–संहतारथंस०। म–संघवा रयमं०। च–संहिता रथमं०॥

७उ] दृढबन्ध-कपाटानि महापरिघ-वन्ति च ।
चत्वारि नि-पुणान्य् अस्या द्वाराणि सु-महान्ति च॥८॥[११
८] यन्त्रेषूऽपेरि यन्त्राणि बल-वन्ति महान्ति च ।
१०उ] आ-गच्छन्त्य् अपि सैन्यानि वार्यन्ते तानितैर् अपि॥९॥[१२
द्वारेषु वि-पुला विद्धि कालाऽऽयस-मयीः शिलाः ।
९] शत-घ्नश् चाऽर्चिता वीरैः शैल-न्यो रक्षसां गणैः॥१०॥[१३
शात-कौम्भ-मयस् तस्याः प्रा-कारो दुष्प-धर्षणः ।
११] मणि-विद्रुम-वैदूर्य-मुक्ता-विरचिताऽन्तरैः ॥११॥ [१४
अ-गाधा ग्राहवत्यश् च परि-खा मीन-संकुलाः ।
१२] ताः सर्वाः सुमहा-दुर्गाः शीताऽमले-जलाः शुभाः ॥१२॥[१५
तासां चतुर्षु द्वारेषु सं-क्रमाः परमाऽऽयताः ।
१३] यन्त्रैर् उपेता बहुभिर् बलवद्भिः स्वधि-ष्ठितैः ॥१३॥ [१६
प्रयत्नं तु सं-क्रमास् तस्याः पर-सैन्योऽऽगमे सति ।
१४] यन्त्रैर् अभ्यवे-कीर्यन्ते परि-खासु समन्त-तः ॥१४॥ [१७

१. ल$_1$ म प्र घ–०कवाटानि । अ–०कपटानि । २. अ–०घवद्धिरुः । ३. म अ–विपुलान्यस्य । ४. ल$_2$–न्ति ॥ ५. फ–०धूरलयं० । ६. ल$_1$,ल$_2$ म प्र रा–बहूनि सुमहान्ति । फ–बलवन्ति बलानि । ७. अ–न्ति । ८. रा–आगच्छंत्यम । ९. ल$_1$,ल$_2$–स्तानितैरपि । प्र घ–स्तानितैरपि॥१०. ल$_2$ घ अ–शीलाः कालायसमयाः । ल$_1$ म रा–शीला कायनद्विमयाः। प्र–शीलाः कालायसमयाः। घ–शीलाः कालाशोमयाः । ११. आ–० रचिता । १२. अ–शतघ्नी ॥ १३. आ–०धर्षिनाः।१४.ल$_1$–विद्रुमवैदूर्य०।१५.आ–०चितान्तराः। अ–०चितां वरान्। १६ आ–०वन्त्यश्च । अ–०वन्त्यश्च । १७. ल$_1$–०महाद्याः। १८.ल$_1$ रा–समहा०। १९. अ–शीततोयमयाः ॥ २०. आ–नदुसा पन्नागमाः । ल$_1$ ल$_2$ म प्र ब रा–संक्रमः परमो यथा । २१. प्र ब च [illegible] ल$_2$–उपेतो । ल$_1$–उपेतव० । २२. ल$_1$–प्रयः सु० २३. ल$_1$–संक्रमन्तरयाः । फ–०मास्तस्याः । २४.ल$_2$–०गमे प्रति । प्र–०गमं प्रति । २५. ल$_1$–अभ्यव० । प्र–अपि वि० ॥

एकस् त्व् अ-कम्पो बलवान् सं-क्रमः परमो दृढः ।
१५] काञ्चनैर् बहुभिः स्तम्भैर् वेदिकाभिश् च सं-वृतः॥१५॥ [१८

ते मया सं-क्रमा भग्नाः परि-खाश् चाऽपि-पूरिताः ।
१६] दग्धा च नगरी लंका सा ऽट्टि-प्राकार-तोरणा ॥१६॥ [२९

येन केन तु मार्गेण तरामो वरुणाऽऽलयम् ।
१७] हतां च नगरीं लंकां वानरैर् उप-धारय ॥१७॥ [३१

अंगदो द्विविदो मैन्दो जाम्बवान् निषधो नलः ।
१८] नीलः सेना-पतिश् चैव बल-शेषेण किं तव ॥१८॥ [३२

प्लवमानाश् च गत्वैते लंकां रावण-पालिताम् ।
१९] स-प्राकारां स-भवनां नाशयिष्यन्ति राघव ॥१९॥ [३३

स समाऽऽज्ञापय क्षिप्रं बलानां सर्व-संग्रहम् ।
२०] मुहूर्तेन च युक्तेन प्र-स्थानम् अभि-रोचय ॥[22]२०॥ [३४

पुनर् एवाऽथ पप्रच्छ राघवो मारुताऽऽत्मजम् ।
७१,१] बुद्धिमन्तं हनूमन्तं दुर्ग-कर्म-विधिं प्रति ॥२१॥ [N

---

१. आ-त्वेकस्य । ल$_1$ ल$_2$ म प्र व रा च फ-त्वेकस्तु । २. अ-सुमहादृढः । ३. ल$_1$ल$_2$ म प्र व रा च फ-वेदिकाभिश्च सर्वतः । अ-वेदिकाभिः समन्ततः ॥४.आ-मद्भुमा भग्नाः । फ-संक्रमा भिन्ना ।५. अ-परिखाः चापि पूरिताः । आ फ-परिखाः परिपूरिताः । ६. ल$_2$-लङ्का । ७. ल$_2$-दग्धा । ८. ल$_1$-सांधया० ॥ ९. आ च-तेन । १०. आ-स रामो । च-सा रामो । अ-प्रतीर्य । ११. ल$_1$-मकरालयम् । १२. आ च-हतेव । फ-हवैव । ल$_2$ म प्र व रा च-हता च । १३. आ फ-नगरी लङ्का । १४.आ-०धारया ॥ १५. ल$_2$व रा-द्विविधो मैंदो । ल$_1$-द्विविधो सन्धो । १६. ॥ प्र-निषदो । १७. ल$_2$-नीला सीना०॥ १८. ल$_1$ल$_2$ म प्र व च फ-०मानाश्च । १९.रा-गत्वैवं ।२०. ल$_1$-सप्र० । २१. आ-प्रभवना नाशयि० । म-प्रभवनां नाशयि० । २२. ल$_1$ ल$_2$ रा-स । व च-सु० । २३. अ-अत्र सर्गः समाप्यते । फ-अतः परमधिकः पाठः-राक्षसानामभावाय सीतासन्तर्पणाय च ॥ २४. अ-वायुनन्दनम् ॥

कानि दुर्गाणि दुर्गे च कीदृशं तद्[1] ब्रवीहि मे।[2]
२] श्रोतुम् इच्छामि तत्त्व-ज्ञ वक्तुम् अर्हति तद्[1] भवान्॥२२॥[N
स पृष्टो राज-पुत्रेण रामेणाऽक्लिष्ट-कर्मणा ।
३] आ-चचक्षे यथेन्द्रेण[4] पुरा पृष्टो बृहस्पतिः ॥२३॥ [N
परां[5] गुप्तिं च लंकायाः सागरस्य च[6] भीम-ताम्।
४] त्रि-भागं च बलौघस्य निर्-देशं रावणस्य च ॥२४॥ [N
स्वयं प्रकृति-सम्पन्नो युयुत्सू राम रावणः ।
५] उत्-थितश् चाऽप्र-मत्तश्[10] च बलानाम् अनु-दर्शने॥२५॥[१९
६पू] लंका पुनर् दुरा-लम्बा[11] देव-दुर्गा महा-भया।
N] नादेयं[12] पार्वतेयं[13] च वानि[14] चाऽन्यं[14] वर्तते ॥२६॥ [२०
७पू] द्वीपो[15] मध्ये समुद्रस्य दूर-पारस्य राघव[16] ।
N] नौ-पन्थाश् चाऽपि नाऽस्त्य् अत्र निरुद्-देशश्[16] च सर्व-तः[17] २७[२१
शैलाऽग्रे रुचिरा दिव्या सा पुरी देव-निर्मिता ।
८] वाजि-वारण[18]-संपन्ना लंका परम-दुर्गमा ॥२८॥ [२२
परि-खाश्[19] च शत-घ्न्यश्[20] च यन्त्राणि वि-विधानि च।
९] शोभयन्ति पुरीं लंकां रावणस्य दुर्-आत्मनः ॥२९॥ [२३

---

१. ल१—कीदृशास्ता ब्रवीहि मे। फ—कीदृशं तद् ब्रवीतु मे। अ—कीदृशं तद्वदाशु मे। २. म—अतः परमाधिकः पाठः—रावणसानामभावाय सीता-संहर्षणाय च। ३ अ—वानर॥ ४. आ—यथेन्द्रस्य। ५. ल१—परं। ६. आ—च भीमताः। ल२ म प्र रा—सुभीमताम्। आ च—च सारताम्। ७. आ—निर्देशो रावणस्य च। ल२ म प्र ब रा च फ—निर्देशं वाहनस्य च। अ—निर्देश वाहनस्य च॥ ८. ल२—०सम्पन्नौ। ९. ल२—रावणो। १०. आ—चाप्रमेयश्च। म—चाप्रमत्तस्य। ११. ल१ ल२ म प्र ब रा च—०लम्बा। फ—०लम्बा। १२ ल१ रा ब—नादीय॥ १३. ल१ रा—पार्वतीयं। १४. ल२—चावबुध्यते। ल१ रा—चात्र विद्यते। ब—चार्थे बुध्यते। फ—चानुविद्यते। अ—वानुविद्यते॥ १५. ल१ प्र—द्वीपमध्ये। १६. ल१—निरुद्देशो च। १७. अ—सर्वशः॥ १८. ल१—वाजिवानर०॥ १९. ल१ ल२ म प्र ब रा च फ अ—परिघाश्च। २०. आ—शतघ्नश्च।

अ[1]-युतं रक्षसां तत्र पूर्व-द्वारम् उपाऽऽश्रितम् ।
१०] शूल-हस्ता दुरा-धर्षाः सर्व एवाऽग्र-योधिनः ॥[2]३०॥[२४
पद्मं राक्षस-वीराणाम् उत्तरं द्वारम् आ-श्रितम् ।[7] [२७पू
N] शक्त्य्-ऋष्टि-कार्मुक-धराः सर्वे समर-योधिनः ॥३१॥ [N
अर्बुदं रक्षसां तत्र पश्चिमं-द्वारम् आ-श्रितम् ।
११] रथिनश् चाऽश्व-वाराश् च कुल-पुत्राः सु-पूजिताः । [२७उ
खड्ग-शूल-धराः शूराः सर्वे सर्वाऽस्त्र-योधिनः ॥३२॥
१०] निर्युतं रक्षसां तत्र दक्षिणं द्वारम् आ-स्थितम् ।[11][२६
N] पदाति-रथिनश् चैव शूरा विक्रान्त-योधिनः ॥[12]३३॥ [N
शतं शत-सहस्राणां मध्यमं गुल्मम् आ-श्रिताः ।[13]
१२] यातु-धाना दुरा-धर्षा रावणं पर्युपाऽऽसते ॥३४॥ [२८
१३पू] श्रुत्वा हनुमतो वाक्यं यथा-वत् परमाऽर्थ-वत् ।
N] प्रत्य्-उवाच हनू-मन्तं रामः सत्य-पराक्रमः ॥३५॥ [N
यन् मां वेदयसे लङ्कां भीमां[15] भीमस्य रक्षसः ।
अहम् एको हनिष्यामि सत्यम् एतद् ब्रवीमि ते ।
N] ममाऽस्त्रेऽग्नौ प्र-वेक्ष्यन्ति शलभाः पावकं यथा ॥३६॥ [N

इत्यार्षे रामायणे सुन्दर-काण्डे दुर्ग-विधान वर्णनं
नाम सप्ततितमः सर्गः ॥[21]७०॥

---

१. फ रा प्र–नास्ति ॥ २. ल$_1$ल$_2$ म प्र घ रा च फ अ–नास्ति ॥ ३. ल$_2$–पश्चिमं द्वारम् । प्र–दक्षिणं द्वा० । अ घ रा–उत्तरं द्वा० । ४. प्र–अयुतं । ५. ल$_1$ ल$_2$ रा–उत्तरं । ६. ल$_1$ ल$_2$ रा–आश्रितम् । ७ फ–नास्ति । ८. ल$_2$–पादाता० । ९. ल$_2$–शूरा० । १०. फ अ–नास्ति ॥ ११. फ–आस्थितम् । अ–आश्रितम् । १२. ल$_1$ ल$_2$ म घ रा च–पद्मं राक्षस वीराणां उत्तरं गुल्ममाश्रितम् । १३. ल$_2$–दुरामर्षा ॥ १४. ल$_1$ [illegible] रा–यथार्थं पर० । १५. म–०र्थवित् । फ अ–०र्थतः । १६. ल$_1$ ल$_2$ म घ रा–तस्य । फ अ–सुतीक्ष् । १७. ल$_2$ म प्र च रा–वधिष्यामि । ल$_1$–वदिष्यामि । १८. ल$_1$–ममास्त्राणां ॥ १९. ल$_2$–इति सुन्दरकाण्डे । रा–इत्यार्षे सु० । २०. अ–उत्तरोत्तरवाक्यं नाम । २१. प्र–नास्ति ॥

प्र-चिकीर्षे समुद्र-योगं दधे लंकां-वधे मनः ।
N] दिधक्षुः सर्व-भूतानि युगान्त इव पावकः ॥७॥ [N
अग्रे याहि बलस्याऽस्य नील मार्गम् अवेक्षितुम् ।
१८] वृतः शत-सहस्रेण वानराणां तरस्-विनाम् ॥८॥ [१०
फल-मूल-वता नील शीत-कानन-वारिणा ।
१९] पथा मधु-मता चाऽऽशु सेनां सेना-पते नय ॥९॥ [११
दूषयेयुर् दुर्-आत्मानः फल-मूलम् अथोदकम् ।
२०] राक्षसाश् चापि रक्षेथास् तेभ्यस् त्वं नित्यम् उद्यतः ॥१०॥[१२
निम्नेषु गिरि-दुर्गेषु वनेषु च नखाऽऽयुधाः ।
२१] अभि-पत्याऽभि-पश्येयुः सर्वे तेषाम् इदं बलम् ॥११॥ [१३
सागरौघ-निभं भीमम् अग्राऽनीकं महा-बलम् ।
२२] कपि-सिंहाः प्र-कर्षन्तु सर्वे कुक्षिं गिरेर् इव ॥१२॥ [१५
गजश् च गज-संकाशैः शरभश् च रणोत्कटः ।

---

१. फ-प्रविकीर्णस० । म-प्रचिकीर्षुः । २. फ-लंकापलवधे । म-दधे लंका० । ३. ल$_2$-पुनः । ४. आ-दिधिक्षुः । ५. ल$_2$-दिधक्षुरिव ॥ ६. आ-वृतं ॥ ७. फ-वैर । म-वीर । ८. आ फ रा प्र म-पथा । च-पंथा । ९. आ फ-मधुमताचाशु । १०. रा प्र म-सेनापते नयेः । फ ल$_1$ ल$_2$-सेनापतेर् ॥ ११. अ-भोजनं च सुलभ्यं । फ-दूषयेयुर्महात्मानः । १२. अ-रक्षसा यदि ॥ १३. फ रा-सर्वेषु । १४. ल$_1$-परिखासु नखा-युधाः । रा-वनेषु परिखायुधाः । १५. आ-सर्वेषामिह तद्बलम् । च-सर्वेषामिदं तद्बलम् । १६. अतः परमधिकः पाठः—फ-यत्र पार्श्वतलं किंचित्तदि-हैवावतिष्ठतु । एतद्धि कृत्यं घोरायां विक्रमेष्वप्रयुज्यते ॥ १७. अ-०निभं । १८. अ-भीमां चक्रानीकं महाबलः । च प्र घ म ल$_1$ ल$_2$-मथानीकं म० । फ-०कं महाबलाः । १९. आ-प्रकर्षतु । २०. आ फ म ल$_1$-ल$_2$-अ-अपि ॥ २१. अ-०श्च राजसंकाशाः । ल$_2$-। २२. ल$_2$-शरभाश्च रणोत्कटाः ।

श्रुत्वा हनूमतो वाक्यं रामो रिपु-निसू (?पू) दनः ।
१३] सु-ग्रीवं विपुल-ग्रीवम् इदं वचनम् अब्रवीत् ॥१॥ [१
अस्मिन् मुहूर्त्ते सु-ग्रीव प्र-याणम् अभि-रोचये ।
१४] युक्तो(?क्ते)मुहूर्त्तो(?र्त्ते)वि-जयः प्राऽऽप्तो मध्यं दिवा-करः२[३
फाल्गुन्याम(?व्)उत्तरे ह्य् अस्यं मम चैवाऽर्थ-साधने ।
१५ ] अभिप्र-यामि सु-ग्रीव सर्वाऽऽनीर्क-समाहृताः ॥३॥ [६
निमित्तानि च धन्यानि यानि प्रादुर्-भवन्ति मे ।
१६] नि-हत्य रावणं सीताम् आ-हरिष्ये न सं-शयः ॥४॥ [७
उपरिष्टाद् हि नयनं स्पन्दमानम् इवाऽद्य ।
१७] वि-जयं समनुप्राऽऽप्तं शंसतीऽव मनो मम ॥[12]५॥ [८
सीता श्रुत्वाऽभि-यानं च प्राणान् सं-धारयिष्यति[14]।
N] जीवितोऽन्तेऽमृतं दृष्ट्वा हित्वा मृत्युम् इवाऽऽतुरः[16] ॥६॥ [५

---

१. च प्र घ म ल$_1$ ल$_2$ अ–हनुमतो ॥ २. अ–०रोचयः । फ प्र म–०रोचते । च–०रोचय । ३. अ–मुहूर्ते विजयः प्राप्तो युक्तो मध्यं । प्र ल$_2$–युक्तो मुहूर्त्तो विजयो मध्यं प्राप्तो ॥ ४. फ–उत्तराफाल्गुनी ह्यस्य । च प्र–उत्तराफाल्गुनी ह्यद्य । रा–उत्तराफाल्गुणी ह्यत्र । घ म ल$_1$ ल$_2$–उत्तराफाल्गुनी ह्यत्र । ५. फ च–०साधिनी । रा–०साधनी । ६. फ रा प्र ब म ल$_1$ ल$_2$–०प्रयामि । च–०प्रयासे । ७. ल$_2$–सुग्रीवं । ८. ल–मयानीक० । फ च रा प्र थ म ल$_1$–सर्वानीक-समावृतः ॥ ६. फ अ–हि ॥ १०. प्र ल$_2$–धारयिष्यति जीवितम् । फ–स्पन्दमानमिदं मम । ११. फ–महामते । १२. प्र ल$_2$–नास्ति ॥ १३. फ–श्रुत्वा सीता प्रयाणं मे । म अ–०भियानं मे । १४. रा ब म–सीता च श्रुत्वाभिज्ञानं धारयिष्यति जीवितम् । प्र ल$_2$–नास्ति । १५. च प्र म–यथा चैवामृतं । ल$_1$ ल$_2$–तथा चैवामृतं । १६. आ–इवापराः । रा – प्र घ म ल$_1$ ल$_2$–इवामराः ॥

प्र-चिकीर्षे समुद्र-योगं दैवे लंका-वधे मनैः ।
N] दिधर्क्षुः सर्व-भूतानि युगान्त इव पावकः ॥७॥ [N
अग्रे याहि बलस्याऽस्य नील मार्गम् अवेक्षितुम् ।
१८] वृतः शत-सहस्रेण वानराणां तरस्-विनाम् ॥८॥ [१०
फल-मूल-वता नील शीत-कानन-वारिणा ।
१९] पथा मधु-मतो चाऽऽशु सेनां सेना-पते नय ॥९॥ [११
दूषयेयुर् दुर्-आत्मानः फल-मूलम् अथोदकम् ।
२०] राक्षसाश् चापि रक्षेथास् तेभ्यस् त्वं नित्यम् उद्यतः ॥१०॥ [१२
निम्नेषु गिरि-दुर्गेषु वनेषु च नखाऽऽयुधाः ।
२१] अभि-पत्याऽभि-पश्येयुः सर्वे तेषाम् इदं बलम् ॥११॥ [१३
सागरौघ-निभं भीमम् अग्राऽनीकं महा-बलम् ।
२३] कपि-सिंहाः प्र-कर्षन्तु सर्वे कुक्षिं गिरेर् इव ॥१२॥ [१५
गजश् च गज-संकाशैः शरभश् च रणोत्कटः ।

---

१. फ–प्रविकीर्णस० । म–प्रचिकीर्षुः । २. फ–लंकाबलवधे । म–वधे लंका० । ३. ल$_2$–पुनः । ४. आ–दिधिक्षुः । ५. ल$_2$–दिभक्षुरिव ॥ ६. आ–वृतं ॥ ७. फ–चैव । म–वीर । ८. आ फ रा प्र म–पथा । च–पथा । ९. आ फ–मधुमतायाशु । १०. रा प्र म–सेनापते नयेः । फ ला$_1$ ल$_2$–सेनापतेर् ॥ ११. अ–मोजनं च सुसम्पन्नं । फ–दूषयेयुर्महात्मानः । १२. अ–रक्षसा यदि ॥ १३. फ रा–सर्वेषु । १४. ल$_1$–परिखासु नखा-युधाः । रा–वनेषु परिखायुधाः । १५. आ–सर्वेषामिह तद्बलम् । च–सर्वेषामिदं तद्बलम् । १६. अतः परमधिकः पाठः—फ–यत्त पार्श्वस्थं किंचित्तदि-हैवात्रविष्ठतु । एतद्धि कृत्यं घोराणां विक्रमेष्वप्रयुज्यते ॥ १७. अ–०निभां । १८. अ–भीमां तथानीकं महाबलः । च प्र घ स ल$_1$ ल$_2$–भीममथानीकं म० । फ–०कं महाबलाः । १९. आ–प्रकर्षंतु । २०. आ फ घ प्र-प ल$_1$-ल$_2$-अ–अपि ॥ २१. अ–०श्च राजसंकाशः । ल$_2$–गजाश्च गजसंकाशाः । २२. ल$_1$–शरभाश्च रणोत्कटाः ।

२४] गवाऽक्षश् चाऽग्र-तो यातु गवां वृषं इवर्षभैः ॥१३॥ [१६
वीरो वानर-वाहिन्या वानरौघ-वतां (ऽन्तं) तथा ।
२५] बलस्य दक्षिणं पार्श्वम् ऋषभैः परि-रक्षतु ॥१४॥ [१७
गन्ध-हस्ती च दुर्-धर्षस् तरस्-वी गंध-मादनः ।
२६] यातु वानर-वाहिन्या वामं पार्श्वम् अधि-ष्ठितः॥१५॥ [१८
यास्यामि बल-मध्येऽहं बलौघम् अनु-पालयन् ।
२७] अधि-रुह्य हनूमन्तम् ऐरावणम इवाऽरि-हा ॥१६॥ [१९
अंगदेनेषु-मात्रेण लक्ष्मणोऽनन्तरं मम ।
२८] भूत-यानेन भूतेशो द्रविणाऽधि-पतिर् यथा ॥१७॥ [२०
जाम्बवांश् च सु-षेणश् च वेग-दर्शी च वानरः ।
२९] ऋक्ष-राजश् च दुर्-धर्षः कक्षां रक्षन्तु मे स्वयम्॥१८॥ [२१
यदि मे सागरो मार्गं प्र-स्थितस्य न दास्यति ।
N] ममाऽस्त्र-बल-निर्दग्धो भविष्यत्य् अपरो महः ॥१९॥ [N
राघवस्य वचः श्रुत्वा सु-ग्रीवो वाहिनी-पतिः ।
३०] व्या-दिदेश महा-वीर्यान् वानरान् वानरर्षभः ॥२०॥ [२२
ते वानर-गणाः सर्वे सं-मन्त्र्य च युयुत्सवः ।

---

१. ल$_{1}$—गवयश् । ल$_{2}$—गवयाश् । २. ल$_{2}$—यान्तु । ३. अ—पृष्ठ । फ—पृष्ठ । ४. ल$_{2}$—॰भाः ॥ ५. प्र च अ—वामपार्श्वमधिष्ठितः । रा घ म ल$_{1}$ ल$_{2}$—वामं पार्श्वमधिष्ठितः । आ—वानरौघवती तथा । ६. आ—ऋषभः । ७. ल$_{1}$ ल$_{2}$—नास्ति ॥ ८. फ रा प्र व म—॰हस्तीव । ९. प्र—वामपा॰ । १०. ल$_{1}$ ल$_{2}$ अ—नास्ति ॥ ११. अ—बलौघं परिपालयन् ॥ १२. आ—अंगदेन तु मा॰ । अ—अंगदे तेषु मा॰ । ल$_{1}$—॰पुमंत्रेण । १३. अ—लक्ष्मणोमन्तरं ? । १४ ल$_{2}$—भूतेश द्रविणाधिपते यथा ॥ १५. फ—सुषेनश्च । १६. फ—मेघदर्शी च । आ—वेगदर्शीव । १७. व—कक्ष्या रक्षन्तु । प्र म—कक्ष्यां रक्षन्तु ॥ १८. ल$_{1}$—भविष्यति पुरो मम । रा प्र घ म ल$_{1}$ अ—अपरो मम । १९. आ रा घ प्र व म ल$_{1}$ ल$_{2}$ अ—नास्ति ॥

३१] गुहाभ्यः शिखरेभ्यश् च ततः पुप्लुविरे द्रुतम् ॥२१॥ [२४

सागरौघ-निभं घोरं तद् वानर-बलं महत् ।

N] वि-ससर्प महा-वेगं भीम-वेग इवाऽर्णवः ॥२२॥ [४०

तस्य दाशरथी मध्ये बलस्य कपि-कुञ्जरौ ।

N] आ-पुप्लुवाते तूर्णं तौ सद्-अश्वाव् इव वेगितौ ॥२३॥ [४१

कपिभ्याम् उह्यमानौ तौ शुशुभाते नरर्षभौ ।

N] महद्भ्याम् इव सं-हृष्टौ ग्रहाभ्यां चन्द्र-भास्करौ ॥२४॥ [४२

सर्व-वानर-राजेन लक्ष्मणेन च पूजितः ।

३२] जगाम रामो धर्मात्मा स-सैन्यो दक्षिणां दिशम् २५[२५,४३

शतैः शत-सहस्रैश् च कोटीभिश् च सहस्र-शः ।

३३] वानराणां सु-घोराणां श्री-मतां परि-वारितः ॥२६॥

३४पू] तं यान्तम् अनु-याति स्म महती हरि-वाहिनी । [२६

N] सा स्म याति दिवा-रात्रौ प्र-वहन्ती नदी यथा ॥२७॥[N

N] ते विन्ध्यं गिरिम् आ-साद्य मलयं च महा-गिरिम् । [N

---

१. श्र–भृशं । च–०रेऽद्भुतम् ॥ २. फ श्र–भीमं । ३. श्र–प्रस० । ४. श्र–०वे ॥ ५. ल$_{1}$–तस्या । ६. प्र–दाशरथी । ७. श्र–०सत्तमौ । ८. आ–माप्लुवे, महार्णन्तौ । च–माप्लुवाते तु पूर्णं तौ । रा य म–०ते तु विक्रम्य । प्र ल$_{2}$–०ते ततः द्रुतः । ल$_{1}$–पुप्लुवाते तु निक्रम्य । ९. श्र–सत्तमौ ॥ १०. च–आरुह्यमाणौ । रा व–आरुहतौ । प्र ल$_{1}$ ल$_{2}$–आरहन्तौ ॥ ११. प्र ल$_{1}$ ल$_{2}$ श्र–ततो । १२. च–सु० ॥ १३. श्र च प्र ल$_{2}$ रा प म ल$_{1}$–कोटिभिश् । १४. रा व म ल$_{1}$–समन्ततः । १५. फ–नास्ति ॥ १६. आ–ततस्तमनु० । १७. च–याभिर्दिवा० । रा ल$_{1}$–याति दिवारात्रं । व ल$_{2}$–याभिर्दिवारात्रं । १८. आ च रा व–महती हरिवाहिनी । प्र–सागरं ते समागताः । म–प्रीतिमन्तोऽनुजग्मतुः । ल$_{2}$–द्विवेत्यारभ्य ०नीत्यन्तस्त्रुटितः । १९. फ श्र–नास्ति । २०. च–संविध्य । आ–सा वि० । प्र व म ल$_{2}$–स विंध्यं । ल$_{1}$–ते विंध्यगि० ।

३४उ] प्र-हृष्टाश्[1] च प्र-मत्ताश् च सुग्रीवेणाऽभि-पालिताः[2] ॥२८॥

आ-प्लवन्तः प्लवन्तश् च गर्जन्तश्[3] च प्लवं-गमाः।

३५] क्ष्वेडन्तो धावमानाश् च व्रजन्तश् च प्र-दक्षिणम्[4] ॥[5] २९॥ [२७

भक्षयन्तः[6] सु-गन्धीनि मधूनि च फलानि च[7]।

३६] उद्-हरन्तो महा-वृक्षांश् शैल-शृङ्गाणि चैव हि॥३०॥ [२८

अन्योऽन्यं सहसा दृप्ता भुजैर् आ-हृत्य पातिताः।[8]

३७] पतितान् उत्-क्षिपन्त्य् अन्ये पातयन्तस् तथाऽपरान्[9] ॥३१॥ [२९

रावणो नो नि-हन्तव्यः सर्वे च रजनी-चराः।[10]

३८] इति गर्जन्ति हरयो राघवस्य समीप-तः[11] ॥३२॥ [३०

पुरस्तात् पनसो[12] वीरो नलः[13] कुमुद एव च[14]।

३९] पन्थानं शोधयन्ति[15] स्म वानरैर् बहुभिः सह[16] ॥३३॥ [३१

मध्ये तु[17] राजा सु-ग्रीवो रामो लक्ष्मण एव च।

---

१. अ–प्रहृष्टा मुदिता सर्वा। फ–प्रहृष्टा मुदिताः सर्वे। रा व ल$_1$ ल$_2$–प्रहृष्टाश्च प्र०। २. फ–सुग्रीवपरिपालिताः॥ ३. फ अ–नदन्तश्च। ४. रा प्र घ म ल$_1$ ल$_2$–दिवानिशम्। ५. अ–क्ष्वेडन्तो विवदन्तश्च जग्मुस्ते दक्षिणां दिशम्। फ–क्ष्वेडन्तो विरमन्तश्च जग्मुस्ते दक्षिणां दिशम्॥ अतः परमधिकः पाठः–फ अ–शतैः शत-सहस्रैश्च कोटिभिरयुतैरपि। अर्बुदैरर्बुद-शतैर्वानरेन्द्रो महाबलः॥ वानराणां सुघोराणां श्रीमतां परिवारितः। अ फ घ॥ घ प्र म ल$_1$ ल$_2$-हृष्टाः किलकिलायन्तः शिलापादपयोधिनः॥ ६. फ अ–भक्षयन्ति। ७. रा–फलानि च मधूनि च॥ ८. अ–अन्योन्यं सह संहृष्टा निपतन्ति क्षिपन्ति च। फ–अन्योन्यं सह स हृष्टा स्वभुजं निक्षिपन्ति च। ६. फ अ–पतितांश्चोत्क्षिपन्त्यन्ये पातयन्त्यपि चापरे। अत; परमधिकः पाठः–फ च प्र घ म ल$_1$ ल$_2$ अ–मैथिलीमानयिष्यामो हत्वा तं राक्षसं रणे। लङ्कां च विधमिष्यामः सर्वांश्च रजनीचरान्॥ १०. फ अ–नास्ति। ११. अ–तु सन्निधौ। फ–च सन्निधौ॥ १२. आ अ–पनसो। १३. च अ–नीलः। १४. आ–मे वच। १५. ल$_1$–शोपयन्ति। १६. फ–बहुभिर्वृताः। ल$_1$–बहुभिस्सह॥ १७ फ रा प्र ब म ल$_1$ ल$_1$–राजा तु।

४०] हरिभिर् बहुभिर् भीमैर् वृताः शत्रु-निबर्हणैः ॥३४॥ [३२
हरिः शत-बलिर् भीमः कोटीभिर् दशभिर् वृतः ।
४१] दक्षिणं पक्षम् आ-श्रित्य ररक्ष हरि-वाहिनीम् ॥३५॥ [३३
कोटी-शत-परीवारः केसरी पनसो गजः ।
४२] ऋक्षश् चाऽति-बलः पार्श्वम् एकं सैन्यस्य अपालयत् ॥३६ [३४
अंगदो जाम्ववांश् चैव वानरर्क्ष-समन्वितौ ।
४३] सु-ग्रीवं पुर-तः कृत्वा जघनं सं-ररक्षतुः ॥३७॥ [३५
तेषां सेना-पतिर् वीरो नीलो वानर-पुंगवः ।
N] सं-पतन् प्लवतां श्रेष्ठः सर्वं बलं पर्य्-अपालयत् ॥३८॥ [३६
दधि-मुखः प्र-जंघश् च जम्भोऽथ शरभः कपिः ।
N] सर्वे पार्श्वान्य् अधावन्त रक्षणाऽर्थं नृपाऽऽज्ञया ॥३९॥ [३७
अथाऽङ्गद-गतो रामं लक्ष्मणः पर-वीर-हा ।
४९] उवाच परि-पूर्णाऽर्थं वचनं प्रति-भानवान् ॥४०॥ [४४
अवाऽऽप्य सीतां वैदेहीं हत्वा रावणम् आ-हवे ।
५०] समृद्धाऽर्थाः समृद्धाऽर्था यास्यामो नगरीं ततः ॥४१॥ [४५

---

१. फ श्र ब–बलिभिर्हरिभिर् ॥ २. फ रा प्र ब म $ल_1$ $ल_2$ श्र–कोटिभिर् । ३. श्र–पार्श्वमेकमवाहम्य । फ–दक्षिणं पार्श्वमामाद्य ॥ ४. रा–कोटि० । ५. श्र–केशरी । ६. श्र–पनशो । रा–पनसा । ७. रा प्र प $ल_1$ $ल_2$–सैन्यस्य चावृणोत् । ८. फ–जांबवान् कुमुदश्चैव ऋक्षैश्च बहुभिर्वृतः । ९. श्र–नास्ति ॥ १०. म $ल_1$–संपयन् प्लवतां । श्रा–सपश्य पवतां । ११ फ च रा म प $ल_2$–सबलं परिपालयत् । १२. श्र फ–दरीमुखः । च श्रा ब $ल_2$–दधीमुखः । १३. श्र फ–प्रभंजश्च । प्र–प्रजंवश्च । १४. श्र–जंभोयशरदः । च रा प $ल_1$–जंघोय स० । प्र–जंवोय स० । १५. फ श्र–सर्वतस्तं ययुर्वीरास्त्राऽयन्तः प्लवंगमाः । म $ल_1$–नास्ति । १६. फ रा च ब म प्र $ल_1$ $ल_2$–३८-श ३९-श श्लोकौ व्यत्यासेन पठितौ । १७. श्रा–०गजो । १८. श्रा–०भावयन् ॥ १९. फ रा प्र प $ल_1$ $ल_2$–समृद्धार्थो समृद्धार्थाः ॥

महान्तीऽह निमित्तानि दिवि भूमौ च राघव ।
५१] शुभानि तव दृश्यन्ते प्रसन्नान्य् अर्थ-सिद्धये॥४२॥ [४६
अनु-वाति शिवो वायुः सेनाया वि-जयाऽऽवहः ।
५२] पूर्ण-वल्गु-स्वरा ह्रीऽमे प्र-वदन्ति मृग-द्विजाः ॥४३॥ [४७
प्रसन्नाश् च दिशः सर्वाः प्रसन्नश् च दिवा-करः ।
५३] उशनाशुं च प्रसन्नाऽर्चिर् वि-मलो भार्गवः स्थितः ॥४४॥[४८
तेजसा च प्र-दीप्यन्ते प्रवि-शुद्धा महर्षयः ।
५४] अर्चिष्मन्तश् च सं-यान्ति ध्रुवं सर्वे प्र-दक्षिणम् ॥४५॥[४९
त्रि-शंकुर् वि-मलो भाति राजर्षिः स-पुरोहितः ।
५५] पिता-महः पुरोऽस्माकं भवाये तव(ऽवा)धि-ष्ठितः ॥४६॥ [५०
वि-मले ते वि-रोचेते वि-शाखे निरुपद्रवे ।
५६] नक्षत्र-वरम् अस्माकम् इक्ष्वाकूणां महा-रथे ॥४७॥[५१
नैर्-ऋतं निर्-ऋतानां च नक्षत्रम् अप-र्ज्यते ।
५७] मूलं मूल-वता स्पृष्टं दीप्यते धूम-केतुना ॥४८॥ [५२

---

१. आ–पूर्वं फल्गुस्वरा । फ–पूर्वं वल्गु॰ । च–पूर्वफल्गुन्युत्तराहौं । रा–पूर्वफल्गुन्युत्तरा मे । व–पूर्वफाल्गुन्युत्तराहौं मे । प्र–पूर्वफाल्गुन्युत्तरा च । म–पूर्वफाल्गुन्युत्तराहौं । ल$_1$–पूर्वफाल्गुन्युत्तराभ्यां । ल$_2$–पूर्वफाल्गुन्युत्तराश्च ॥ २. आ–उशना च ॥ ३. च–प्रतिशुद्धा । प्र व म ल$_1$ ल$_2$–अतिशुद्धा । ४. अ–पश्यन्ति ॥ ५. आ–तव भावाय धिष्ठितः । अ–तव भावाय धिष्ठितः ॥ ६. च रा प्र व म अ–च । ल$_1$–न । ७ ल$_1$–विरोचन्ते विशाखे । ८. आ–नक्षत्राणां वरोऽस्माकम् । अ–निक्षत्रवरम् । ९. आ अ–महारथः । १०. प्र व ल$_1$ ल$_2$–नास्ति ॥ ११. आ च प्र–नैऋते नि॰ । अ–नैर्ऋतानां च सर्वेषां । रा व म–नैऋतं निऋतानां च । ल$_1$–नैऋतं निऋतानां च । ल$_2$–नैर्ऋते नैर्ऋतानां तु । १२. अ–उपयुज्यते । फ–अपि राजते । च प्र–अपराज्यते । रा–अपभुज्यते । १३. आ–मूले । १४. ल$_2$–मघवता । १५. फ–स्पृष्टं । च–स्पृष्टं ॥

सर्वथैषां वि-नाशोऽयं राक्षसानाम् उप-स्थितः ।

५८] कालेः काल-परीतानां नक्षत्रे(ऽत्र-) ग्रह-पीडिते(ऽतः)४९ [५३

प्रसन्नाः सु-रसाश् चाऽपो वनानि फल-वन्ति च ।

५९] प्र-वात्य् अभ्य्-अधिको गन्धैर् वर्धन्ते पुष्पिता द्रुमाः ५० [५४

व्यू-ऊढानां कपि-सैन्यानां प्र-काशो विप्र-काशते ।

६०] देवानाम् इव सैन्यानां सं-ग्रामे तारका-मये ॥५१॥ [५५

एतद् आश्चर्यम् ईक्ष्यं त्वं प्रीतो भवितुम् अर्हसि ।

६१] इति भ्रातरम् आ-श्वास्य प्रणयाल् लक्ष्मणोऽन्व्-अयात् । [५६

N] निमित्तानि च संप्रेक्ष्य रामः प्र-मुदितोऽभवत् ॥५२॥ [N

इत्यार्षे रामायणे सुन्दर-काण्डे सेना-प्रकर्षो

नामैकसप्ततितमः सर्गः ॥७१॥

——:०:——

१. अ–सर्वथैव विनाशाय । फ–०षां विनाशाय । २. च–त्राच: । म–कालका० । ल$_1$–घोरका० । आ फ अ–त्रत: ३. अ–०त्रे ग्रहपीडितौ । फ–०ग्रग्रह-पीडितः । ४. फ–विमळाए । ल$_1$–सरसाश् । ५. आ–प्रवातोऽभ्यधिको गंधे । अ–प्रवाति विविधो गंधो । च रा प्र व म ल$_1$–०धिको गंधो । ल$_2$–प्रवात्यभ्यधिकं गंधो ॥ ६. आ–व्यूहानी । च–व्यूहानां । ७. आ च ल$_2$–०सेनानां । ८. ल$_2$–प्रकाशैर्विप्रकाशते: । ९. ल$_2$–दैवानाम् ॥ १०. अ–एतदर्थं समीक्ष्य । फ–एतदार्थं समीक्ष्य ॥ ११. आ–आश्वास्य प्रणय्य । अ–आश्वास्य परया । १२. म–लक्षणानि । ल$_1$–लक्ष्मणानि ॥ १३. आ–आर्षे रामायणे । ल$_2$–इति सुं० । १४. अ–निमित्तदर्शनं नाम । रा प्र म ल$_1$ ल$_2$–सेनाप्रकर्षणं नाम । व–सेनाप्रकर्षो नाम ॥

अथाऽऽदस्य महीं कृत्स्नां जगाम महती चमूः ।

६२] ऋक्ष-वानर-संपूर्णा नख-दंष्ट्रा-प्रहारिणी[3] ॥१॥ [६७

कराऽग्रैश् चरणाऽग्रैश् च वानरैर् उद्धतं रजः ।

६३] भीमम् अन्तर्-दधे लोकं नि-वार्य सवितुः प्रभाम् ॥२॥ [६८

सा स्म याति दिवा-रात्रौ महती हरि-वाहिनी ।

६५] प्र-हृष्टा मुदिता सर्वा सु-ग्रीवेणाऽभि-पालिता ॥३॥ [७०

जवेन त्वरिता यान्ति वानरा बल-दर्पिताः ।

६६] समा-निनीषवः सीतां मुहूर्तं नाऽवसन् क्वचित् ॥४॥ [७१

एवं ते हरि-शार्दूला गच्छन्तो बल-दर्पिताः ।

४५] पश्यन्ति स्म गिरि-श्रेष्ठं विन्ध्यं द्रुम-लताऽऽकुलम् ॥५॥ [N

७४स.] ततः पादप-संबाधं नाना-द्विज-लताऽऽकुलम् ।[17]

१] विन्ध्यं पर्वतम् आ-साद्य वानरास् ते समाऽरुहन् ॥६॥[20] [७२

---

१. अ—अपावृत्य । २. प ब रा म ल$_1$,ल$_2$—सर्वा । ३. आ—०संपूर्णा । ४. आ—०णाम् ॥ ५. प्र—निर्वार्य ॥ ६. म—संप्रयाता । प्र—सा प्रयाति । रा ब—सा प्रयाता । ल$_1$ल$_2$—सा स्म याता । ७. रा प्र ब म—०रात्रं । ८. फ—प्रहृष्टमु० । ९. आ—सर्वे । प्र—चैव । च—सर्वाः । फ—रम्या । १०. आ—०ताः । प्र—०तं । फ—०ता ॥ ११. च—त्वरितं । १२. ल$_1$—समानिनीषवः । फ अ—आनयिष्यामहे । १३. च प्र रा ब म फ अ—नावसन् ॥ १४. आ ल$_2$—अपश्यन्तः । फ—पश्यन्ति हि । १५. ल$_1$—पश्यन्ति स । ल$_2$—तोगिरिविंध्यं नानाद्रु० । [illegible]$_1$—०श्रेष्ठं विंध्यद्रु० । प्र—गिरिं विंध्यं नानाद्रु० । अ—०श्रेष्ठं विद्युद्द्रुमलताकुलाम् ॥ १६ रा ल$_1$—०समाकुलम् । प्र स—०गणाकुलम् । १७. च—नास्ति । १८. ल$_1$—विंध्यप० । फ—दिंध्यप० । १९. ल$_1$—वानरस्तं समारुहं । फ—समारूढा प्लवंगमाः । २०. अ—नास्ति ॥

काननानि वि-चित्राणि नदीः प्र-स्रवणानि च ।

२] पश्यन्न् अथ ययौ रामो विन्ध्यस्य मलयस्य च ॥७॥ [७३

चम्पकांस् तिलकांश् चूतान् अशोकान् सिन्धु-वारकान् ।

३] करवीरांस् तिन्दुकांश् च भञ्जन्तश् च प्लवं-गमाः ॥८॥ [७४

फलान्य् अमृत-कल्पानि मूलानि सुरभीणि च ।

६पू] भक्षयन्तो महा-वेगाः प्र-ययुस् तत्र वानराः ॥९॥[11] [९०

७उ] द्रोण-मात्र-प्रमाणानि लम्बमानानि वानराः ।[12]

ययुः पिबन्तो मिष्टानि मधूनि मधु-पिंगलाः ॥१०॥ [९१

८] पादपान् अव-भञ्जन्तो वि-कर्षन्तस् तथा लताः ।

वि-धमन्तो गिरि-वरान् प्र-ययुर् वानरर्षभाः ॥११॥ [९२

९] वृक्षाद् एके तु नर्दन्तः कपयो मद-दर्पिताः ।[18]

---

१. आ-नदः । रा च ल$_{1}$ अ-नदी । २. आ च रा प्र ब म ल$_{1}$ल$_{2}$ अ-अपि । ३. आ-गा ॥ ४. रा प्र ब म ल$_{2}$-चम्पकांस् । अ-चम्पकास् । ५. फ-तिलकाशोकान् पिप्पलान् । अ-तिलकाशोकान् पिप्पलीन् । आ-शोकान् । ६. आ च फ-सिन्दु० । ७. ल$_{2}$-तिन्दुकान्करवीरांश्च । म-तिन्दुकान्करवीरांश्च । फ अ-करवीरांस्तमालांश्च । ८. प्र रा ब ल$_{1}$-भजन्ति स्म । म-रुहन्ति स्म । आ-भजन्ति स्म ॥ ९. ल$_{1}$-फलानि मूल० । १०. फ अ-नास्ति । अतः परमधिकः पाठः—फ रा ब म ल$_{1}$ ल$_{2}$ अ-पुष्पाण्यतिसुगन्धीनि मूलानि च फलानि च । बभंजुर्वानरास्तत्र पादपानां बलोत्कटाः ॥ ११. अ-वरमा० । १२. प्र-नास्ति । १३. अ-जग्मुः पिबन्तः संहृष्टा ॥ १४. रा प्र ब म ल$_{1}$ल$_{2}$-०वर । १५. अ-ययुस्ते प्लवगर्षभाः ॥ १६. ब ल$_{2}$-वृक्षानेके न मर्दन्तः । रा ल$_{1}$-वृक्षानेके तु मर्दन्तः । म-वृक्षानेके तु मर्दन्तः । प्र-वृक्षानेके मर्दयन्त. । च-वृक्षानेके तु नर्दन्तः । १७. रा प्र ब म ल$_{1}$ ल$_{2}$-मधु० । १८. फ-वृक्षांश्चैके तु कपयो नन्तो बलदर्पिताः । अ-वृक्षाश्चैके उत्पतन्ति नदीश्यो बालदर्पिताः । अतः परमधिकः पाठः—फ च रा ब म ल$_{1}$ ल$_{2}$ अ-वृक्षेभ्यो निपतंति स्म प्रलंबन्त्यपि चापरे ।

अन्यस्मिन् नि-पतन्ति स्म प्लवमानाः प्लवं-गमाः ॥[3]१२॥[९३

१०] बभूव वसुधा तैस् तु सम्-पूर्णा मधु-पिंगलैः[4] ।

११पू] यथा कलम-केदारैः पक्वाऽग्रैश् च वसुं-धरा ॥[7]१३॥ [९४

१३उ] स विन्ध्यं गिरिम् आ-साद्य मलयं च महा-गिरिम् । [९७पू

N] वनानि चाऽप्य् अति-क्रम्य नदीश् च विमलोदकाः॥१४॥ [N

१४पू] आ-ससादाऽऽनुपूर्व्येण समुद्रं भीम-निस्वनम् । [९७उ

N] अनिलोद्धूतम् आकाशं प्र-वल्गितम् इवोर्मिभिः ॥१५॥ [N

११उ] महेन्द्रम् अथ सम्प्राऽऽप्तो रामो राजीव-लोचनः ।

अध्याऽरोहन् महा-बाहुः शिखराऽग्रं सु-पुष्पितम् ॥१६॥[९५

१२] स तच् छिखरम् आ-साद्य रामो दशरथाऽऽत्म-जः ।

१३पू] कूर्म-मीन-झषाऽऽकीर्णम् अपश्यत् सलिलाऽऽकरम्॥१७॥[९६

१४उ] अव-रुह्य ततस् चाऽऽशु वेला-वनम् उपाऽगमत् ।

रामो रमयतां श्रेष्ठः सु-ग्रीवश् च स-लक्ष्मणः॥१८॥[23][९८

१५] अथ धौतोपल-शिलां तोयौघैः सहसाऽऽद्रुताम् ।

---

१. प्र म ल$_2$—अन्ये च । २. आ—प्रवेपमानाः । ३. फ रा ब ल$_1$ अ—नास्ति ॥ ४. अ—॰ले । ५. ब—कालम॰ । ६. घ म ल$_2$—वसुन्धराः । ७. अ—यथा शारीरिकेदारैरपि पक्वैः समावृताः ॥ ८. अ—चानितिक्रम्य ॥ ९. अ—॰पूर्वेण । १०. अ—॰दर्शनम् । ११. प्र रा घ मं अ—॰वृतम् । १२. प्र घ रा म—आकाशे । १३. आ—अवस्थितम् । अ—प्रचलतम् । रा प्र ब म—व्यवस्थितम् ॥ १४. अ—महेन्द्र प्रथमं प्राप्तो । फ घ रा प्र ब म ल$_1$ ल$_2$—अथ सम्प्राप्य । १५. अ—शिशिराग्र ॥ १६. फ अ—तं शिखरमारुह्य । १७. अ—रामः सुग्रीवमब्रवीत् । १८. अ—कूर्ममीनसमाकीर्णं सपश्यत् सलिलाशयं ॥ १९. रा ब म ल$_1$—॰शीर्षे । २०. आ घ म रा प्र ल$_1$ ल$_2$—जगामाशु । २१. रा प्र घ म ल$_1$ ल$_2$—मनुत्तमम् । २२. फ—सुग्रीवः सहलक्ष्मणः । २३. अ—नास्ति ॥ २४. ल$_1$—॰शिल । २५. फ—सहसोद्गताम् । ल$_1$—महसा वृतम् ।

वेलाम् आ-साद्य वि-पुलां रामो वचनम् अब्रवीत्॥१९॥[1] [९९
१६] एते वयम् अनुप्राऽऽप्ताः सु-ग्रीव वरुणाऽऽलयम् ।
सं-तारश् चिन्त्यताम् अत्र पूर्वं यः प्रसम्-अर्थितः॥२०॥[2] [१००
१७] अतः परम् अ-गाधोऽयं सागरः सरितां पतिः । [१०१पू
सम्प्राऽऽप्तो मन्त्र-कालो नः सागरस्याऽथ लंघने॥२१[१०४उ
N] इहेदानीं वि-चिन्त्यो हि नयः पूर्वं समा-हितैः । [N
न चाऽयम् अन्-उपायेन शक्यस् तर्तुं कथञ्चन ॥२२॥[१०१उ
१८] तद् इहैव समा-विश्य मन्त्रः सं-चिन्त्यतां सखे ।
१९पू] यथेदं वानर-बलं पा(१प)रं पारम् अवाऽऽप्नुयात्२३॥[१०२
स्वां स्वां सेनाम् अति-क्रम्य मां च केचित् कथञ्चन ।[13]
N] गच्छन्तु वानराः स्वैरं ज्ञेयं छन्नं भयं हि नः॥२४॥[१०५
१९उ] इत्य्-एवं स महा-बाहुः सीता-हरण-कर्शितः ।
२०पू] रामः सागरम् आ-साद्य वासम् आ-ज्ञापयत् तदा॥२५॥[१०३
२२उ] रामस्य वचनं श्रुत्वा सु-ग्रीवः सह-लक्ष्मणः ।[18]

१. फ-रामः सुग्रीवम् । २. अ-नास्ति ॥ ३. फ-लवणोदधिम् । ४. आ-संभारस् । ५. आ-देवैर्यो मथितः पुरा । ल$_1$-पूर्वं यः प्रसमुत्थितः ॥ ६. आ-परमयाग्रायो । अ-परमपारोयं । ७. प्र व रा म ल$_2$-सागरस्य च लंघने । आ-सागरस्याथ बंधने । फ च-सागरस्यावलंघने । अ-०य लंघनो ॥ ८. प्र-एहि धानी ॥ ९. फ-समादिश्य । १०. अ-संमन्त्र्यतां ॥ ११. अ-सेनां समुत्सृज्य । १२. अ-मां । १३ आ-'तदिहैव' इत्यारभ्य 'कथञ्चन' इत्यन्तः पाठो नास्ति । १४. प्र ल$_2$-सर्वे वासार्थं सुसमाहिताः । रा य म ल$_1$-स्वैरं वासार्थं सुसमाहिताः । च-स्वैरं ज्ञेयं छन्नं भयं हरिः । अ-शूरा ज्ञेय छिन्नं भयं हि नः ॥ १५. आ-०कर्शितः । १६. च रा प्र व म ल$_1$ ल$_2$-आज्ञापयच्च सः ॥ १७. रा व म ल$_1$ ल$_2$-ससुग्रीवाः सलक्ष्मणाः । १८. अतः परमधिकः पाठः—फ प्र च रा व म ल$_1$ ल$_2$ अ-भीमगंभीरनिर्घोषाः† प्राज्यसत्त्वा महाबलाः‡ ।

†अ-भीमं गंभीर०। च रा व म-भीमनिर्घोषगंभीराः।‡अ-प्राज्ञसत्वां महाभयां।

स-सैन्यकोऽवसत् तीरे दक्षिणस्य महोदधेः ॥२६॥ [१०६
२३] वि-रराज समीप-स्थं सागरस्य बलं च तत् ।
साधु-वीर-जलः श्रीमान् द्वितीय इव सागरः ॥२७॥ [१०७
२४] वेला-वनम् उपाऽऽगम्य ततस् ते हरि-पुंगवाः ।
२५पू] विनि-विष्टाः परं पारं कांक्षमाणा महोदधेः ॥२८॥ [१०८

इत्यार्षे रामायणे सुन्दर-काण्डे समुद्र-तीर-निवासो
नाम द्वासप्ततितमः सर्गः ॥७२॥

---

१. च रा प्र ब म ल₂—सा सेना न्यवसत् । फ—सेना सा न्यवसत् । अ—सेनां स न्यवसत् । २. आ—सागरस्य द्रुमायुधः । अ—दक्षिणस्यां महोदधेः ॥ ३. रा घ म ल₁—बलं महत् । फ अ—सु तद्बलम् । ४. घ प्र म ल₂ रा प ल₁—मधुपांडुजलः श्रीमान् । आ—॰वीर जलं श्रीमत् । अ—मधुपांडु ॰ ॰ ॰ । ५. रा घ ल₁—मारुदः ॥ ६ अ—॰वनम् ॥ ७. ल₂—इति सु॰। ८. अ—समुद्रतीराभिगमनं । ९. फ—सर्गसमाप्तिर्न दृश्यते ॥

२६उ] सा महाऽर्णवम् आ-साद्य तस्थौ वै[1] हरि-वाहिनी ।
वात-वेग-समुद्भूतं प्रेक्ष्य(?क्ष)माणा[2] महोदधिम् ॥१॥ [१११

. २७] दूर-पारम् अ-संवार्यं यादो-गण-निषेवितम् ।
आ-साद्य वरुणाऽऽवासं नि[3]-पेदुर् हरि-यूथ-पाः॥[4]२॥ [११२

२८] चलन्-मीन[5]-ग्रहं घोरं महा-नागाऽसुर-क्षयम्[6] ।
चन्द्रोदय-समुद्-भूतं[7] वियद्-बिम्बम् इवाऽपरम् ॥३॥ [N

N] चन्द्र-पाद-महा-जालं[8] नक्र-मीन-विलालितम्[9] । [N
भीम-भोगैः[10] समा-कीर्णं[11] भुजंगैर् मणि-भूषणैः ॥४॥

३०] अवगाढ-महाशैलं[12] नदी-नद-शताऽऽकुलम्[13] ।
दुर्गं दुर्गम-मार्गं[14] तम् अ-गाधं[15] वरुणाऽऽलयम् ॥५॥ [११५

३१] मकरैर् नाग-भोगैश् च पिनद्धैर्[16] इव तांडितैः[17] ।
उद्-धूय[18] नि-पतद्भिश् च प्र-वृद्धं जल-राशिभिः[19] ॥६॥ [११६

---

१. रा प्र व म ल१ अ-वानरवा० । फ-घ हरि० । २. म-प्रेपमाणा ॥
३. रा घ ल२-निपेदुर्वानरर्षभाः । म-निषेदुर्वानरर्षभाः । च-०वासम् दृपे-
दुर्ह० । ४. फ-नास्ति ॥ ५. घ रा प्र घ म-चचन्मीन० । अ-
चलन्मीन० । ६. ल१-०नागस्वरक्षयम् । अ-०नागसुर० । ७. फ-०समुद्भूतं ॥
८. अ-चन्द्रपालमहापालं । ९. च प्र घ म ल१ ल२ अ-०विलोलितम् । फ-
०विलोलितम् । रा-०निलाडितम् । १०. अ-०भोगैः । ११. म-भोगिभिर्भि० । प्र-
भुजंगमणिभूषितैः । रा-भोगिभिर्मणिभूषितैः । च-०भूषितैः । अ-०भूषितम् ॥
१२. अ-०शैलैर् । १३. रा प्र व म ल१-०शताकुलम् । १४. ल१-
दुर्गममत्यन्तम् । रा-दुर्गममाचारम् । च-दुर्गममगम्यम् । अ-दुर्गममप्रमेयम् ।
१५. च-मगाधैर् । ल१-अपारं । १६. घ रा प्र घ म ल१-विनद्धैर् ।
फ-विहंगैर् । अ-विनर्दर् । १७. अ-नाडितं । १८. अ-उत्पतद्भिः निपतद्भिः ।
१९. रा प्र च म ल१-प्रवृद्धैर्जलधारिभिः । फ-प्रवृत्यत्, ज० । अ-प्रवृद्धं ज० ।
च-प्रवृद्धजल० ॥

३२] अग्नेश् चक्रम् इवाऽऽविद्धं भासुरं सु-मनो-हरम् ।
सुराणां नि-लयं भीमं पातालं वि-षमं तदा ॥७॥ [११७

३३] अम्बरं सागर-प्रख्यं सागरश् चाऽम्बरोपमः ।
सागरश् चाऽम्बरं चोभौ निर्वि-शेषं बभूवतुः ॥८॥ [११८

३४] सं-पृक्तं नभसा ह्य् अम्भः सं-पृक्तं च नभोऽम्भसा ।
तुल्य-रूपे स्म दृश्येते नाना-रूप-समाकुले ॥९॥ [११९

३५] समुत्पतित-तोयस्यं मेघ-जालाऽऽकुलस्य च ।
विशेषो नोभयोर् आसीत् सागरस्याऽम्बरस्य च॥१०॥[१२०

३६] अन्योऽन्यैर् आ-हतास् तत्र स-स्वनुर् भीम-विक्रमाः ।
अम्बु-वेगाः समुद्रस्य महा-मेघ इवाऽऽहताः॥११॥[17] [१२१

३७] रत्नौघ-जल-संमिश्रं वि-भक्तम् इव वायुना ।
उत्-पतन्तम् इवाऽऽकाशे रत्नौघ-शत-संकुलम् ॥१२॥ [१२२

३८] ददृशुस् ते महा-नादं वाताऽऽहतं-समाकुलम् ।[21] [१२३उ

---

१. आ–अग्नेः पूर्वम्। प्र–०श्चक्रम् इवावर्तं। अ–अग्नेः चक्रमिवानद्धं। २. अ ल२–भास्करं। ३. आ–पाराततः। अ–पातले। ४. रा प्र ब म ल१ ल२–यथा॥ ५. आ–सागरं चाम्बरोपमम्। ल१ ल२–सागरं चा०। ६. फ च अ–सागरं। ७. प्र ब रा फ च ल२–चोभे। ८. रा च फ म ल१ ल२–निर्विशेषे। ९. ल१–नभसांभाश्च। रा ब–नभसांभश्च। अ–नभसा ह्यश्च॥ १०. अ–समुद्रजलौघस्य। ११. ल१ अ–न तयोर्॥ १२. ल१–अन्योन्यैः साहसास्। प्र–अन्योन्येनाहतास्। रा ब–अन्योन्येनाहतास्। फ–अन्योन्यैराहतास्। १३. ब ल१–संवरुर्। रा म–सस्वरुर्। प्र–संभरुर्। १४. ल१–०विक्रमः। फ–०निस्वनाः। १५. प्र–०वेगः। १६. प्र–इवाहतः। १७. अ–नास्ति। १८. च–उत्पतन्तमिवाकाशे। आ–उत्पतन्त इवाकाशे। १९ अ–रत्नौघशत०॥ २०. म ब रा ल२–वाताहतिस०। २१ फ–[illegible]

३९उ] भ्रान्तोर्मि-सलिलाऽऽवर्त्तं नीलं-मीन-महोरगम्॥१३ [१२४उ

इत्यार्षे रामायणे सुन्दर-काण्डे समुद्र-दर्शनो
नाम त्रिसप्ततितमः सर्गः ॥७३॥

---

१. प्र—नीलमेघ०॥ २. आ—मार्षेय । ल₂—इति [illegible]
—०दर्शन । ३. श्र—समुद्रवर्णनं । ४. रा—इत्यार्षे समुद्रवर्णनं नाम सर्गः ॥

सा तु नीलेन विधि-वद् रक्षिता सुसमा-हिता ।
१] सागरस्योत्तरे तीरे[1] रेजे[2] सेना नि[3]-वेशिता ॥१॥ [१
मैन्दश् च द्वि-विदश्[4] चैव तत्र वानर-पुंगवौ[5] ।
२] ररक्षतुस् तौ महतीं सेनां तां सर्वतो-दिशम् ॥२॥ [२
नि-विष्टायां तु[6] सेनायां तीरे नद-नदी-पतेः ।
३] पार्श्व-स्थं लक्ष्मणं दृष्ट्वा रामो वचनम् अब्रवीत् ॥३॥ [३
शोकस् तु खलु कालेन गच्छता किल[8] शाम्यति ।
४] मम चाऽपश्यतः कान्ताम् अहन्य्-अहनि वर्द्धते ॥४॥ [४
न मे दुःखं प्रिया दूरे न मे दुःखं हृतेति[10] सा ।
५] एतद्[11] एवाऽनु-शोचामि वयस् तत्राऽति-वर्तते[12] ॥५॥ [५
याहि[13] वात[14] यतः कान्ता तां स्पृष्ट्वा माम् अपि स्पृश[15] । [६पू
८] वह[16] एतत् कामयानस्य शक्यम्[17] एव न[18] जीवितुम् ॥६॥ [१०५
तेन मे[19] दहति गात्राणि विषं पीतम् इवाऽऽतपे ।
९] महा-सत्त्वेति येन[20] मां सा ह्रिय-माणा वचोऽब्रवीत् ॥७॥ [७

---

१. आ रा-भागे । २. अ-येन । ३. रा-विशेषिता ॥ ४. रा व द्विविधश् । ल$_2$-द्विवधश् । ५. अ रा ल$_2$-पुंगवे ॥ ६. फ-च । ७. अ-॰पते ॥ ८. रा थ प्र ल$_2$-किल । ९. रा व-खलु ॥ १०. ल$_2$-प्रयेति । ११. अ-एतद्देवा॰ । घ-एतद्वा॰ । १२. आ अ-तस्याति॰ । घ-तस्यापि च॰ ॥ १३. फ-वह मां । घ रा ल$_2$-वाहि । १४. रा-याति । ल$_2$-वाह । १५. अ-स्मरन् । १६. फ-वक्षे तव । १७. आ-शक्यते तेन । घ रा प्र व ल$_2$-शक्यमेतेन । १८. आ-दवो । १९. ल$_2$-मां यत् । २०. अ-ह्रियन्ती वाक्यमब्रवीत् ॥

तद्-वियोग-समुत्थेन तच्-चिन्ता-ज्वलनेन च ।
६] रात्रौ दिवा शरीरं मे दह्यते मदनाऽग्निना ॥८॥ [८
अव-गाह्यार्णवं स्वप्स्ये सौमित्रेऽवं-हितो भयं ।
७] कथञ्चित् प्र-ज्वलन् कामो न मां सुप्तं जले दहेत् ॥९॥ [९
वह्व् एतत् कामयानस्य नैतद् अल्पं वि-जानतः ।
१०] यद् अहं सा च वामोरूर् एकां धरणिम् आ-श्रितौ ॥१०॥ [१०
केदारस्येव केदारः सोदकस्येव निर्-जलः ।
११] उप-स्नेहेन जीवामि जीवन्तीं यच् छृणोमि ताम् ॥११॥ [११
कदा नु खलु वैदेहीं[१६] शत-पत्र-निभाऽऽननाम् ।
१५] वि-जित्य शत्रून् द्रक्ष्यामि सीतां स्फीताम् इव श्रियम् ॥१२॥ [१२
कदा शोकम् इमं घोरं मैथिली-विप्रयोग-जम् ।
१६] सहसा वि-मोक्ष्यामि वासः शुक्लेतरं यथा ॥१३॥[१९] [२१
कदा नु चारु-दन्तोष्ठं तस्याः पद्म-निभं मुखम् ।[२०]
१२] ईषद् उन्न-नौम्य पास्यामि रसायनम् इवोत्तमम् ॥१४॥ [१३
तौ तस्याः सं-हतौ पीनौ स्तनौ ताल-फलोपमौ ।

---

१. फ अ—०विपुलाकिंचया । थ प्र रा ल$_{2}$—०ज्वलितेन च । २. प्र घ रा ल$_{2}$—दिवारात्रं । ३. आ—वहुधाग्निना ॥ ४. ल$_{2}$—अवगाह्योवरं । ५. अ—सौमित्रे हि तया विना । ६. आ च रा—प्रज्वकेद् । अ—प्रह्वकेद् । फ—प्रज्वलन् । ७. आ फ अ—स । च—तं । ८. आ—यदा हरेद् ॥ ९. फ—०ता । १०. आ—उद् । ११. फ—वस्थिन् । १२. अ—केदारस्य च । फ—केदारस्य च केदारं । १३. फ—सोदकस्य निरुदकम् । अ—०व निर्जलं । रा—०व निर्जले । १४. रा प्र ल$_{2}$—तप० । १५. रा ल$_{2}$ अ—जीवंती तां शृणोमि यत् । प्र—जीवंती तां शृणोमि तत् ॥ १६. अ—सुश्रोणीं… चन्द्रनिभा०।फ—सुश्रोणीं पूर्णचन्द्रनि०।१७. फ च रा ल$_{2}$ अ—शत्रुं॥१८. रा—०तरो। १९. फ अ—अयं श्लोको व्यत्यासेन २०-श्लोकात्परं पठितचरः द्र० । २०. अ—कदा त्वहं सुदन्तोष्ठं मुखं पद्मनिभेक्षणम् । २१. अ—उद्यामयाम्यामि। २२. च—०यणम् । २३. रा—०त्तरम्॥ २४. आ—चास्याः ।

N] कदा नु खलु सोत-कैम्पौ हसन्त्या मे भविष्यतः ॥१५॥[१४
१३पू] सा नूनम् अ-सिताऽपांऽगी राक्षसी-मध्यम् आ-स्थिता[2][१५पू
१४] वि-धूय जल-दांस् तूर्णं शशि-लेखेव निर्-मला॥[3]१६॥ [१७उ
स्वभावें-तनुर् अत्यूँ-अर्थं शोकेनाऽनँ-अशनेन तुं ।
१७] भूयस् तनु-तरा जाता मद्-भाँग्यस्य वि-पर्ययात् ॥१७॥[१८
सा प्रकृत्यैव तन्व्-अंगी मद्-वि-योगेने कर्षिता ।
N] अन-अभ्यसन-शीलस्य विद्येव तनुतां गता ॥१८॥ [N
कदा नुं राक्षसेन्द्रस्य नि-र्धायोरसि सायकांन् ।
१८] सीतां प्रत्या-हरिष्यैामि वि-शोकें॰ शोक-नाशिनीम्॥१९॥[१९
कदा नुं खलु मां सीतां ममं सर्वाऽग-शोभना ।
N]सोत-कंठं कण्ठम् आ-लम्ब्य मोर्क्ष्यत् आनन्द-जं जलम् [२०
एवं वि-लपमांनस्य राघवस्यें महाऽऽत्मेनः ।

---

१. प्र रा च ल२-सोत्कण्ठौ ॥ २. अ-कदा विधूय रक्षौघां सा वधूरुत्प-तिष्यति । फ-कदा विधूय रक्षांसि सा वधूरुत्पतिष्यति । अतः परमधिकः पाठः—च श प्र य ल२-मन्नाथा नाथहीनेव त्रातारं नाधिगच्छति । कदा विधूय रक्षौघान् सा वधूरापतिष्यति । ३. अ-विधूय जलदं नीलं शशि-लेखा यथाम्बरे । फ-विधूय च जलं नीलं शशिलेखेव जानकी ॥ ४. फ अ-स्वभावेन तनुर्नून । रा-सुभाव॰ । प्र-स्वभावतो विरत्यर्थं । ५. आ-शकेनानयनेन । ६. फ च रा प्र ल२ अ-च ॥ ७, फ रा प्र अ-मम भाग्यवि॰ ॥ ८ फ-प्रासकृच्छ्रा च । अ-प्रकृत्येव । ९. फ-वियोगाच्च ॥ १०. आ-तु । ११. अ-विधा॰ । १२. रा प्र ल२-सायकम् । १३. अ-प्रत्यानयिष्यामि । १४. अ प्र ल२-विशोका ॥ १५. फ-तु । १६. फ-मे । प्र ल२-मा । १७. फ-साध्वी सीता । १८. फ अ-सोत्कंठोत्कंठमालिंग्य मोक्षत् । च प्र ल२-सोत्कंठा कं॰। १९. अतः परमधिकः पाठः—अ फ-सा नूनमसितापांगी राक्षसीमध्यगा शुभा । अनाथा नाथहीनेव त्रातारं नाधिगच्छति । २०. अ-विलपतस्तस्य । च-॰माणस्य । २१. अ-रामस्यानुपमात्मनः । फ-रामस्य विदितात्मनः ।

१९] दिन-क्षयान् मन्द-वपुर् भास्करोऽस्तम् उपाऽऽगतः[1] ॥२१॥ [२२

इति स वनितया विना-कृतः[2]
सुर-पति-तुल्य-वपुर् नरेश्वरः[3] ।
लवण-जलम्[4] उद्-ईक्ष्य दुस्-तरं[5]
N] जनक-नरेन्द्र-सुताम् अशोचत[6] ॥२२॥ [N

इत्यार्षे रामायणे सुन्दर-काण्डे राम-विलापो[7]
नाम चतुःसप्ततितमः सर्गः ॥[8] ७४॥

---

१. फ अ–उपागमत् । रा–उपाययौ ॥ २. अ–विनाकृतः सत् । ३. फ–इति स विनयतया निराकृतः । ४. अ–लवणसमुद्रम् । ५. फ–दुस्तरं च ॥ ६. ल$_2$–इति सु० । ७. अ–रामविलापे समुद्रतीरगमनो नाम । प रा अ ल$_2$–समुद्रतीरगमनं नाम । ८. प ■ ल$_2$–समाप्तमुद्योगपर्व दिग्विजयश्च ॥

हनूमतम् ततः कर्म घोरं श्रुत्वा भयाऽऽवहम् ।
N] दग्धां च नगरीं दृष्ट्वा सौऽट्ट-प्राकार-तोरणाम् ॥१॥
ततः परम-दुःखाऽऽर्ता जननी रक्षसां पतेः ।
२] सुतं विदित-तत्त्वाऽर्थम्[2] इत्थं[3] उवाच विभीषणम् ॥२॥
नष्टान्[4] दारान् मृगयता प्रेषितो हनुमान् इह ।
३] रामेण[5] विनय-ज्ञेन सा च दृष्टा विभीषण ॥३॥[6]
पुत्र राक्षस-राजस्य महान्[7] चैवम्[8] उप-प्लवः ।
४] विदितम् ते महा-मन्त्र[9] यथा भवितुम् अर्हति ॥४॥
५पू] अ-धर्मेण[10] हि धर्म-ज्ञ मुच्य-मानं मुखं सदा ।
N] नाशयत्य् आशु तत्[11] पापम् अ-धर्मो विदितस् तव[12]ः ।[15]
५उ] आ-हरस्य् आपदं घोरां[13] असुहृत्-प्रीति-वर्द्धनीम्[14]॥[16][17]५॥
तद् इदं गर्हितं कर्म कृतं भ्राता तवाऽनघ ।
६] न प्रीणयति मा भुक्तम्[18] अ-पथ्यम् इव भोजनम् ॥६॥

---

१. अ फ—तु तत् । २. अ—श्रुत्वा घोर । फ—श्रुत्वा कर्णम॰ । ३. अ—लङ्का सा॰। फ—ज्ञात्वा सा॰ मा—दृष्ट्वा सादि॰॥ ४. फ च रा अ—विदितवृत्तान्तमि॰ । प्र ल$_2$—विदितवृत्तान्त प्रत्युवाच ॥ ५. रा—नष्टा दारान् । प्र—न-ष्टान्सुरान् । मा—इष्टान्दारान् । ६ च रा प्र ल$_1$—रामेणाविदितज्ञेन । ७. अ—नास्ति॥ ८. फ च रा प्र ल$_1$ अ—महानयम् । ६ रा प्र ल$_1$—उपद्रवः । १०. फ च रा प्र ल$_2$ अ—महाप्राज्ञ ॥ ११ अ—अधर्मेन । १२. अ फ च रा प्र ल$_2$—महत् । १३ आ—त । १४. आ—ततः । १५. फ च अ—नास्ति ॥ १६. अ—घोर सुहृत्प्रीतिविवर्द्धनी । १७. प्र—नास्ति । च रा व म ल$_1$ ल$_2$—श्लोकोऽय पूर्वार्धपरार्धव्यत्यासेन पठितः । अतःपरमाधिकः पादः—च रा व ल$_1$ म ल$_2$—यस्मा हि † सधर्मेण मुच्यमानं सुखं सदा । १८. अ—मुव्यथम् ।

† रा ल$_2$—द ।

न हि सीतां हृतां ज्ञात्वा धर्म-शास्त्राऽर्थ-कोविदः[1],[2] ।
७] न करिष्यति धर्माऽऽत्मा रामः सद्मम् आत्मनः ।
N] न हि सत्य-व्रतश्[3] चाऽस्य मृधे शक्रोऽपि मोक्ष्यते[4] ॥[5]७॥
स हि सत्य-व्रतश् चैव दिव्ये[6] चाऽस्त्र-बले स्थितः[7] ।
८] गृहीत-चापः सं-क्रुद्धः[8] शोषयेद्[9] अपि सागरम् ॥८॥
ये[10] च युद्धे पुरा तेन हत-शेषा निशा-चराः ।
९] इह प्राऽऽगताः परि-त्रस्तास्[11] तद्-वीर्य-हत-पौरुषाः ॥[12]९॥
दुर्-विगाहं[13] दुरा-धर्षं क्रुद्धस्य शर-दुर्दिनम् ।
१०] तस्य वीरस्य विस्तीर्णं वर्णयन्ति निशा-चराः[14] ॥१०॥[15]
चतुर्दश-सहस्राणि रक्षसां क्रूर-कर्म्मणाम् ।
११] को नु[16] मर्त्यस् तदा हन्याद् एकः परम-संयुगे ॥११॥
नूनं[17] चरति लोकेऽस्मिन्[18] स कालो दुरति-क्रमः ।
१२] तादृशं न हि मर्त्येषु वीर्यम् अस्ति सुरेष्व् अपि[19] ॥१२॥
खरस्यैव[20] वधान् मन्ये मारीचस्य वधाद् अपि[21] ।

---

१. अ—सीता । २. अ—स शास्त्रगतिकोविदः । फ—सर्वास्त्रविधि-कोविदः । ३. रा—सत्यव्रतः कश्चिन् । ४. च रा—शक्रोपि । ५. फ अ—नास्ति ॥ ६. अ—दिव्य । ७. आ—चास्त्रबले तु यः । अ—चास्त्रे बले । रा—चापेबलस्थितः । ८. च—स क्रुद्धः । ९. आ—शोषयेत्तु स । १०. आ—यादि युद्धेषु रामेण हतशेषाः । फ—ये हि युद्धेषु रामेण हतशेषाः । च प्र ल$_2$—ये हि युद्धेषु रामेण । रा—ये हि युद्धेषु रामेण हतयोधाः । ११. अ—भयत्रस्ता । १२. च रा प्र ल$_2$—नास्ति । १३. अ—दुर्विगाहं । फ—दुर्विगाधं । १४. अ—निशाचरं । १५. प्र—न । १६. अ—ऐको रामाद्वि संयुगे । १७. रा—पूर्वं । १८. फ—कोऽर्थास्त्री-म्म कालो नरविग्रहः । १९. अ—देवेषु गन्धर्वेष्वमरेषु च । फ—देवेषु वीर्यमस्य-सुरेषु वा । च रा प्र ल$_2$—देवेषु वीर्यमस्यमुरेष्वपि । २०. फ प्र ल$_2$—खरस्य च । २१. फ—मारीचनिधनादपि ।

१३] न राम-सदृशो ह्य् अस्ति निशाचर-गणेष्व् अपि ॥१३॥
तम् एवं गुण-सम्पन्नं मत्वा दशरथाऽऽत्म-जम् ।
१४] न शान्तिम् उप-गच्छामि भयात् प्र-व्यथितेन्द्रिया ॥१४॥
तद् यथा प्राऽऽप्त-कालं ते वीर न व्यति-वर्त्तते ।
१५] तथाऽऽचर विशालाऽक्ष बुद्ध्या परम-सूक्ष्मया ॥१५॥
हितं वचनम् आ-यत्यां तदात्वे च महोदयम् ।
१६] श्रावयाऽद्यैव वाक्यार्थं रावणं यदि शक्यते ॥१६॥
इदम् उद्-भ्रान्त-हृदयं धर्माच् चलित-मानसम् ।
१७] न ह्य् एनं पतिताऽऽत्मानम् उत्सहे ह्य् अनु-शासितुम् ॥१७॥
सीतां निर्-यातयस्वेति वचनं वदतां वर ।
१८] पौलस्त्यः श्राव्यतां शीघ्रम् एतद् एव तु विदितं भवेत् ॥१८॥
कर्मभिर् दारुणैः श्रान्तं हतं मन्मथ-निद्रया ।
१९] धर्म-वाक्याऽनिलैः शीतैर् बालिशं मति-बोधय ॥१९॥

---

१. अ—०शोऽस्तीह । फ—०शोऽस्तीति । २. फ—०गणेषु वै । ३. रा—नास्ति । ४. फ—तदेवं । रा—तमेव । ५. अ—रामं । ६. प्र ल₂—अभिगच्छामि ॥ ७. अ—तथाद्य प्राप्तिकालान्ते । आ—तथथा प्राप्य कालन्ते । ८. फ—च न । रा प्र ल₂—कुरु । ९. रा—०सूचया । १०. अ—आयुष्यं तदात्वैव । फ—आयत्यां कटुकं च । रा—आयत्यं तदा त्वं च । ल₂—आयत्ये तथात्वेव । ११. फ—वाक्यशं । १२. फ च रा—शक्यसे ॥ १३. अ—कूरमुद्भ्रांत० । फ—अहं सुभ्रांत० । १४. अ—नह्येनमजितात्मानम् । फ—न ह्येनमकृतात्मानम् । प्र च रा ल₂—नह्येतं । १५. अ—आतु शा० । १६. आ—श्लाघ्यतां । १७. अ च—एतदत्र हितं । फ—एतदेव हित । रा प्र ल₂—एतद्दते हितं । १८. प्र—दारुणं । १९. अ—शान्तैर् । फ—श्रान्त० । ल₂-श्रोतुं । २०. अ—हतमज्ञानमिन्द्रियं । फ—हतमज्ञाननिद्रया । रा ल₂—मन्मथनिद्रया । प्र—मन्मयनिर्दय २१. अ—शीनैर्वालिश । फ—शान्तैर्वालिशं । २२. प्र—प्रतिरोधय ॥

अस्मिन् रक्षो-गणाऽऽकीर्णे दारुणे पाप-कर्मणि ।
--] त्वम् एव भ्राजसे कीर्त्त्या धनैर् मुक्त इवांऽशुमान ॥२०॥
त्वया हि एकेन सर्वोऽयम् अधर्म-प्रस्थितो जनः ।
२१] धार्यते न्याय-वृत्तेन वेलयेव महोदधिः ॥२१॥
यथा त्वं अ-धर्मेण हि नैव युज्यते
यथा न कीर्त्त्या परया वि-युज्यते ।
तथा तथा स्वार्थ-हितं नु दर्शयन्"
२२] यथा न मृत्योर् वशम् एति सर्व-शः॥२२॥
यतस्-ततो मद-सुरभिर् द्रवन् यथा
नि-वार्यते परम-शितैर् महाऽङ्कुशैः ।
महा-द्विपो रजनि-चराऽधिपस् तथा
२३] नि-वार्यतां हित-वचनांऽङ्कुशैस् त्वया ॥२३॥
अथैवम् उक्तश् चरणौ नि-पत्य तौ
सुतो जनन्या वि-षमे विभीषणः ।

१ अ-०गणानासो दारुणोपायसंकुले । फ-०गणावासे दारुणे रोम-हर्षणे । २. अ-त्वयादिना न । ३. रा-सर्वत्रमधर्मप्रस्थितो । अ-सर्वोय-मधर्मे संस्थितो । ४. फ-वार्यते । ५. रा-वेल एव । ६. अ-महोदधिं । फ-महोदधेः ॥ ७. अ-स्वधर्मेन । ८. फ-च । ९. आ-युज्यसे । फ अ-युज्यते । १०. आ-विमुच्यसे । फ-नियुज्यसे । ११. अ-यथा यतस्वात हितानु-दर्शने । फ च रा ल$_{1}$ ल$_{2}$-तथा यतस्वाथ हितानुदर्शने । १२. आ-हि मृत्योर्न वशे हि । रा-मृत्योरवशमेति । ल$_{2}$-न मृत्योर्वशमेपि । १३.आ-तिष्ठसि । फ-सर्वथा । रा-सर्वतः । १४. फ-द्रुतस्ततो । १५ च-०करीभिद्रवन्यथा । अ-०सुरभिर्यथा द्रव्य । फ-०सुरमेर्यया द्रवन् । १६. अ-नेवार्यते । १७. आ-०सितैर । रा-०शीनैर् । १८. आ-भो वचनांकुशैर्बलात् । च रा प्र ल$_{2}$-०कुशैर्बलात् । १९. प्र-नयैव । ल$_{2}$-चवैव । २०. [illegible] प्र ल$_{2}$-निपत्य वै । फ अ-निपीड्यतौ । २१. फ अ-शुभौ । २२. अ-विपये ह्यमत्सरो । फ च रा ल$_{2}$-विषयेष्वमत्सरी । प्र-विषयेषु मत्सरी ।

कृताऽभ्यनुज्ञश् च ततः कृताऽञ्जलिर्
२४] जगाम रक्षोऽधिपं-दर्शनोत्सुकः ॥२४॥

इत्यार्षे रामायणे सुन्दरे-काण्डे विभीषणे-मातृभाषणे
नाम पञ्चसप्ततितमः सर्गः ॥७५॥

---

ततः प्रत्यु-ऊपमि माऽऽसे माऽऽसे-धर्माऽर्थ-निश्चयः ।
राक्षसाऽधि-पतेर् वेश्म भीम-कर्मा वि-भीषणः ॥१॥ [१
श्वेताऽभ्र-वृन्द-संकाशं शैल-शृङ्गम् इवोन्-छ्रितम् ।
सुवि-भक्तं महा-कक्षं महा-रथ-परिग्रहम् ॥२॥ [२
मति-मद्भिर् महाऽमात्यैर् अभि-युक्तैर् अधि-ष्ठितम् ।
रक्षोभिश् चाऽप्य् अ-पर्यन्तैः सर्व-तः परि-वारितम् ॥३॥ [३
मत्त-मातङ्ग-निश्वासैः संकुली-कृत-मारुतम् । [४पू
परस्पर-कृतोन्माहैः प्र-वीराऽश्वैर् अलंकृतम् ॥४॥ [N
प्रमदा-शत-सम्बाधं प्रमदा-हास्यैं-मिश्रितम् ।
रक्त-विद्रुम-निर्यूहं भूषणोत्तम-निस्वनैः ॥५॥ [५
गन्धर्वाणाम् इवाऽऽवासम् आ-लयं मरुताम् इव ।
त्न-संचय-सम्बाधं भुवनं भोगिनाम् इव ॥६॥ [६

कृताऽभ्यनुं-ज्ञश् च ततः कृताऽञ्जलिर्
२४] जगाम रक्षोऽधिपं-दर्शनोत्सुकः ॥२४॥

इत्यार्षे रामायणे सुन्दरं-काण्डे विभीषणं-मातृभाषणो
नाम पञ्चसप्ततितमः सर्गः ॥७५॥

---

१. आ—॰ज्ञः स ततः । फ—॰नुज्ञस्तु तया । च प्र ल$_2$—॰नुज्ञः स तया । २. अ—रक्षोपदर्द॰ । ३. ल$_2$—इति सुन्दरकाण्डे । ४. ल$_2$ रा—विभीषणमातृवचनं नाम । अ—कैकसीवाक्यं नाम । फ—विभीषणवाक्यं नाम । च प्र—विभीषणमातृभाषणं नाम ॥

ततः मत्य्-ऊपसि माऽऽसे माऽऽसं-धर्म्माऽर्थ-निश्चयः ।
राक्षसाऽधि-पतेर् वेश्म भीम-कर्मा वि-भीषणः ॥१॥ [१
श्वेताऽभ्रं-वृन्द-संकाशं शैल-शृङ्गम् इवोच्-छ्रितम् ।
सुवि-भक्तं महा-कक्षं महा-रथ-परिग्रहम् ॥२॥ [२
मति-मद्भिर् महाऽमात्यैर् अभि-युक्तैर् अधि-ष्ठितम् ।
रक्षोभिश् चाऽप्य् अ-पर्यन्तैः सर्व-तः परि-वारितम् ॥३॥ [३
मत्त-मातङ्ग-निश्वासैः संकुली-कृत-मारुतम् । [४पू
परस्पर-कृतोत्साहैः प्र-नरैराऽश्वैर् अलंकृतम् ॥४॥ [N
प्रमदा-शत-सम्बाधं प्रमदा-हास्यै-मिश्रितम् ।
रक्त-विद्रुम-निर्यूहं भूषणोत्तम-निस्वनम् ॥५॥ [५
गन्धर्वाणाम् इवाऽऽवासम् आ-लयं मरुताम् इव ।
रत्न-संचय-सम्बाधं भुवनं भोगिनाम् इव ॥६॥[20] [६
तेन महाऽभ्रम् इवाऽऽदीप्तं तेजो-राशिम् इवो-ज्ज्वलम् ।[21]

---

१. रा-ययौ । प्र-गतः । २. आ रा अ-प्रत्युषसि । ३. अ-मासे धर्म्मार्थं० ॥ ४. आ-श्वेताभ्रपुष्पसङ्काशं । ५. फ च अ-सुविभक्तमहा०। रा स₂-सुविभक्तमहाकक्ष्यं । आ-सुविभक्त महाभक्तं॥ ६. आ-मतिमद्भिः सहा०। ७. फ-०युक्तम् । ८. फ-अनुष्ठितम् । प्र-अधिष्ठिते । ९. आ-च सपर्यन्तैः । अ-चापि प० ॥ १०. अ-महामातंगनिस्वासैः । आ फ-०ङ्गनिस्वासैः । ११. अ-०तमन्तरम् । अ-०तं मारुजम् । १२. आ-अभ्युच्छ्रितैर्महोत्साहैः । फ-०कृतोत्साहं । १३. फ-प्रवराश्वैर् ॥ १४. फ अ-प्रज्वलितमिवौजसा । १५. प्र-रक्तबिन्दुसमायोगं। रा-०समयोगं। च-०भणिनियोगं । अ-०मनियोगं । १६. अ-०मनिश्रितम् । च-०निःस्वनम् । १७. आ च प्र-०पनिर्याधं । १८. आ फ च ॥ स₂-भवनं । १९. अ फ-योगिनाम् । अ-योगिनामपि । २०. रा-नास्ति ॥ २१. फ-सं महाभूतिना दीप्तं । २२. आ-नास्ति ।

अथ-जस्याऽऽलयं वीरः प्र-विवेश वि-भीषणः ॥७॥ [७
शृण्वन् पुण्याऽह-शब्दांश् च वेद-विद्भिर् उद्-ईरितान् ।
शुश्राव सुमहा-तेजा भ्रातुर् विजय-संहिताम् ॥८॥ [८
पूजितां (न) दधि-पात्रैश् च सुसर्पिः-सुमनोऽक्षतैः ।
तत्र वेद-विदो विप्रान् ददर्श सुमहा-यशाः ॥९॥[6] [९
सं-सेव्यमानं रक्षोभिर् दीप्य-मानम् इवौजसा ।
आसने-स्थं महा-भागं ववन्दे नैर्ऋतर्षभम् ॥१०॥ [१०
स राजाऽऽदिष्टम् आ-प्तेप्सुम् आसनं हैमम् आसवान् ।
जगाम समुदा-चारं प्रयुज्याऽऽचार-कोविदः ॥११॥ [११
स राक्षसो महा-तेजा वि-धेयं स्वामि-सन्निधौ ।
उवाच हितम् अत्य्-अर्थं वाक्यम् आयति-निश्चितम्॥१२॥[१२
प्र-साद्य भ्रातरं ज्येष्ठं सान्त्वसोप-क्रमोऽऽस्थितम् ।
देश-कालाऽभिसम्प्राऽऽप्तं दृष्ट्वा चाऽमित-विक्रमः ॥१३॥ [१३
यदा प्र-भृति वैदेही सम्प्राऽऽप्तेह परं-तप ।
तदा प्र-भृति दृश्यन्ते नि-मित्तान्य् अ-शुभानि च॥१४॥[१४

---

१. फ अ–महाद्युतिः ॥ २. अ–पुष्पपुण्याहघोषांश् । फ–हृष्टपु० ।
३. फ रा–विनयं स्वामिसन्निधौ । अ–०संहिताः ॥ ४. [illegible] च रा ल$_2$ अ–पूजितां । ५. रा–सर्पिरसु च म० । प्र–ससर्पिः सम० । ल$_2$–ससर्पिः सुम०। अ फ–०मनोऽक्षितैः । ६. फ–अत आरभ्य १२ श्लोकस्य पूर्वार्द्धं पातयाति ॥
७. आ–०मानो । ८. प्र–इवौजसा । ९. रा–आसनस्थं । १०. च–नैर्ऋतर्षभाः ॥
११. आ–आदिष्ट । १२. अ–आप्नुयाद । १३. अ–०चारः प्रयुज्याचार० ।
१४. रा ल$_1$–हर्यक्षो । प्र–हरक्षो । १५. अ च रा [illegible] ल$_2$–विनयात् ।
१६. रा–आयाति नि० ॥ १७. फ च रा ल$_2$ अ–आताद्य । १८. अ–श्रेष्ठं ।
१९. अ–साधुसोपक्रमस्थितम् । च–०पक्रमास्थिमम् । ल$_2$–०पक्रमं स्थितम् ।
२०. अ–०भिसम्पन्नं । च रा प्र ल$_1$–०सम्प्राप्तं । २१. अ–दृष्ट्वा । २२. अ–चारपराक्रमम् । फ–कपिपराक्रमम् । २३. अ–परंतपा । । २४. फ–ह ।

वि-स्फुलिङ्गैः प्र-शान्तोऽर्चिः सं-धूमः कलुषोदयः ।
मन्त्र-तर्मैं तर्पितो वह्रिर् न सम्यग् अभि-पद्यते॥१५॥ [१५
अन-इष्टं हि अग्नि-शालासु तथा ब्रह्मोऽऽसनेषु च ।
सरी-सृपा वि-सर्पन्ति हव्येषु च पिपीलिकाः ॥१६॥ [१६
गवां पयांसि स्कन्नानि वि-मदाश् चाऽपि कुञ्जराः ।
दीनम् अश्वाः प्र-हेषन्ति न च ग्रासांऽभि-नन्दिनः॥१७॥ [१७
खरोष्ट्रांऽश्व-तरा राजन् भिन्न-रोमांऽश्रु-वर्षिणः ।
स्वभावेनैव[१२] तिष्ठन्ति वि-धानैर् अपि सं-युताः॥१८॥ [१८
वायसाः संघे-शः क्रूरा व्या-हरन्ति समन्ते-तः ।[१४]
समवेतांश् च दृश्यन्ते वि-मानाऽग्रेषु साम्प्रतम् ॥[१५] १९॥[१९
गृध्रोः सम्पर्य-अटन्ते च पुरीम् उपरि मण्डिताः ।[१६]
उप-रक्ते च संध्ये द्वे[२१] व्या-हरन्त्यं अ-शिवं[२२] शिवाः॥[२३]२०॥२०
शिवा-क्रव्यादें-मृगाणां च पुरें-द्वारि समन्त-तः ।

---

१. च प्र ल१ अ-विस्फुलिङ्गाग्र० । फ-०गः समन्तार्च । २. फ-सधूमक० । ३. अ-मन्त्रवत्तर्पितो । फ-मन्त्रवत्सपते । ल२-सततपर्यर्पितो ॥ ४. रा-अग्निषु अग्नि० । ल२-अग्निस्वप्यग्नि० । आ च-ह्यग्निशालास्तु । ५. च-प्रक्षारमनेषु । ६. च रा प्र ल२-प्रसर्पन्ति । आ-विसर्पन्ति । ७. अ-पयांसगन्धानि । ८. फ-प्रहेष्यन्ते । च रा प्र-प्रहेष्यन्ति । ९. अ-चामासाभि०॥ १०. फ-खरोष्ट्राश्च तथा । प्र-खरोष्ट्राः सवशो । ११. फ-भिन्नरोमा रुदन्ति च । रा-०रोमास्कवर्हिणः । प्र-रोमाश्रुव० । १२. अ-भिन्नाः-स्वभावेनानुतिष्ठन्ति ॥ १३. फ-संघसः । १४. फ-०न्ति ततस्ततः । रा-व्याहरन्त्यशिवं शिवाः । १५. अ-नास्ति । १६. प्र-समवेताश्च । १७. फ-सम्प्रति । १८. रा अ-नास्ति॥१९. फ-गृध्राश्च पर्य० । २०. फ-पीडिताः । ल२-पुंडिताः । २१. अ-संध्ये द्वे । ल२-द्वे संध्ये । २२. आ-०रन्त्यशिवाः शिवाः । प्र-व्याहरंति शिवं । २३. रा-नास्ति ॥ २४. अ-क्रव्यादीनां । फ च रा च प्र ल२-क्रव्यादानां । २५. अ फ च रा-पुरीद्वारि । प्र-द्वारि द्वारि । ल२-शश्वद्वारिषु ।

श्रूयन्ते परुषा वाचः स-विस्फूर्जित-गर्जिताः ॥२१॥ [२१
तद् एवं प्र-स्थिते कार्ये मायश्-चित्तम् इदं महत् ।
रोचते यदि वैदेही राघवाय प्र-दीयताम् ॥२२॥ [२२
इदं हि यदि वा मोहात् स्नेहाद् वोद्-ईरितं मया ।
श्रुत्वाऽपि खलु मे राजन् न रोषं कर्तुम् अर्हसि॥२३॥ [२३
अयं हि दोषः सर्वस्य जनस्यांऽस्योप-लक्षितः । [२४पु
मोंऽऽपणे ह्य् अस्य कार्यस्य नि-हत्तास् तव मन्त्रिणः॥२४॥
अवश्यं तु मया वाच्यं दृष्टं वा यदि वा श्रुतम् । [२५
सम्प्र-धार्य यथा-न्याय्यं तद् भवान् कर्तुम् अर्हसि॥२५॥[२६
हितं हि तस्मै मृदु-हेतु-संयुतं
व्यपेत-दोषाऽऽयति-सम्प्रति-क्षमम् ।
वि-लक्षयन् कार्यम् उपस्थित-ज्वरं
प्रसभ-वाग् उत्तरम् उक्तवान् इदम् ॥२६॥[२७
भयं न पश्यामि कुतश्चिद् अप्य् अहं
न राघवः प्राऽऽप्स्यति जातु मैथिलीम् ।

---

१. आ-घोराः ॥ २. फ-तदेवं प्रथिते । रा-तदैवोपस्थिते । प्र ल₂-तदेवोपास्थिते । च-तदेवो प्रथिते ३. अ-कर्मे । ४. फ-मोच्यतां । ५. अ-वीर सीतेयं । फ-वीर वैदेही ॥ ६. अ-इयं हि यदि मोहात्तु स्नेहाद्वोदीरिता मया । ७. अ-अत्रापि परमं । फ-अत्रापि खलु मे । ८. फ-दोषं । ९. च रा-रोषः । १०. अ-जनस्यास्य न लक्षितः । ११. अ-प्रयत्ने । प्र-प्रयाने ॥ १२. अ-च । फ-हि । १३. आ-तथा । फ रा प्र ल₂ अ-यथान्यायं । १४. फ अ-वक्तुम् ॥ १५. फ-स । १६. च-व्यपेत दोषो यति० । फ अ-व्यतीतदो० । १७. अ-विपक्षयत् । फ-विलक्ष्ययत् । अ-विलक्षयं । १८. आ-०स्थितद्वार । अ-०स्थितत्वात् । फ प्र ल₂-०स्थितक्षयं । च रा-उपस्थितं क्षयं ॥

सुरैः सहेन्द्रैर् अपि सं-गतैः कथं
मया ऽग्र-तः स्थास्यति लक्ष्मणाऽग्र-जः ॥२७॥[२८

इत्यार्षे रामायणे सुन्दर-काण्डे निर्भीयर्ण-वाक्यं
नाम षट्सप्ततितमः सर्गः ॥ ७६॥

---

१. ञा-सहेन्द्रैर् । ञ-सुरेन्द्रैर् । फ-समस्तैर् । २. च-संगता । प्र-संयुतः ॥ ३. ञा-आर्येयरा० । ल₂-इति सु० । ४. ञ च-लंकापर्वण्यौत्पातिकदर्शनं । फ-औत्पातिकं नाम ॥

लंकायां तत-कृतं दृष्ट्वा घोरं कर्म भयाऽऽवहम् ।
१] राक्षसेन्द्रो हनुमता संक्रुद्धेन्द्रिय-मानसः ॥[1] १॥
अमात्यान् अब्रवीद् वीरो राक्षसान् स-विभीषणान् । [१
२] सं-रब्धो रक्त-नयनः कोपात् किंचिद् अवाङ्-मुखः॥२॥[N
३पू] आ-गतश् च प्र-विष्टश् च हनूमान् नगरीम् इमाम् ।
N]मन्त्र-कालः समुत्-पन्नो मन्त्र्यताम् अत्र यद् धितम्॥३॥ [N
३उ] दृष्टा तेन हि[11] वैदेही प्र-विश्याऽन्तः-पुरं मम ।[12] [N
प्रासादो धर्षितश् चैत्यः प्र-वरा राक्षसा हताः ॥४॥
४] आकुला च पुरी लंका सर्वा हनुमता कृता । [३
किं करिष्यामहे तत्र वि-धानं युक्तम् उत्-तमम् ॥५॥
५] उच्यतां यत् समर्थं नः किम् अत्र सु-कृतं भवेत् । [४
६पू] मन्त्र-मूलं हि वि-जयं माऽऽहुर् विजय-कांक्षिणः॥६॥[5] [५पू
• त्रि-विधाः पुरुषा लोके उत्तमाऽधम-मध्यमाः ।

---

१. प्र-कथं ।२. रा प्र ल$_2$-श्रुत्वा । ३. ल$_2$-स्वयाव० । ४. फ-हनूमता । ५. च ■ ल$_2$ अ-श्लाघनीयं सुदुष्करम् । फ-शक्रेणेव महात्मना । ६. रा-नास्ति ॥ ७. फ अ-अब्रवीत्सर्वान् । ८. आ-संर'''रक्तन० । फ-संरब्धरक्त० । च-संरक्तस्वारक्तनयन । ल$_1$-संरक्तः घोरनयनः॥ ६. रा-नास्ति । १०. फ-मन्त्रयद्० ॥ ११. फ अ-च । १२. फ अ-प्रदृष्यान्तःपुरं । आ-प्रविष्टोन्तःपुरं । १३. अतः परमधिकः पाठः-फ च रा प्र ल$_2$ अ-धर्षितेयं पुरी लङ्का दुष्प्रवेशा सुरैरपि । तेन वानरमात्रेण प्राकृतेन [कुबुद्धिना । १४. अ-आकुली । १५. अ-जया । १६. फ अ-किं वा युक्तमनन्तरम् । रा प्र ल$_2$-नं युक्तमुत्तरम् । च-नं युक्तमुत्तरः ॥ १७. अ-सधर्मं । १८. फ अ-आर्या मनस्विनः । १६. अतः परमधिकः पाठः-फ च रा प्र ल$_2$ अ-तस्माद्वो रोचतां मन्त्रो रामं प्रति महाबलाः ॥ २०. ल$_2$-विविधाः ।

७] तेषां च समवेतानां गुण-दोषान् वदाम्य् अहम् ॥७॥ [६
मन्त्रिभिर् हित-संयुक्तैः समेतैर् मन्त्र-निश्चयैः ।
८] अमात्यैर् वा सम्-एताऽर्थो बान्धवैर् अपि वा हितैः॥८॥[७
सु-मन्त्रं मन्त्रयित्वा यः कार्याऽऽरम्भे प्र-वर्तते ।
९] दैवे च कुरुते यत्नं तम् आहुः पुरुषोत्-तमम् ॥९॥ [८
एकोऽर्थं वि-मृशत्य् एको धर्मे च कुरुते मतिम् ।
१०] एकः कार्याणि कुरुते तम् आहुर् मध्यमं नरम् ॥१०॥ [९
गुण-दोषात्र् अ-निश्चित्य दैवं एक-परायणः ।
११] करिष्यामीऽति यः कार्यम् उपेक्षेत् स नराऽधमः॥११[१०
यथैव पुरुषा लोके उत्तमाऽधम-मध्यमाः ।
१२] एवं मन्त्रोऽपि वि-ज्ञेय उत्तमाऽधम-मध्यमः ॥१२॥ [११
ऐक-मत्यम् उपाऽऽगम्य शास्त्र-दृष्टेन कर्मणो ।
१३] मन्त्रिणो मन्त्र-निरतास् तम् आहुर् मन्त्रम् उत्तमम्॥१३॥[१२

---

१. अ-सु । २. अ-॰दोषाद् ॥ ३. रा प्र अ-समर्थैर्मन्त्रनिश्चये । फ-समर्थैर्मन्त्रसंशये । ४. रा-संहितैः । ५. अ-मंत्रयेत सदा राजा समानार्थैः कुलोद्गमैः । फ-मित्रैर्वापि सदा राजा समानार्थैः कुलोद्गमैः ॥ ६. अ-सहसा मन्त्रयित्वा यः कर्मारम्भेषु वर्तते । फ-सह संमंत्र्य सान्निध्ये कर्म सम्भं प्रवर्तते । ७. अ-दैवज्ञः । फ-धैर्याच्च । च-दैवाच्च । रा प्र ल₂-देवाच्च ॥ ८. अ-एकोऽर्थाद् । फ-एकोऽर्थान् । ९. आ-विमृशन्येऽधर्मे प्रकु॰। च-विमृशत्येको धर्मे च कु॰ । रा ल₂-विमृशत्येको धर्मे प्रकु॰ । प्र-विमृशत्येको धर्मेपि कु॰ । १०. च रा प्र ल₂-पुरुषं परम् । ११. आ-॰दोषौ विनि॰। अ-॰दोषाद्विनि॰। फ-॰दोषान्वि॰ । ल₂-॰दोषान्नि॰ । १२. अ-त्यक्तदैत्यमपाश्रयः ? । फ-नरो धर्मव्यपाश्रयः । च रा ल₂-त्यक्तधर्मव्यपाश्रयः । १३. फ-यत् । १४. फ-उपेक्षेत न॰ ॥ १५. फ-यथैवं । १६. फ अ-नित्यम् । १७. अ-एकमर्त्यम् । आ-ऐक्यमत्यम् । च रा-एकमत्यम् । प्र-ऐकपत्यम् । १८. आ-उपागम्य । १९. अ-चक्षुषा । २०. अ-मंत्रितं मन्त्रनियमस्त॰। फ-मन्त्रिणां मन्त्रनियमस्त॰ ॥

बह्वयोऽपि मतयो गत्वा मन्त्रिणाम् अर्थ-सिद्धये ।[3]
१४] पुनर् यत्रैकतां यान्ति स मन्त्रो मध्यमः स्मृतः॥[5]१४॥ [१३
मन्त्रं कृतं वि-लुम्पन्ति अन्यथा परि-भाष्यते ।[7]
न चैकमत्य-लेशोऽस्ति मन्त्रः सोऽधम उच्यते॥१५॥[9] [१४
तस्मात् सु-मन्त्रितं कृत्वा भवन्तो मन्त्रि-सत्तमाः ।
१६] कार्ये च मति-पर्येत भवेद् कुस-तमं मम ॥१६॥ [१५
१७पू] वानराणां सु-वीराणां सहस्रैः परि-वारितः ।
N] रामो ह्य् एति पुरीं लंकां नूनं मम विरोध-तः ॥१७॥ [१६
१७उ] तरिष्यति च सु-व्यक्तं राघवः सागरं सुखम् ।

---

१. ल$_2$–बह्वोपिम०। अ–वय्योपिम० । २. अ–मंत्रणामर्थनिश्चये । प्र–कुर्वन्ति मंत्रनिश्चयम् । ल$_2$–प्रकुर्यान्मन्त्रानिश्चयम् । ३. फ–बह्वीमपि मतिं कृत्वा मन्त्रिणामर्थसिद्धये । च रा–बह्वयोपि मतयो मत्वा मन्त्रिणो मन्त्र-निश्चयम् । ४. फ–मन्त्रैकतां । ५. अ–याति । ६. रा–१४-वा श्लोक४थपादमारभ्य १८-वाश्लोक३यपादान्तः पाठो नास्ति ॥ ७. आ फ अ–अन्योन्यमतिमास्थाय[1] यत्र सम्प्रतिभाष्यते[2] । ८. च अ–चैकमत्यश्लेषो। आ–चैकमत्येश्लेषो। फ–चैकमन्त्रश्लेषो । प्र–चैकमतिलेशो । ९. अतः परमधिकः पाठः—आ–बह्वीरभिमतीः श्रुत्वा मन्त्रिणो मन्त्रनिश्चयम् । नैव यत्रैकतां यान्ति स तु मन्त्रोऽधमः स्मृतः ॥ मन्त्र कृतमित्यनन्तरम्—यादृशं प्रक्रमन्ते च स मन्त्रोऽधम उच्यते । १० फ अ–माधु । प्र–त्वरया । ल$_2$ अ–गत्वा । च–मत्वा । ११. फ अ–भवेयन् । रा स मन्त्रो । १२ आ–मन्त्र० । १३. अ–कार्यसम्प्रतिपत्त्यर्थम् । च प्र ल$_2$–कार्यं सम्प्रतिपद्यध्व । रा–कार्यं सम्प्रतिपद्यध्व । १४. अ–एतत्कार्यं मतं । फ–एतत्कार्यनय । १५. फ अ–हि । १६. अ–शरसैः। १७. फ ल$_2$–रामोऽभ्येति। प्र–रामोभ्येत्य । १८. फ अ–लकामस्माकमवरोधकः ॥ १९. फ–स च व्यक्त ।

---

१. आ फ–अन्योन्य मन्त्र० । २. आ अ–भाषते ।

१८पू] तपसा युक्त-रूपेण स-बलः स-पदाऽनु-गः ॥१८॥[2] [१७

तस्मिन्नेवं-विधे काले वि-रोधार्द्रं वानरैः सह ।

१९] हितं पुरे च सैन्येन तव सर्वं मन्त्र्यतां मम ॥[5]१९॥ [१९

इत्यार्षे रामायणे सुन्दर काण्डे रावण-मन्त्रो

नाम सप्तसप्ततितमः सर्गः ॥ ७७॥

---

१. आ–सपदास्ग: । २. च रा प्र ल$_2$–नास्ति ॥ ३. ल$_2$–तस्मिन्नेवं-विधे । फ अ–तस्मिन्नेवं गते कार्ये । ४ फ अ–विरोधे । ५. फ प्र अ–यदस्माकं क्षमं भूत तच्छीघ्रं प्रविसृज्य हि । च–यदस्माकं क्षमं भूत तच्छीघ्र प्रविसृज्य हि । रा–यदस्माकं क्षमं भूत शीघ्रं प्रविसृज्यामहे । ल$_2$–यमस्माकं क्षमं भूत तच्छीघ्रं प्रविसृज्य हि॥६. आ–आर्षेय रा०। ल$_2$–इति सु०। ७. रा–नास्ति । फ–रावणवाक्यं ॥

इत्य उक्ता राक्षसेन्द्रेण राक्षसास् ते महा-बलाः ।
१] ऊचुः प्राऽञ्जलयः सर्वे रावणं राक्षसाऽधि-पम् ॥१॥ [१

आ-पद् इयं महा-राज या त्वाऽऽप्ता प्राकृताज् जनात् ।
२] हृदि नैषा त्वया कार्या तान् वधिष्यो(?मो)वानरान् ॥२॥ [N

राजन् परिघ-शक्त्य्-ऋष्टि-शूल-पट्टिश-संकुलम् ।
३] सु-महद् ते बलं कस्माद् वि-षादं भजते भवान् ॥३॥ [२

कैलास-शिखरं गत्वा यक्षैर् बहुभिर् हतम् ।
४] नीता यक्षा त्वया शान्ति वशे च धन-दः कृतः ॥४॥ [३

से महेश्वर-सख्येन श्लाघं-मानस् त्वया वि-भो ।
५] निर्-जितः समरे रोपाल् लोक-पालो महा-बलः ॥५॥[४

विनि-हत्य च यक्षौघान् वि-क्षोभ्य च वि-गृह्य च ।
६] त्वया कैलास-शिखराद् वि-मानम् इदम् आ-हृतम् ॥६॥[५

मयेन दानवेन्द्रेण त्वद्-भक्त्या सख्यम् इच्छता ।

---

१. ष-राक्षसा (साः) । रा प्र ल$_{2}$-वमिद ॥ २. अ-आपदेयं । फ-॰देषा । ष रा प्र ल$_{2}$-॰द्दीयं । ३. च रा प्र ल$_{2}$ अ-प्राप्ता वै । फ-पाप्रप्ता । ४ फ-वधिष्यामि ॥ ५ अ-परिधिसकर्पि शूलमुद्गरसकुल । फ-॰शक्त्यर्ष्टिशूलमुद्गरधारिणाम् । च-॰शक्त्युष्टिशूलमु॰ । रा प्र ल$_{2}$-परिघनि॰ स्त्रिंशशूलशक्त्यृष्टिसंकुलम् । ६ रा प्र ल$_{2}$-कुरुते । ७. आ-नास्ति ॥ ८. फ-कैलाश॰ ॥ ९ आ-सुसहर सख्येन । १०. आ अ-श्लाघ्यमानस् । ष-श्लाघ्यमाणस् । ११. अ-समरो रोषः । रा-समरो दोपाल् । ल$_{2}$-समरो । १२. ल$_{2}$-॰बला ॥ १३ फ-विनिर्जित्य । १४. फ-निगृह्य । १५. अ-नास्ति । १६. फ-कैलाश॰ । १७. रा-नास्ति ॥ १८. अ-स्वद्भयारसाधिम् । ष-भक्तया च । रा ल$_{2}$-भक्तया वै । प्र-भक्त्यैव ।

७] दुहिता तव भार्यार्थे दत्ता राक्षस-पुङ्गवे ॥७॥[3] [६
निर्-जितास्ते ते महा-बाहो नागा गत्वा रसा-तलम् ।
९] वासुकिस् तक्षकः शङ्खो जटी चैव वशी-कृताः ॥८॥ [८
अ-क्षया बल-वन्तश् च शूरा लब्ध-वराः पुनः ।
१०] त्वया संवत्सरेणा(?णो)ग्राः समरे दानवा जिताः ॥९॥[९
स्वं-बलं समुपाऽऽश्रित्य नीता वशम् अरिं-दम ।
११] आ-हृताश् च बलात् कन्या बह्व्यो राक्षस-दुर्लभाः॥१०॥[१०
शूराश् च बल-वन्तश् च वरुणस्य सुता रणे ।
१२] निर्-जितास् ते महा-राज चतुर्विध-बलाऽऽवृताः॥११॥ [१२
मृत्यु-दण्ड-महा-ग्राहं शाल्मलि-द्रुम-मण्डितम् । [१३पू
१३] अव-गाहितवान् राजन् यमस्य बल-सागरम् ॥१२॥
यशश् च वि-पुलं प्राप्तं मृत्युश् च प्रति-षेधितः । [१४

---

१. फ च रा प्र अ-भार्यार्थे । २. फ अ-०तन्दन । ३. अतः परमधिकः पाठः-फ अ-दानवेन्द्रो महाबाहो वीर्योत्सिक्तो दुरात्मवान् । फ च रा प्र ल$_2$-प्रसह्य च वशमानीत कुम्भवास्य. ? सुखावहः ॥ ४. अ-निर्जितस्ते । रा-दानवेन्द्र । ५. अ-संख्ये जटायुर्वै । ६. फ-विशेषवः । आ अ-वशीकृतः ॥ ७. अ-कल० । प्र ल$_2$-बलमथाश्च । ८. फ अ-लब्धवरास्तथा । रा प्र ल$_2$-ऋभुवराः पुनः । ९. अ-त्वया संवत्सरायोग दानवाः समरे हताः । फ-त्वया संवत्सरं घोरा दानवाः समरे हताः । प्र-त्वया समस्तरेणोग्रा समग्रा दानवा जिताः । ल$_2$-त्वया समस्तरेणोग्रा समस्ता दानवा जिताः॥ १०. प्र-सबलं । ११. म-०मत्य । १२. अ-वसमर्दिमः । १३. रा-०दुर्जयाः॥ १४. अ-विजिग्यस्ते । फ च रा प्र ल$_2$-विजितास्ते । १५. फ अ-चत्वारः सपदानुगाः । रा-०बलान्विताः॥ १६. अ-मृत्युदंष्ट्र म० । घ-मृत्युदण्ड म० । १७. अ-शालिविद्रुममंडिता । १८. अ-अवगाह्य त्वया राजन्प्रविश्य । फ च रा ल$_1$-अवगाह्य त्वया राजन् ॥ १९. अ-प्रतिषेधतः । फ-परिपोषितः ।

१४] सु-युद्धेन च[1] ते सर्वे लोकास्[2] तत्र स्म तोपिताः ॥१३॥ [१५
क्षत्रियैर् बहुभिर् वीरैः शक्र-तुल्य-पराक्रमैः ।
१५] आसीद् वसु-मती कीर्णा[3] महद्भिर्[4] इव पादपैः ॥१४॥ [१६
ते हताः समरे सर्वे त्वयैकेन बलीयसा[5] ।
N] स त्वम् एवं-विधो राजन्न् उद्यमं[6] कर्तुम् अर्हसि ॥१५॥ [N
किं पुनः फल-सन्तुष्टा[7] वानरा[8] वन-गोचराः ।
N] तौ च दाशरथी वीरौ[9] तापसौ मन्द-चेतसौ ॥१६॥ [N
कथं न हन्यां[10] राजेन्द्र यस्य[11] ते वीर्यम् ईदृशम् ।
मा वि-षीद महा-बाहो जेष्यसे[12] वानरान् रणे ।
N] प्रकृत्या चपलास् ते हि[13] मानुषौ क्षीण-जीवितौ[14] ॥१७॥ [N

इत्यार्षे रामायणे सुन्दर-काण्डे रावण-स्तवो
नामाऽष्टासप्ततितमः सर्गः ॥[16] ७८॥

---

१. फ अ–हि । २. घ–लोकास्तु वै । रा प्र ल$_2$–लोकास्तुबहुतो० । आ–लोकास्तत्र स्मयोपिता ॥ ३. प्र ल$_2$–पूर्णा । ४. रा–महद्भिश्च दिवमादये ॥ ५. अ–महात्मना । ६. फ रा प्र ल$_2$–अभयं । घ–अद्दरं ॥ ७. फ–०सन्तुष्टान् । ८. अ–न या नत्ता विजेष्यसि । फ–वानराव्ञ्जेष्यसि ॥ ल$_2$–वानरा वन० । ९. अ–वीर । फ–भीरू । १०. च–हन्यौ । ११. [illegible]–यश्च । १२. प्र ल$_2$–जेष्यामो । १३ फ–तौ तु । १४. फ–दीनविक्रमौ ॥ १५. आ–अर्पेद । १६. ल$_2$–इति सुन्दरकाण्डे रावणप्रबोधो नाम सर्गः । फ–सर्गसमाप्तिर्न दृश्यते ॥

N] राक्षसानां कुले जातस् त्वं प्र-शंससि[1] राघवम् ॥३१॥[2][N
यौवराज्येऽभि-षिक्तेन रावणाऽवर-जेन च ।[2]
N] सन्तोऽपि[3] न गुणा वाच्या मम शत्रोर् वि-भीषण ॥३२॥[N
किं च मां राघवो[4]ऽशक्तो देवैर् अपि समा-गतः ।
N] उप-गन्तुं[5] रणे युक्तं[6] गृहीत्वा परमाऽऽयुधम्[7] ॥३३॥ [N
राक्षसा[8] वानरान् सर्वांल् लङ्का-द्वारम् उप-स्थितान्[9] ।
N] त्रासयिष्यन्ति[10] सं-हृष्टा गजा वन-मृगान् इव ॥३४॥ [N
जानीते[11] वाक् च चक्षुश् च सर्व-लोक-प्रियाऽप्रियम् ।
N] रामे ते चक्षुषी कान्ते वाग् ब्रवीति गुणान्[12] पुनः ॥३५॥[13][N
अस्मात् ते वाक्-समायोगात्[14] काकुत्स्थं[15] लक्षये[16] प्रियम् ।
N] लक्ष्मणं[17] वानरेन्द्रं च वानरांस् तस्य चाऽनु-गान् ॥३६॥ [N
न चाऽहं त्वयि वि-श्वासं[18] गमिष्ये शत्रु-सेविनि ।

---

१. आ-बलं मानं प्रशशंस स । च-बलं जानस्त्वं प्रशंससि । अ-बलं जानन्यः प्रशंससि ॥ २. रा प्र ब म ल$_1$ ल$_2$-नास्ति ॥ ३. प्र-सन्त्येव न । अ-न सन्तोऽपि । ४. आ-राघवः शक्तो । म ल$_2$-राघवः शक्तो । ५. च ल$_2$ रा ब-उपागन्तुं । ल$_1$-समागतं । ६. फ च रा ब प्र म ल$_1$ ल$_2$-युद्धं । अ-योद्धं । ७. आ-गृहीतावरणायुधं । फ-गृहीत्वाभरणायुधं । च ल$_2$ रा प्र ब म ल$_1$ अ-गृहीत्वा परमायुधं ॥ ८. च-राक्षसान् । ९. अ-उपागतान् । १०. प्र-भ्रामयन्ति । अ-त्राशयिष्यन्ति । ल$_2$-त्रासयिष्यन्ति स्म ॥ ११. च-जानीत । १२. च-वा ब्रवीति गुणान् । आ-वाग्ब्रवीमि गु० । १३. रा प्र च म ल$_1$ ल$_2$-नास्ति ॥ १४. अ-वाक्यसंयोगात् । आ ब-वाक्यसमायोगात् । म-०समायोग्यात् । १५. आ-काकुत्स्थे । १६. च-लक्षयेत् । रा-लक्षय । १७. च-लक्ष्मणो वा० । अ-वानरेन्द्रं च सुग्रीवं । फ-०णं वानरेन्द्राणांश्च ॥ १८. अ ल$_1$ अ-विश्वासं ।

N] अभि-प्रेतं हि मनसो वाग् ब्रवीति शुभाऽशुभम् ॥३७॥ [N
पूर्वं तु मनसा ध्यात्वा शुभं वा यदि वाऽशुभम् ।
N] पश्चात् सर्वाणि भूतानि कर्मणाऽनु-चरन्ति च ॥३८॥ [N
पुरस्ताद् यः स्तवं ब्रूयात् पुण्य-कर्म-गुणाऽन्वितम् ।
N] एतं चेद्विं स्तवं सत्यं प(?पु)रा-वृत्तं स्तवे यथा॥३९॥ [N
पुरस्ताद् यः प्रियस् तस्य परा-वृत्त(ः)-स्तवै-प्रियः ।
N] इष्ट-भावात् परो-वृत्तः स्तौपि शत्रुं तथा न माम्॥४०॥ [N
जानामि शीलं ज्ञातीनां सर्व-लोकेषु राक्षसाः ।
३] हृष्यन्ति व्यसनेष्व् एते ज्ञातीनां ज्ञातयः सदा ॥४१॥ [३
प्रधानं स-धनं वैद्यं धर्म-ज्ञं स्व-जने-प्रियम् ।

---

१. आ–अभिप्रेतेन । अ–अभिप्रेतं तु । २. आ–मनसा । ३. प्र–सर्वानि । ४. रा–कामेणाऽनु॰ । ५. फ–हि । ६. म–भूयात् । ७. फ–सौर्यकर्म॰ । ८. आ च रा प्र ल$_1$–न तं । फ–न ते । ९. फ–विद्म । १०. च–स्तवैः ११. रा–॰वृत्तं । १२. आ अ फ ब प्र म ल$_2$–स्तवं । १३. आ–तु यो: । १४. फ–पुरस्तादप्रिया स्तव्याः परावृत्ता तु ये प्रियाः । च–पुरस्तादप्रिया स्तव्याः परावृत्तस्तु यो प्रियाः । प्र–पुरस्ताद-प्रियाः स्तव्याः परावृत्य तथा प्रियाः । ल$_2$–पुरस्तादप्रिया स्तव्याः परावृत्त.........प्रियाः । अ–पुरस्तादप्रियस्तस्य परावृत्ता तु ये प्रियः आ रा ल$_1$–पुरस्तादप्रियस्तव्यः परावृत्तस्तव प्रियः । म–पुरस्तादप्रियाः स्तव्याः परावृत्तस्तु यः प्रियः । १५. फ–पुरावृत्ता । रा–॰भावादपा-वृत्तः । प्र ब म ल$_1$ ल$_2$–॰भावादपावृत्तः । १६. रा–स्तौसि । प्र–सोपि । १७. प्र–शत्रु । १८. फ च रा ब म ल$_1$–यथा मम । प्र ल$_2$–यथा मम । अ–कथं मम ॥ १९ ल$_2$–शी··· । २० आ–॰सा: । ल$_1$–॰सः । २१. अ–हृष्यन्ते ॥ २२. अ–स्वजनार्थं च । फ–॰नं चैद्यं (विद्या) । रा–प्राधनं वैद्यं । प्र–सदनं वैद्यं । ल$_2$–सदनं वेद्यं । २३. आ फ–स्वजनं प्रियम् ।

४] ज्ञातयोऽप्य् अवं-मन्यन्ते शूरं परि-भैवन्ति च ॥४२॥ [४

नित्यम् अन्योऽन्य-संहृष्टा व्यसनेष्व् आततायिनः ।

५] प्रच्छन्न-हृदया घोरा ज्ञातयो नो भयाऽऽवहाः ॥४३॥ [५

श्रूयते हस्तिभिर् गीताः श्लोकाः पद्म-वने क्वचित् ।

६] पाश-हस्तान् नरान् दृष्ट्वा तांश् छृणु त्वं वि-भीषण ॥४४॥ [६

७पू] न चाऽग्निर् न च शस्त्राणि न पाशा न परश्वधाः । [७पू

N] जनयन्ति भयं घोरं यथा जाति-कृतं भयम् ॥४५॥ [N

७उ] घोराः स्वार्थ-प्रधाना हि ज्ञातयो नो भयाऽऽवहाः ।[16] [७उ

उपायम् एव वक्ष्यन्ति ग्रहणे नो न संशयः ।

८]सर्वेर् भयैर् ज्ञाति-भयं सदा कष्ट-तरं मतम् ॥४६॥ [८

सं-भाव्यं गोषु सांपत्यं सं-भाव्यं ब्राह्मणे तपः ।

९] सं-भाव्यं चापलं स्त्रीषु सं-भाव्यं ज्ञाति-तो भयम् ॥४७॥ [९

---

१. आ-ज्ञातयो ह्यव० । च-०योप्यवा० । २. च-शूर । ३. रा-परिभवति । च-पारं भयति । प्र म ल$_{1}$ अ-परिभवन्ति ॥ ४ फ-प्रच्छन्नवदना । आ-प्रच्छन्न हृ० । रा-प्रछन्नहृदया ॥ ५. फ च रा प्र ब म ल$_{1}$-श्रूयन्ते । ६. आ ल$_{2}$-हस्तिभिर्गीता ॥ ७. रा च प्र ब म ल$_{1}$ ल$_{2}$-नरान् । ८. रा-दृष्ट्वा । ९. रा-श्शृणुष्व । च म ल$_{1}$-तां श्शृणुष्व । प्र ल$_{2}$-ताञ्छृणुष्व । अ-तच्छृणुष्व । १०. आ-पाशो । ११. आ म अ-०स्वधाः । १२. च-नरं । १३. म-जातिभयं कृतम् ॥ १४. फ-०प्राणाना । च-प्राणोता । प्र म ल$_{1}$ ल$_{2}$-०प्रणीता । १५. रा-ज्ञातयोर् । १६. अ-प्रच्छन्नहृदया घोरा ज्ञातयो नो भयावहाः-। १७. फ च ब म ल$_{2}$-उपायमेते वक्ष्यन्ति । रा-उपायमेते वक्ष्यन्ति । प्र-उपायम्येन वेक्ष्यन्ति । ल$_{1}$-उपायमेते वेक्ष्यन्ति । १८. आ-ग्रहणं । प्र-ग्रहेण । १९. अ-नात्र । २०. आ-भयं । २१. प्र-ज्ञातिभिश्च । २२. रा प्र ब म ल$_{1}$ ल$_{2}$-सदोत्कृष्टतरं । आ-सदा कष्टभरं । च अ-सदा कृष्टतरं । २३. आ च अ-मम ॥ २४. आ-सम्पन्नं । फ-सम्पत्तिः । २५. फ प्र ब ल$_{1}$ ल$_{2}$ अ-स्त्रीषु चापल्यं । रा-स्त्रीषु चापल्यं ॥

न ते प्रियं हि तत् तात यद् अहं लोक-सत्कृतः ।
[१० ]ऐश्वर्यम् उप-यातश् च रिपूणां मूर्द्धनि स्थितः ॥४८॥ [१०
अन्यस् तु यदि माम् एवं ब्रूयाद् वाक्यं निशा-चरः ।
१३] अस्मिन् मुहूर्त्ते न भवेत् त्वां तु धिक् कुल-पांसनम् ॥४९॥[१३
नाऽहं त्वां हन्तुम् इच्छामि रक्षेन्द्र धैर्यम् इहाऽऽत्मनः ।
N] हतस् ते स्वयम् एवाऽऽत्मा ब्रुवतां राघव-स्तवम् ॥५०॥[N
दुर्-जनेनोच्यमानानि वचांसि मधुराण्य् अपि ।
N] अकाल-कुसुमानीऽत्र त्रासं सं-जनयन्ति मे ॥५१॥ [N
इष्टस् ते यदि काकुत्स्थो वि-भीषण हिते रतः ।
N] निर्-गच्छ विषयाद् अस्मान् न त्वां द्रष्टुम् इहोत्सहे ॥५२॥ [N
दुर्-जनः परि-हर्त्तव्यो विद्ययाऽलंकृतोऽपि सन् ।

---

१. फ-प्रियमिदं तावयदहं । च अ-प्रियमिदं मापयदहं । रा प्र य म ल$_1$-प्रियमिदं प्रायो यदहं । ल$_2$-प्रियमिदं प्रायो यदयं । २. फ-॰सत्कितम् । च प्र य म ल$_1$ ल$_2$-॰सत्कृतम् । ३. आ-अभि॰ ज्ञातं । च-उपजातम् । रा प्र य म ल$_1$ ल$_2$ अ--उपजातम् । ४. फ-मूर्द्धन्यवस्थितः ॥ ५. च रा य ल$_1$ अ-अन्यस्त्व । प्र म-अन्यश्च । ६. रा-किंचित् । प्र य म ल$_1$-कश्चित् । ७. च-सुमुहूर्त्ते । ८. आ-क तु वै कुलपांसनः । अ-त्वां विना कुलपांसनः ॥ ९. च-नाहमत्र । अ-न त्वं । १०. अ-हन्तुं मया शत्रो । ११. फ-रक्षनधर्मम् । १२. फ-॰त्मा हि ब्रुवता । च प्र य म ल$_1$ ल$_2$-॰त्मा ब्रुवतो ॥ १३. य ल$_2$-॰कुसुमान्येव । १४. च-त्रास । १५. आ-५१-५२-तमश्लोकौ न स्तः । १६. य म ल$_1$-काकुत्स्थो । १७. प्र-त्वं । १८. अतः परं-अ रा प्र च म ल$_1$ ल$_2$-इत्यार्षे रामायणे सुन्दरकाण्डे विभीषणपरित्यागो नाम सर्गः । ततः परमधिकश्च पाठः-फ अ रा च य म प्र ल$_1$ ल$_2$-ततस्तं कोपसंपूर्णं मोहात्पथ्यमिव श्रिया रावणो मधुरं वाक्यं बभाषे स विभीषणम् ॥ १९. आ रा च-॰ष्टो यदि ।

---

१ फ अ- रावणं । २. फ अ- विभीषणः ।

N] मणिना भूषितः सर्पः किम् असौ न भयं-करः ॥५३॥ [N

इति तस्य वचः श्रुत्वा महात्माऽसौ वि-भीषणः ।

११उ] मन्त्रि-मध्ये स्थितः श्रीमान् इदं वचनम् अब्रवीत् ॥५४॥ [N

सुहृदा हित-कामेन वाक्यम् उक्तं दशाऽऽननं ।

१२] न गृह्णन्ति दुर्-आत्मानः कालस्य वशम् आ-गताः ॥५५॥[२१

न प्रियत्वाद् गुणानां संचो राघवस्य ब्रवीमि ते ।

N] हितोऽर्थं राक्षसेन्द्रस्य मया वाक्यम् उदा-हृतम् ॥५६॥ [N

यदि नाऽर्थ-हितं तत् ते मनसो वाऽपि न प्रियं ।

N] मन्त्रं ज्ञात्वा मया प्रोक्तं वाक्यं राक्षस-संसदि ॥५७॥ [N

मया तेन हितं वाक्यं राक्षसेन्द्रे महा-बले ।

N] इह प्रोक्तं सुहृद्-वाक्यं तस्मिन् काले स्मरिष्यसि ॥[22]५८॥[N

---

१. प्र च रा-तन्त्वं: । २. फ नास्ति । श्र-५०-शचमश्लोकात्परं पठित: । ३. फ-उक्तवाक्ये दशग्रीवे जातकोपो विभीषण: । श्र-उक्तवाक्यं दशग्रीवं जातकोपो विभीषण: । ४. श्र-ततः । ५. फ-हितकामेन । रा-०कामेण । ६. च-वाक्यं चोक्तं । रा-वाक्यमुक्त । ७. रा-दशानन: । ८. श्रा-गृह्णाति दुरात्मा च । ६. रा-वसम् । १०. श्रा-मागत: ॥ ११. फ च रा प्र घ म ल$_1$ ल$_2$ श्र-गुणं तस्य । १२. फ-हितार्थे । रा-हितार्थं । १३. फ-धर्ममेवैतत् । च-राक्षसेन्द्र तत् । रा-राक्षसेन्द्र तत् । घ म ल$_1$ श्र-राक्षसेन्द्रैतत् । प्र-राक्षसस्यैतत् ॥ १४. श्रा-०हितं तत्र । प्र व-नैव हितं ते तु । म ल$_1$ ल$_2$-नैव हित । श्र-नार्थे हितं त० । १५. श्र-मन्यसे स्वाप्रियं वचः । १६. फ-मंत्रिजिता । प्र च रा व-मंत्रज्ञत्वात् । १७. श्रा-राक्षसादि ॥ १८. श्रा-नावाहितं । १९. प्र श्र-राक्षसैश्च महाबलै: । २०. श्रा म-इति । २१. म-सुभावात् । २२. प्र रा-नास्ति ॥

स-वादेनाऽपि रामेण वानरैश् च महा-बलैः ।[1]
N] भ्राऽऽस्तैर् मन्त्रोप[2] दिष्टैश्[3] च यथा यैर् मन्त्र्यते[4] हितम् ॥५९॥ [N
यदि राजा दश-ग्रीवैः[5] श्री मान् नित्योत्थितो भवेत्[6] ।
N] नि-चरेयुस्[7] तदा हृष्टा राक्षसाः[8] पृथिवी-तले ॥६०॥ [N
उक्त-वाक्ये[9] दश-ग्रीवो[10] जात-कोपो वि-भीपणे[11] ।[12]
अथ त[13] ज्ञापयामास प्र-हस्त राक्षसेश्वरः ।
N] राज्यान् मम परि-भ्रष्टो दिशो यातु वि-भीपणः ॥६१॥ [N
एवम् उक्तस् ततो राज्ञा प्र-हस्तो वाहिनी-पतिः ।
N] उत्थापयामास तदा रावणस्य यवीयसम् ॥६२॥ [N
न शक्य भवता स्थातु गच्छ या ते[17] गतिर् मता ।
N] क्रुद्धस् ते रावणो राजा राक्षसांश् च महा-बलैः ॥६३॥ [N
प्र-हस्तस्य वचः श्रुत्वा रावण रावणाऽनु जः ।
N] अब्रवीत् परुष वाक्य भीम-कर्मा वि-भीपणः ॥[21]६४॥ [N

---

१ फा-सवादमवापि । म च ल१ ल२-विरोध जाह । अ-सवाद नापि । २ अत परमधिक पाठ—च ब-मया तव हित वाक्य राक्षसेन्द्र महाबले । प्र रा-नास्ति । ३ प्र-०दिष्टैश् । ४ ल२-मयैं मन्त्रते । फ-यथा या मन्यत । च रा-यथा यैर्मन्त्रते । ब-सैर्मन्त्रित । प्र-तैर्मन्त्र्यते । ल१ म अ-तैमन्यते । म अ-यो मन्यते ॥ ५. आ फ प्र-०ग्रीव । ६ आ-नित्याभयोत्थित । फ-नित्योद्यतो भवेत् । म य रा-नित्य स्थितो भवेत् । प्र-इत्यर्थतो भवेत् । ७ आ-विचारेयुस् । ८ प्र-बलवत्तरा । ल२-कामरूपिण ॥ ९ च-०व वयो । १०. आ-०ग्रीव । म च रा म ल१ ल२-०ग्रीव । ११. आ ल२-विभीषण । १२ फ-नास्ति । १३ फ अ-त्वाज्ञाप० । रा प्र-सन्तापयामास । म म ल१-साप० । १४ रा प्र व ल१ ल२-अय मत्त ॥ १५ प्र च र य म ल१-उक्त । १६ ग-०यशम् ॥ १७ फ-रे । १८ च-मान् । १९ म-राक्षस । २० आ-०बल ॥ २१ ल१-नास्ति ॥

निर्-गमिष्याम्य् अहं राजन् यदीऽदं तव सु-प्रियम् ।
N] अ-प्रमादश् च लंकायां कर्तव्यो राक्षसेषु च ॥६५॥ [N
अथवा किं करिष्यन्ति राक्षसा नगरी च ते ।
N] रक्षस्वाऽऽत्मानम् एवाऽद्य वानरा हि महा-बलाः ॥६६॥ [N
क्षिप्त्वा शृङ्गाणि शत-शः पाद-पांश् च शिलाऽऽयुधाः ।
N] लंकां सं-चूर्णयिष्यन्ति स-प्राकारां स-तोरणाम् ॥६७॥ [N
इत्य्-उक्त्वा परुषं वाक्यं जात-कोपो वि-भीषणः ।
१४] उत्-पपात गदा-पाणिश् चतुर्भिः सचिवैः सह ॥[13] ६८॥[१७
अब्रवीच् च पुनर् वाक्यं जात-कोपो वि-भीषणः ।[15]
१८] अन्तरिक्षे स्थितः श्री-मान् भ्रातरं धन-दाऽनुजम् ॥६९॥[१८
सत्यं भ्राताऽसि मे राजन् ब्रूहि मां यद् यद् इच्छसि । [१९
१९] इदं तु परुषं वाक्यं न क्षमाम्य् अ-हितं तव ॥७०॥ [२०उ
सु-नीतं हित-कामेन वाक्यम् उक्तं दशाऽऽननं ।

---

१. आ-यदिदं । २. रा-सप्रियम् । ३. आ-अप्रमादश्च लङ्कायाः । फ-०दश्च लङ्कायाः । प्र-अप्रमादाश्च लं० । अ-अप्रमादस्तु लं० । ४ प्र-वर्तव्यो । ५. आ च रा व $ल_1$-राक्षसेश्वर । प्र $ल_2$ म-राक्षसेषु च (श्च) ॥ ६. अ-रक्ष आत्मानम् । ७. फ अ-एव रं । प्र-एवाद्य ॥ ८. आ-क्षिप्ताः । ९. रा फ व-शृङ्गानि । १०. प-संपूरयिष्यन्ति । ११. आ-सप्राकारो ॥ १२. आ-सचिवैः । १३. $ल_1$ अ-नास्ति ॥ १४. रा प्र च य ॥ $ल_2$-ततो । १५. रा-जातकाम । १६. $ल_1$ अ-नास्ति । १७ प्र-क्रन्तरिक्षास्थितः । प्र-अन्तरिक्षे ततः । १८ आ-धनदानुजम् । रा-धनदानुजम् ॥ १९. आ रा-स्थितं । २०. रा $ल_1$ $ल_2$-भ्रातासि । २१. फ-यद्यदीच्छसि । रा-यद्यपि (दि)च्छति । २२. रा च प्र म $ल_1$ $ल_2$-क्षमामि हितं । य-क्षमामि हिते ॥ २३ आ-सुनीतहितकामेन । फ-सुनीतहित० । २४. रा-दशानन ।

२०] न गृह्णन्ति दुर्-आत्मानः कालस्य वशम् आ-गताः ७१॥[२१
सु-लभाः पुरुषा राजन् सततं प्रिय-वादिनः ।
१६] अ-प्रियस्य तु पथ्यस्य वक्ता श्रोता च दुर्-लभः ॥७२॥ [२२
बद्धस् त्वं काल-पाशेन सर्व-भूताऽपहारिणा ।
२१] वि-नश्यमानस् त्याज्यस् त्वं प्र-दीप्तं शरणं यथा ॥७३॥ [२१
दीप्तैः पावक-सङ्काशैः शरैः कांचन-भूषणैः ।
२३] न त्वाम् इच्छाम्य् अहं द्रष्टुं रामेण नि-हतं रणे ॥७४॥ [२४
शूराश् च बल-वन्तश् च कृताऽस्त्राश् च नरा रणे ।
१९] काल-पाशेन सीदन्ति वालुका-सेतवो यथा ॥७५॥ [२५
वि-गुणोऽपि हि चेद् राजा सहायैः स्युर् गुणोत्तमैः ।
N] तत्राऽपि युक्त्या नि-वसेद् गुणाऽपेक्षो न संशयः॥७६॥[N
N] तस्मात् त्वां मन्त्रिभिः सार्द्धं हित्वा दोष-समन्वितम् ।
रामम् एव गमिष्यामि शरणं राक्षसाऽधि-प ।[N

---

१. फ प्र-गृह्णति । रा-गृह्णति ॥ २. आ-स वं व । ३. फ च रा प्र ब म $ल_1$ $ल_2$-च । ४ रा-दुर्लभाः ॥ ५. अतः परमाधिकः पाठः-च रा प्र ब म $ल_1$ $ल_2$ अ-स्वयं स्कन्धावसक्तेन बुद्ध्यस्व हितमात्मनः । ६. रा-साजम् । ७. फ-सदन ॥ ८. अ-दीप्तपाव०० । ९. अ-कनकभूषणैः । रा प्र ब म $ल_1$ $ल_2$-काञ्चनभूषितैः । १०. आ-शरम् ॥ ११. अ-श्रताखाः । १२. आ-नरा रणे । फ-च रणे रणे । रा-च नरान् रणे । १३. फ म-कालाभिपन्नाः । अ-कालाभिपन्नाः । १४. प्र-वालुकाः सेतवो ॥ १५. प्र-भवेद् । १६. रा-सहायास्स्युगु० । फ अ-०याः स्युर् गुणोत्तराः । १७. आ-तत्रापि युक्ता निवसेद् गुणोपेता महोदयम् । फ-तच्चापि युक्ता निवसेद् गुणोपेता महोदयम् । च $ल_2$ अ-तत्रापि युक्ता निवसेद् गुणापेक्षा (अ-क्षो) न संशय. । रा घ-तत्रापि युक्ता नि वसेद् गुणापेक्षो न संशयः ॥ १८. फ-दोषसमुद्भवम् । ब-दोषसमुद्भवम् । १९. आ-०धिपः ।

२२] चतुर्भिर् एव संचिवैः सहितः क्षणदा-चरैः ॥७७॥ [१७३

आत्मानं सर्व-था रक्ष पुरीं चेमां स-राक्षसाम् । [२६३

२४] स्वस्ति तेऽस्तु गमिष्यामि सुखी भव मया विना ॥७८॥ [२७

नूनं न ते रावण कश्चिद् अस्ति

रक्षो-निवासेषु सुहृद् सखा वा ।

हितोपदेशस्य समः प्र-वक्ता

N] यो वारयेत् त्वां स्वयम् एव पापात् ॥७९॥ [२८

गताऽऽयुषं त्वां विपरीत-बुद्धिम्

निः-संशयं राक्षस लक्षयामि ।

यो मां हितं पथ्यम् इदं ब्रुवन्तं

N] न मन्यसे राक्षस वीर-मध्ये ॥८०॥ [N

निगृह्य-मान(ण)स्य मया हितैषिणा

न रोचते वाक्यम् इदं निशा-चर ।

परीत-काला हि गताऽऽयुषो नरा

२५] वचो न गृह्णन्ति सुहृद्भिर् ईरितम् ॥८१॥ [२९

इत्यार्षे रामायणे सुन्दर-काण्डे विभीषण-परित्यागो नाम नवतितमः सर्गः ॥९०॥

---

१. आ प्र-सचिवैः । २ प्र-०करैः ॥ ३. ल₂ अ-सर्वदा । ४. अ-चेना सराक्षसीं । ५. इतोऽग्रे 'च' पठति-खरमारीचवहन्ता नूनं त्वं यमसादनम् । ६. आ-निरामय । प्र रा य म ल₁ ल₂-निरामयः ॥ ७. प्र च रा ल₁ ल₂ अ-एव । ८. आ ल₁-न मन्त्रवक्ता । रा च प्र य म ल₂-सुखप्रवक्ता । अ-सुख प्रवक्ता । ९. रा-ये । १०. च-वारये त्वांस्वयम् । रा-वारयं त्वां । प्र-वारये त्वां । ११. च-पापान् ॥ १२. य म ल₁ ल₂ अ-त्वा । १३. फ-निश्शंसयं । १४. अ-मां खलु ॥ १५. आ रा-०माणो हि । फ-०मानस्य । १६. फ-मया हि हितै० । रा-या हितै० । १७. व-नं रोचये । प्र रा ल₁ ल₂-न रोचये । १८. फ-परीतकाला । प्र-परेत० । १९. रा च ब म ल₁ ल₂-नरा गतायुषो । २०. प्र रा-निगृह्णन्ति । २१. च-इंङ्गितम् । व रा-ईरिताः ॥ २२. आ-आर्षे । २३ ल₃ अ-नास्ति । २४. फ अ-०णवाक्यं । रा प्र व म ल₁-०षणत्यागो ॥

इत्य्-उक्त्वा प॑रुषं वाक्यं रा॑वणं रावणाऽनु-जः । [१पू

१] क्रोध-संरक्त-नयनं स-संध्यम॑ इव तोय-दम् ॥१॥ [N

तरङ्ग-कुटिलां लोलां भृकुटीं भृश-दारुणाम् ।

२] कृत्वाऽऽसीनं निर्-ईक्षंत प्रासादाऽग्रम॑ अ-मर्षणम् ॥२॥ [N

अभि-वार्य ततो भूमौ क्रोध-पर्याकुलेक्षणः ।

३] चतुर्भिः सचिवैः सार्धं निश्-चक्राम वि-भीषणः ॥३॥ [N

४पू] स मातरं पुनर् द्रष्टुं तत्र सर्वं विनि-वेदितुम् ।

४N] आ-जगाम मुहूर्तेन जननीम् अव-लोककः ॥४॥ [N

सं-विश्य महो-भोगः सर्व-कृत्यं महा-गृहम् ।

हस्त्य्-अश्व-रथ-सम्पूर्णं नाना-योध-समाकुलम् ।

N] परश्वध-समाकीर्णं चाप-पाणि-विभूषितम् ॥५॥ [N

दिव्य-रत्न-समाकीर्णं प्रासाद-शत-शोभितम् ।

N] नित्यं बर्हिण-संघुष्टं प्रमदा-जन-संकुलम् ॥६॥ [N

---

१. आ-परमं । २. च-नास्ति । ३. च-संध्यम् ॥ ४. आ-•कुटिला कुर्वन् । ५. आ फ च रा ल$_2$-•भृकुटी । रा घ म-भृकुटीं । ६. च-निरीक्षन्ति । ७. च-•द्रामममर्पणम् । आ-अमर्पणः ॥ ८. फ-•वंप । ९. आ-सचिवैः सार्धं । ल$_2$-सचिवैः साकं । १०. अ-ततो दृष्ट्वा । अ आ घ प्र म ल$_1$ ल$_2$-दृष्ट्वा । रा-दृष्टा । ११. आ-विनिवेद्य । घ विनिवेदितुम ॥ १२. फ अ-अत आरभ्य ऋयशीति-तमश्लोकं यावत्पाठो नास्ति ॥ अत्र आजगाम जगामेति साम्यकारितः पाठभ्रंशः प्रतीयते । १३. आ ल$_1$-प्रविश्य । १४. रा-•प्रासमकक्षं । म प्र ल$_1$ ल$_2$-सप्तकक्ष्य । १५. व-महम् । १६. रा-•योग• । १७. रा-चा...णि ॥ १८. प्र-दिवि रत्न• ॥

पुण्याऽहं-स्व-घोषेण   सर्वतः   प्रति-नादितम्   ।
N] दीप्य-मानं[2] श्रियां[3] जुष्टं[4] यथा वै वैष्णवं[5] पदम् ॥७॥ [N
दीयतां योच्यतां चेति श्रूयमाणं[6]-महा-स्वनम् ।
N] पुरंदर-गृह-प्रख्यं   कुवेर-सदनोपमम्[7]   ॥८॥ [N
आ-वृतं कल्प-वृक्षैश्[8] च समन्तादू उप-शोभितम् ।
N] पुन्नाग-वकुलाऽऽकीर्णं[9] कदली-खंण्ड-मण्डितम् ॥९॥ [N
दीर्घं[10] कलापि-बहुलं नाना-पक्षिभिर् आ-वृतम् ।[11]
N] सर्व-दोप-विनिर्मुक्तं[13] गृहैः काञ्चन-वेदिभिः ॥१०॥ [N
स प्र-विश्य महा-प्राज्ञो राक्षसेन्द्रो वि-भीषणः ।
N] अनेकैर् वर्ष-वेंरकैः[14] स्थविरैः[15] सर्व-तो वृतम् ।
जटा-वल्कल-संवीतैर् वेत्र-झ(रिं[16])झर-पाणिभिः ॥११॥ [N
N] पादाऽऽहति-सुसंविग्नो[18] निश्वसन्न् उरंगो[19] यथा ।
वाष्प-व्याकुल-ताम्राऽक्षः स्खलमानः क्वचित् क्वचित्[20]।
N] अ-विष्टंभेन[21] तु स्वेन मन्युना च परि-प्लुतः ॥१२॥ [N
शोक-सागर-मध्य-स्थो   नाना-दोप-विमानितः[22]   ।

१. आ–पुण्याहस्व० । घ–पुण्याहरथ० । २. च–०माणं । ३. प्र–श्रियं । ४. च–जुष्टं ॥ ५. प्र–याचितां । ६. आ–सूयमान० । प्र–श्रयमानं म० । ७. आ म म$_1$–पदम् ॥ ८. आ–वृक्षैस्तु । ९. प्र–पुन्ना गवकु० । रा–०वकुलाकीर्णं । १०. प्र म ल$_1$–०पण्डमण्डितम् ॥ ११. ब रा म ल$_1$ ल$_2$–वथां । १२. प्र–नास्ति । १३. रा–०विनिमुक्तं ॥ १४. आ–वर्षशतसैः । १५. ल$_2$–स्थविरैर् । रा–स्थविरैस् । १६. ल$_2$–उपशोभितम् । १७. आ–०जरजरपा० । ब म ल$_1$–०झझरपा० । १८. आ च–पादेन हतसंविग्नो । प्र म–०हतसंविग्नो । १९. आ व रा–निश्वसन्तुरगो । च–निश्वसत्तुरगो । २०. च ल$_2$–क्वचित्...। २१. च–अवष्टंभेन तु । रा प्र व म ल$_1$ ल$_2$–अवष्टंभेन हि । २२. प्र ब व म ल$_1$ ल$_2$–दोपावमानितः ।

N] भ्रात्रा ज्येष्ठेन क्रूरेण पापेन हत-बुद्धिना ॥१३॥ [N
दर्दर्श मातरं तत्र निर्-मलां जाह्नवीम् इव ।
N] संवीत-शुक्ल-वसनां हस-गद्गद-भाषिणीम् ॥१४॥ [N
वराऽऽसन-गतां देवीं भूषणैर् उप-शोभिताम् ।
N] सर्व-लक्षण-संपन्नां जननीम् अव-लोक्य ताम् ॥१५॥ [N
पादयोर् न्य्-अपतद् दूराद् छिन्न-मूल इव द्रुमः ।
N] उद्-धृत्य बाहू विपुलौ धर्मात्मा स वि-भीषणः ॥१६॥ [N
तम् आर्त्त-रूपं दृष्ट्वैव कैकसी जात-विस्मया ।
N] स्वाऽङ्कम् आ-रोपयामास वि-लपन्तम् अ-चेतनम् ॥१७॥ [N
मूर्ध्नि चैनम् उपाऽऽघ्राय इदम् आह शुचि-स्मिता ।
N] किम्-अर्थं त्वं नर-श्रेष्ठ पूर्ण-चन्द्र-निभाऽऽनन ॥१८॥ [N
पद्म-पत्र-विशालाऽक्ष गज-विक्रम-गामिक ।
N] दुन्दुभि-स्वन-निर्घोष मर्त्त-वारण वारण ॥१९॥ [N
धर्म-बुद्धे महा-प्राज्ञ केनाऽसि त्वं वि-मानितः ।
N] ब्रूहि कल्प-समाचार पितुर् वृत्त-व्रते स्थितं ॥२०॥ [N

---

१. आ रा व-भ्राता । २. प्र घ म ल$_1$ ल$_2$-पापेन क्रूरेण । रा-नास्ति ॥ ३. आ-वध्रो मातृर् । ४. आ-जाह्नीम् । ५. आ-शुक्लसंवीत० । ६. आ च-०सम्पूर्णां । ७. च-अवलोक ॥ ८. रा-पादयो । ९. रा-द्रुमम् ॥ १०. आ च-दृष्ट्वै कैकशी । ध-दृष्ट्वा वै केकसी । म ल$_2$-केकसी । ११. रा-जात विस्मया । च-०विस्मय० । १२. घ-०न्तं विचेतनम् । १३. ल$_1$-नास्ति ॥ १४. आ-०घ्रायेदम् । १५. आ-किमर्थस्त्वं । व-किमर्थ त्वं ॥ १६. रा घ म ल$_1$-०विक्रान्तगा० । प्र-०विक्रान्तगामि च । ल$_2$-०विरां...गमिक । आ-०गामिकं । १७. रा घ म-दुन्दुभि० १८. आ-मत्त० । १९. फ घ-नास्ति ॥ २०. प्र-०बुद्धे । २१. रा ल$_1$-सधर्मसमाचार । प्र च-धर्मस० । म-धर्मसमाचारं । ल$_2$-धर्मसमाचारः । २२. आ-पितृ । २३. रा प्र घ म ल$_1$ ल$_2$-स्थितः ।

पद्म-योनि-कुले जातः स त्वं केनाऽसि दुर्-मनाः ।
N] ब्रूहि कार्यं विशालाऽक्ष भयं कस्माद् उपाऽऽगतम् ॥२१॥ [N
महेश्वराद् वा विष्णोर् वा देवेन्द्राद् वा पिता-महात् ।
N] प्रेत-राजाऽधिपाद् वाऽपि कुबेराद् वाऽपि बुद्धि-मन् ।
सर्व-देव-समूहाद् वा सर्वम् आ-ख्यातुम् अर्हसि ॥२२॥ [N
अथवा कौ(?को) सलेंद्राद् वा रामान् नय-विशारदात् ।
N] यस्याऽऽनीता च सा देवी सीता सुर-सुतोपमा ॥२३॥ [N
एवम् उक्तस् तु मात्रा स राक्षसेंद्रो वि-भीषणः ।
N] आ-ख्यातुम् उप-चक्राम यथा-वृत्तं च राक्षसीन(?म्) २४॥ [N
भयाद् गद्गदया वाचा ह्रिया किञ्चिद् अवाङ्-मुखः ।
N] सं-स्तभ्य च तथाऽऽत्मानं धैर्यं बुद्धौ निवेश्य च ॥२५॥ [N
यश् चेंद्रिय-गृ(?ग्र)हे युक्तं(?क्तः) सं-स्तभ्य मनसा गिरम् ।[21]
N] स[22] वक्तुम् उप-चक्राम जनन्यै(?न्याऽ)[23]वि-तथं वचः ॥२६॥ [N

---

१. आ–नेता स्यारत्वं । २. रा–दुर्मनः । ३. रा–कर्म ॥ ४. च–विशोर्वा । ५. आ व म च रा–इंद्राद् । ६. आ–॰मान् । ७. अ प्र–कौशलेंद्राद् । ८. आ–॰विशारदान् । ९. आ च–यस्याद्वीता । रा ल१–यस्य नीता । १०. प्र–या । ११. आ–॰सतोपमा ॥ १२. रा प्र व म ल२–उक्तः स मात्रा तु । ल१–उक्त्वा स माया तु । १३. रा–यद्वा वृत्तं तु । च व म ल१–यथावृत्तं तु । १४. च म ल१–राक्षसान् । व रा–राक्षसात् । प्र ल२–राक्षसीव् । १५. आ–भयगद्गदया । च रा व म ल१ ल२–भयगद्गदया । १६. रा प्र व म ल१ ल२–अधोमुखः । १७. च–संस्वाभ्य । आ । व–संस्तंभ्य । १८. रा–धैर्यंतुवत्रा । च म प्र ल१ ल२–धैर्यहृया । १९. व–निवेद्य । २०. च–गिरः । २१. प्र रा व म ल१ ल२–नास्ति । २२. आ–सर्वं । २३. रा व–सुनृतं । प्र म ल१ ल२–सूनृतं । 'जनन्यै अवितथम्' इत्यत्र सन्धिरार्षो द्र० ॥

श्रुणु मातर् ममोऽवद्यं येन् मया दुरनि(?नुं)-ष्ठु(?ष्ठि) तम् ।
N] रावणस्य महा-भागैर् मंत्र-काल-विनिर्णये ॥२७॥ [N
उक्तः स तु मया देवि यथा सीता प्र-दीयताम् ।
N] पादौ तस्याऽथ सं-गृह्य यथा-वद् अभि-वाद्य च ॥२८॥ [N
रामेण तु महा-बाहो न वैरं कर्तुम् अर्हसि ।
N] अन्यच् च श्रृणु मे राजन् यथा वक्ष्यामि सु-व्रत ॥२९॥ [N
मारीचो येन नि-हतः कवन्धश् च महा-बलः ।
N] विराधश् च महा-तेजा खरश् च स-गणो हतः ॥३०॥ [N
वाली येन हतो वीरः सप्त तालाश् च भेदिताः ।[11]
N] विरूपा च कृता येन भगिनी रावणस्य सा [12] ॥३१॥ [N
एवं-विधानि कर्माणि श्रूयन्ते यस्य रावण ।
N] तस्य मुंच महा-बाहो पत्नीं रामस्य धीमतः ॥३२॥ [N
एवम् उक्तो मया देवि क्रोधेन कलुषी-कृतः ।
N] धिग् इत्य्-एव च मु(?उ)क्त्वा मां निर्-भर्त्स्य च पुनः पुनः ३३
ताडितोऽस्मि सभा-मध्ये पादेनाऽशनि-वर्चसा ।
N] पुनश् चोक्तोऽस्म्य् अहं तेन तत्रे गच्छेति मा चिरम् ।

---

१. च रा व म ल₁-मया वाच्य । प्र ल₂-यथा वाच्यं । २. प आ ल₁-यद्वाक्यं । ३. च रा प्र ब म ल₁ ल₂-हितनिष्ठुरम् । ४. आ-०भागे । ५. रा-यथावाद्भिवाद्य । ६. आ-अन्यच्च ॥ ६. आ-निहितः । ८. म-कबन्ध म० । ९. रा म ल₁-गतः ॥ १०. रा-वेदिताः । प्र-भेदताः । ११. आ प-वाली ह्येकेन बाणेन प्रेषितो यमसादनम् । १२. प्र ल₂-०नी......नस्य च । १३. आ-तस्य धर्मात्मनः पत्नीमिमां मुच्येति तां विभो ॥ १४. प्र व म ल₁ ल₂-कार्याणि । १५. रा-पत्नी ॥ १६. प-धिक् धिगित्येवमुक्त्वा । प्र रा व म ल₁ ल₂-धिग्धिगेवमुक्त्वा । संग्भत्स्यातियशितः द्र० । १७. रा-मा । १८. प रा-निर्भत्स्य । प्र-निभत्स्यं । १९. प्र य म प ल₁ ल₂-चोक्तोस्मि तेनात्र गच्छ ग० । रा-चोक्तोऽस्मि तन्मत्र ।

भ्रष्ट निर्-लज्जे नीचेति नै त्वां निर्न्ये यम-श्रेयम् ॥३४॥ [N
शत्रुणा प्र-हितो नूनं शत्रु-पत्त-प्रशंसकः ।
N] रामं चाऽनु-गतं रक्तं न त्वां द्रष्टुम् इहोत्सहे ॥३५॥ [N
एवम् उक्तोऽस्मि परुषं रावणेन शुभाऽऽनने ।
N] रामम् एवाऽनु-गच्छामि त्वां तु द्रष्टुम् इहाऽऽगतः ॥३६॥ [N
यदि मे दुर्-अनु क्रान्तं यदि वा दुर्-अनुष्ठितम् ।
N] यदि दुश्-चरितं मेऽद्यं ततो गृह्य प्र-शाधि माम् ॥३७॥ N]
एवम् उक्त्वा तदा तेन माता तस्य महाऽऽत्मनः ।
N] नाऽशकद् भाषितुं सु-भ्रूर् मृण्मयाऽ(?यी)व-स्थिता तदा ॥३८
ततः संज्ञाम् उपाऽऽगम्य मुहूर्ताद् इव भामिनी ।
N] उवाच रुदती वाक्यं वि-भीषणम् इदं तदा ॥३९॥ [N
· एवम् एतन् महा-बाहो यथा वदसि पुत्रक ।
N] विद्धि नूनं वि-नाशं च सर्वेषां समुप-स्थितम् ॥४०॥ [N
स्मारितोऽस्मीऽह वचनं पुत्र तद् विपुलं त्वया ।

---

१. रा प्र-भ्रष्टः निर्लज्ज । आ-निर्लज्ज । २. आ-नीचेम । ३. च रा प्र घ म ल$_{1}$ ल$_{2}$-शुभं । ४. रा-निस्येम० ॥ ५. घ-०विहि-सकः । ६. च रा-च तुगतं । आ-सानु० । ७. ल$_{1}$-भक्तं । ८. रा-द्रष्टुमिहमागतः । ९. ल$_{2}$-दुरति० । १०. प्र ल$_{2}$-मे । ११. आ-महं । ल$_{1}$-मन्ये । १२. च रा-प्रसाधि । आ-माधि ॥ १३. आ च रा प्र घ ल$_{2}$-भाषितं । १४. आ रा ल$_{2}$-सुभ्रू । १५. आ-मृन्मयाः । च घ-मृन्मयी व्यवस्थिता । रा-मृणमयी व्यवस्थिता । प्र-मृण्मयीव व्यवस्थिता । ल$_{1}$ म-मृन्मयीव व्यवस्थिता । ल$_{2}$-मृन्मयी चाव्यवस्थिता । १६. च व म ल$_{1}$ ल$_{2}$-नास्ति ॥ १७. ल$_{2}$-०त्तांदि...मा० । १८. प्र-रुदिती ॥ १९. आ-विशालाक्ष । २०. आ-०स्थितः । २१. आ-स्मारितास्मि । प्र ल$_{2}$-०सीति । २२. आ ल$_{1}$-पितृ वद् । २३. आ च रा घ म प्र ल$_{2}$-वचः ।

N] ब्रह्मणश्[1] च महा-बाहो तच् छृणुष्व समा-हितः ॥४१॥ [N
दश-ग्रीव-प्रभृतिषु जातेषु कुल-नन्दन ।
N] निर्-जितेषु च देवेषु स-शक्रेषु महाऽऽत्मसु ॥४२॥ [N
चिन्तयन्ती कुलस्याऽहं पुत्रं वश-करं शुभम् ।
N] तपस्-विने च पित्रे ते गत्वाऽऽश्रमे-पदं ह्य् अहम् ॥४३॥ [N
स्थिताऽस्मि पुरतो वत्स तव पित्रे महाऽऽत्मने ।
N] वक्तु-कामा विशालाऽक्षं पितरं ते तपस्-विनम् ॥४४॥ [N
ततो मां(?माऽ)धिष्ठितां दृष्ट्वा पुरस्ताद् ऋषि-सत्तमः ।
N] उवाच मधुरं वाक्यं हर्ष-गद्गदया गिरा ॥४५॥ [N
किम् आगमन-कृत्यं ते ब्रूहि, तत्त्वेन शोभने ।
N] एवम् उक्ताऽस्मि ऋषिणा पुत्र बुद्धि-मता तदा ॥४६॥ [N
ततोऽहं वक्तुम् आ-रब्धा प्राऽञ्जलिः प्रणि-पत्य तम् ।
N] आ-गताऽस्मि महा-भाग संशय-च्छेदनाय वै ॥४७॥ [N
तव वाक्येन ये जाताः पुत्रा मम महा-व्रत ।
N] स्व-राज्यं विपुलं भोक्षा लब्ध्वा पैतामहं पदम् ॥४८॥ [N
किंचिच् चिंताऽस्ति संभूता दृष्ट्वा पुत्रं महा-बलम् ।
अ-वध्यं वर-दानेन सर्वैर् अपि दिवौकसैः ।
N] यक्ष-गन्धर्व-नागैश् च पिशाचैर् ऋषिभिस् तथा ॥४९॥ [N

१. प्र–ब्राह्मणस् । २. रा–॰हवः । प्र–॰सतः । ३. प्र–तापस्विने । ४. ल₂–वै । ५. आ–गत्वाश्र॰ । ल₂–गत्वाश्रमपदमह ॥ ६. रा–विसा॰ । ७. रा–॰स्विनम् । च–॰स्विनाम् ॥ । ८. प्र– चक्तु ॥ ९. च–कृते । १०. प्र रा व म ल₁ ल₂–मुनिना । अविवक्षितोऽत्र सन्धिः द॰ । ११. च प्र रा व म ल₁ ल₂–॰मतां । १२. प्र रा य म ल₁ ल₂–त्वर । १३. ल₂–॰पत्यन्तम् । १४. आ–स्वाजयवि॰ । १५. प्र–राज्यं । १६. आ–॰महपदम् ॥ १७. आ–किंचिद्भिन्नास्ति । १८. रा–दृष्टा । १९. आ रा–अवध्यवर॰ । २०. आ–सर्वैरपि । २१. प्र च म–पिशाचैः ऋ॰ ॥

एवं-विधेषु पुत्रेषु जातेषु तव सु-व्रत ।
N] को नु वंश-धरो ब्रह्मंस् तव पुत्रो भविष्यति ॥५०॥ [N
ऊचे मां स महा-बुद्धिः काले धर्म-भृतां वरः ।
N] दुराचार-व्रत-युतो राज्ये स्थास्यति रावणः ॥५१॥ [N
कनिष्ठश् चाऽपि धर्माऽऽत्मा पुत्रो वंश-धरस् तव ।
N] राज्ये स्थास्यति धर्मेण यावद् भूमिर् धरिष्यति ॥५२॥ [N
पुनर् उक्तः स तु मुनिर् मया पुत्र प्रणम्य वै ।
N] उवाच वचनं धीमान् सर्व-ज्ञो बुद्धि-मान् ऋषिः ॥५३॥ [N
शृणु कैकसि यद् वृत्तं ब्रह्मणः सदने शुभे ।
देवानां सन्निधौ भद्रे ऋषीणां च समा-गमे ।
N] यक्ष-किंपुरुषाणां च पितॄणां वाम-लोचने ॥५४॥ [N
गन्धर्वाणां स-नागानां पिशाचानां तथैव च ।
श्रेष्ठानां देव-योनीनां सन्निधौ यद् मया श्रुतम् ।
N] तत् तेऽहं संप्र-वक्ष्यामि परमेष्ठि-वचस् तदा ॥५५॥ [N
रावणेन जितो भद्रे शक्रः सुर-गणैः सह ।
१......................................
तन् मे हृतं महा-राज्यं हस्ताद् बिल्वम् इवाऽऽहितम् ।
N] रावणेन मुनिर्-जित्य वेद्धवा नीतोऽस्मि स्वां पुरीम् ॥५६॥ [N

---

१. रा व म ल१—०करो २. ल१—महान्वय ॥ ३. प्र—स च । ४. प्र—वर । ५. आ—०करस् ॥ ६. आ—एवम् । ७. रा प्र घ म ल१ ल२—भगवान् । ८. आ—कैकशि । रा—कैकयि । ९. घ—वै । १०. घ—०लोचन । ११. आ—पितॄणां च विशालाक्षि यक्ष-किंपुरुषाणमपि । १२. आ—वव ॥ १३. आ रा—जिते । १४. रा—सुर० । १५. अतः परं पाठस्त्रुटित इवाभाति । १६. ल२—मया राज्यं । १७. रा व प्र म ल१ ल२—च निर्जित्य । १८. आ रा व ल२—यदा ॥

वि-मुक्तस् तव वाक्येन निर्-लज्जः पुनर् आ-गतः ।
N] त्रिदशेषु महा-बाहो राज्य-कामो ह्य् अहं तदा ॥५७॥ [N
एतत् ते कथितं सर्वं मम दुःखं तव प्रभो ।
N] त्वं प्रमाणं महा-बुद्धे यन् नः श्रेयस् तद् उच्यताम् ॥५८॥ [N
एवम् उक्तस् तदा ब्रह्मा कौशिकेन महाऽऽत्मना ।
उवाच वचनं सूक्ष्मं सर्व-लोक-हितं तदा ।
N] काले सुर-गुरुर् ब्रह्मा कौशिकाऽऽख्याय शृण्वते ॥५९॥ [N
शृणु कौशिक भद्रं ते यत् त्वां वक्ष्यामि सु-व्रत ।
N] सर्वं श्रुतं मया शक्र तव संग्राम-कारणम् ।
निर्-जितश् चाऽसि सं-ग्रामे तच् च मे विदितं ततः ॥६०॥[N
प्राप्तोऽरिर् दुष्ट-दुर्मेधा रावणो लोक-रावणः ।
N] कृतांत-पाशाऽसि-धरश् चण्डस् तीक्ष्ण-तरो ध्रुवम् ॥६१॥ [N
वर-दान-वलोत्-सिक्तो दुर्-धर्षो रावणो मम ।
N] तद् गच्छाम महा-बाहो विष्णुम् अ-प्रतिमौजसम् ॥६२॥
शंख-चक्र-गदा-पाणिं वरं-चन्दन-भूषितम् ।

---

१. आ-निर्लज्ज । २. च रा प्र ब म ल$_1$ ल$_2$-तव ॥ ३. रा-समदुःखं । ४. प्र रा ब म ल$_1$ ल$_2$-यत्तच्छ्रेयस् ॥ ५. प्र रा ब म ल$_1$ ल$_2$-काश्यपेन । ६. रा प्र ब म ल$_1$ ल$_2$-महात्मा। ७. च रा-शृणुवे । ८. च-यस् । ९. रा-सर्वैः । १०. प्र-शत्रुं । ११. आ च-चापि । १२. आ-तव । १३. च-विदितम तव । १४. प्र-प्राप्तारिं । १५. च-कृतांत पाशासिधरश् । १६. च-चंड । १७. आ-ससितश्चैव मृत्योर्दंतान्तरं गधः । १८. आ-•सिक्तः । १९. आ-दुधर्षसे मयानघ । २०. ब प्र च ल$_1$-त्वं गच्छत मया सार्धं । रा-त्वं गच्छाम । ल$_2$-त्वं गच्छत मया सार्धं । २१. रा ल$_2$-अप्रतिमोजसम् । २२. प्र-वरं च॰।

N] वर-चाप-धरं देवं[1] वीरं[2] श्रीवत्सलक्षणम्[3] ॥६३॥ [N
कौस्तुभोद्-भासित-तनुं श्रियाऽऽलयम्[4] अन्-उत्तमम् ।
N] अतसी-पुष्प[5]-संकाशं पीत-वाससम् अ-च्युतम् ॥६४॥ [N
गरुड[6]-पृष्ठम् आसीनं पुण्डरीक-निभेक्षणम् ।
N] देव-देवं[7] महा-भागं विष्णुं निर्-जरम्[8] अ-व्ययम्॥६५॥ [N
योग-सांख्योपनिषदैस्[9] त्रिदशैः सम्-अभिष्टुतम् ।
पुरुषं परमं विष्णुम्[10] अनन्तं सर्वतो-मुखम् ।
N] धर्म-सेतु-प्रवक्तारं सुराणां च हिते रतम् ॥६६॥ [N
तं[11] गच्छामः[12] हरिं देवं सर्व-देव[13]-नमस्कृतम् ।
N] यद् वि-धास्यति नो नाथस् तत् कार्यम् अ-विशङ्कया॥६७॥ [N
एवम् उक्ताः सुराः सर्वे उत्तस्थुर्[14] अ-मितौजसः ।
N] विमानैः सूर्य-सङ्काशैर् हंस-बर्हिण-वाहिभिः ॥६८॥ [N
ब्रह्माणम्[15] अग्रतः कृत्वा गतास् ते क्षीर-सागरम् ।
N] आ-स्थिता[16] एक-देशे[17] तु समे भूमि-तले तदा॥६९॥ [N
तपस्य् उग्रे महाऽऽत्मानं(ऽनः)योजयंस् तदा सुराः।

---

१. आ रा च य प्र ल$_2$–वीरं । २. च–नाखि । रा य–वर । प्र ल$_2$–देव । आ–धीर । ३. च रा य म ल$_1$ ल$_2$–॰लांछनम् । ४. अनेपद् आर्षः द्र० । ५. रा–अतसिपुष्पसकास । ६. प्र रा य म ल$_1$ ल$_2$–गरुत्मत्पृष्ठम् । ७. आ–॰देवम । ८. च–हृजयम् । रा म ल$_1$–ह्मयम् । ■ ल$_2$– हृदयम् । ९. आ–योगसाख्योप॰ । रा य प्र म ल$_2$–योगिसाख्योप० । १०. आ–विष्म । ११. आ–वद् गच्छाम । प्र ल$_2$–त्वं गच्छथ । १२. रा य म ल$_1$–वयं । १३. आ–सर्वदेवं न० । १४. म च ल$_1$–उत्तस्थौ । १५. आ–ब्रह्मणम । १६. प्र ल$_2$–आगता । १७. आ–तदासुनाः ।

N] आत्मानं ते महाऽऽत्मानं देव-देवं दिदृक्षवः ॥७०॥ [N

ततोऽनेके-शते काले वाग् उवाचाऽशरीरिणी ।

N] दुन्दुभि-स्वन-निर्घोषा हर्षयन्ती दिवौकसः ॥७१॥ [N

उत्तिष्ठ भगवन् विष्णो कुरु कार्यं महा-बल ।

N] देवानां भय-भीतानां अ-भयं दातुम् अर्हसि ॥७२॥ [N

रावणं स-गणं देव त्वं नि-षूदय दुर्-मतिम् ।

N] मानुषं रूपम् आ-स्थाय जहि शत्रुं दुरा-सदम् ॥७३॥ [N

एवम् अस्त्व् इति धर्माऽऽत्मा जातो रघुषु वीर्यवान् ।

N] चतुर्धा वि-भज्याऽऽत्मानं देवश् चक्र-गदा-धरः ॥७४॥ [N

सर्वे ते त्रिदशा जाता वानरीषु महा-बलाः ।

N] ऋक्षीषु च महाऽऽत्मानो देव-पुत्रा मदोत्कटाः ॥७५॥ [N

स एष नृप-शार्दूलो जातो रावण-निग्रहे ।

N] कुलस्य च वि-नाशाय अस्माकं वत्स सांप्रतम् ॥७६॥" [N

तव पित्रा च वि-ज्ञप्तो वंश-स्थित्यै पितामहः ।

N] अस्माकं सं-ततिः कस्माद् अवि-च्छिन्ना भविष्यति॥७७॥[N

---

१. च-०देव । २. आ-गतो देवशते । च रा व म $ल_1$ $ल_2$-गतेऽ० । प्र-गतेऽनेके शते । ३. रा-काले । ४. आ-वागुशरीरिणी । ५. $ल_1$-०निर्घोषा । ६ रा व-०कसाः । ७. रा $ल_2$-भगवान् । ८. $ल_2$-कल्पं । ९. आ-०बलः । च-०बला । १०. रा-निसूदय । ११. प्र-मानुष्यं । १२. $ल_2$-जातोऽयं रघुवी० । १३. रा व म $ल_1$ $ल_2$-विभक्ताऽऽत्मा चतुर्धा च । प्र-विभक्ता चतुर्धा वपुर् । च-०र्धा विभजात्मानं । १४. रा-चक्रं गदा० । १५. प्र-ऋक्षेषु । १६. त्रिदशा-ऽभावादमन्धिः द० । १७. प्र अ-सस्माकं । १८. आ-च स । १९. आ-अतः परं सर्वेत्यारभ्य ०जीवो भविष्यतीत्यन्तः पाठो नास्ति । २०. रा-सन्ततः । २१. $ल_2$-माशाद ॥

तत्र वंश-धरः सम्यग्[1] भविष्यति वि-भीषणः[2] ।
N] नारायणात् प्राऽऽप्त-राज्यो यावच् चंद्राऽर्क-भूमयः ॥७८॥ [N
श्रीराम-वचनाच् चैव चिरं-जीवी[3] भविष्यति[4] ।
N] त्वं चाऽपि ब्रह्मणः[5] प्रोक्तो राजा लंकेश्वरः प्रभुः ॥७९॥ [N
त्वं गच्छ रामं धर्म-ज्ञं लोक-रामं महा-बलम् ।
N] स ते प्राणांस् तथा राज्यं दास्यते रघु-नन्दनः ॥८०॥ [N
यावच् चंद्रश् च सूर्यश् च यावत् तिष्ठति मेदिनी[8] ।
तावल् लंकेश्वरस् त्वं हि एतद् एव मया श्रुतम् ।[7]
N] तव पित्रा मुखोद्-गीर्णं[9] न स्नेहाद् गदितं[10] मया[11] ॥८१॥ [N
तद् गच्छ पुत्र भद्रं ते विजयायाऽरि-सूदन ।[12]
N] अहं चैं[13] स्वस्ति-निरतो[14] तत्र नित्यं महा-बल ॥८२॥ [N
एवम् उक्तस् तु धर्माऽऽत्मा मात्राऽऽपृच्छ्य[15] च तां तदा ।
N] अभिवाद्य चं[16] धर्मेण दैव-पात स[17] रांक्षसः[18] । [N
४३] जगामाऽऽकाशम् आ-स्थाय यत्र रामो महा-बलः ॥८३॥ [१उ

---

१ रा-वंशधर सम्यग् । २. ल१-न संशयः । ३. च-जीवि । ४. च-भविष्यति । ५ च रा प्र व म ल१ ल२-वचैव । ६. आ च-ब्रह्मणाप्युक्तो । ७ रा प्र व-०त्र । ८. व-मेधिनी । ९. रा-०गीर्णं । १० रा प्र च म ल१ ल२-स्नत् स्न० । ११. आ-घादित ॥ १२. अतः परमधिक. पाठ-च रा प्र व म ल१ ल२-स्वस्ति करोतु ते ब्रह्मा त्रिनेत्रश्च महेश्वर । शङ्खचक्रगदापाणि पुराण-पुरुषोत्तम । १३ च-तु । १४ च रा-स्वस्तिरता ॥ १५ आ-पृच्छ वीर्यवान् । च-मातामापृच्छ्य वीर्यवान् । प्र-मात्रापृछ । म ल१-मात्रा पृच्छ । १६ आ रा-स । १७ अविनष्टावोऽसन्धिः द० । १८. रा प्र व म ल१ ल२-राक्षसः ॥

तं मेरु-शिखरोऽऽकारं ज्वलन्तम् इव पावकम् ।
४४] गगन-स्थं मही-स्थास् ते दद्दृशुर् वानरोऽधिपाः ॥८४॥ [२
आत्मना पंचमं दृष्ट्वा सु-ग्रीवो वानराऽधि-पः ।
४७] वानरैः सह दुर्-धर्षश् चिन्तयामास बुद्धि-मान् ॥८५॥ [५
चिन्तयित्वा मुहूर्तं चँ वानरांस् तान् उवाच ह ।
४८] हनुमत्-प्रमुखान् वीरान् इदं वचनम् अब्रवीत् ॥८६॥ [६
एष सर्वाऽऽयुधोपेतश् चतुर्भिः सचिवैः सह ।
४९] राक्षसोऽभ्य् एति पश्यध्वम् अस्मान् हन्तुं न संशयः ॥८७॥ [७
सु-ग्रीवस्य वचः श्रुत्वा सर्वे ते वानरर्षभाः ।
५०] शालान् उत्पाट्य शैलांश् च सु-ग्रीवम् इदम् अब्रुवन् ॥८८॥ [८
व्या-दिशाऽस्मान् वधायैषां राक्षसां वानरेश्वर ।
५१] नि-पतन्तु हता यावद् धरण्याम् अल्प-चेतसः ॥८९॥ [९

१. फ-मेरुशिखराकारं । २. रा-ज्वलनामिव ॥ ३. प्र-मही-स्थस्तु । ४. प्र-ददृशे वानराऽधिपः । च-वानराधिप । ५. प्र-नास्ति । ६. म-दुर्धर्षं ॥ ७ आ-स । ८. प्र. वानरम् । ९. फ अ-सर्वान् । रा-सर्वानिदं । १०. च रा व म ल$_1$ ल$_2$ अ-उत्तमम् ॥ ११. आ-सचिवैः । १२. फ-राक्षसो याति । रा-राक्षसोऽभ्येति । १३. आ फ रा-अस्मां । १४. फ-हन्तुमसंशयम् । १५. च-शाखामुत्पाद्य । आ-उत्पाद्य । फ-उद्यम्य । रा-शाखादुत्पाद्य । प्र व-शाखा उत्पाद्य । अ-शैलानुत्पाद्य । १६. अ-वृक्षांश्च । १७. प्र व-अब्रवीत् । १८. फ-व्यादिशेषां । य रा-व्यादिशयास्मान् । १९. च व रा प्र म ल$_1$ ल$_2$-वधे चैषां । आ-वधायेषां । अ-अस्मानिमान्हन्तुं । २०. आ च-राक्षसां । अ-राक्षसा । २१. रा व-०रः । २२. अ-०ति । २३. आ-सहास्माभिर् । २४. च-धरायाम् । म-धरिण्याम् ॥

तेषां सं-भाषमाणानाम् अन्योऽन्यं स वि-भीषणः ।
५२] सागरस्योत्तरे पारे खे एव संमुख-स्थितः ॥१०॥ [१०

४] युद्धोद्यतेषु धीर-यो वानरेषु स्थितेषु च ।
उवाच स महा-तेजः स्वरेण महता महान् ।
५३] सु-ग्रीवं वानरैः सार्धं(? ध्वैस)मवेक्ष्य वि-भीषणः ॥११॥ [११

भो भोः शाखा-मृगाः सर्वे वचनं मे नि-बोधत ।
४] रामायोऽऽख्यातुम् इच्छामि कोसलेन्द्राय धीमते ॥१२॥ [४

४९उ] रावणो नाम दुर्वृत्तो राक्षसो राक्षसेश्वरः ।
५९उ] तस्याऽहम् अनु-जो भ्राता वि-भीषण इति श्रुतः॥१३॥ [१२

४] चतुर्भिः सचिवैः सार्धम् आ-गतोऽहं न संशयः ।
५४पृ] प्राप्तोऽहं राघवं द्रष्टुम् इति मां वेत्त्य वानराः ॥१४॥ ]४

५५पृ] येन सीता जन-स्थानाद् हृता हत्वा जटायुषम् ।
४] रुद्धा च विवशा दीना राक्षसीभिः सु-रक्षिता ॥१५॥ [१३

---

१. रा-सम्भाष्य० । घ-मन्माष्यमाणानान् । २. रा-०स्योत्तर-पार्श्वे । ३. च-म एव । रा प्र थ म $ल_1$ $ल_2$-नय एव । अ-सचिवैः । ४. रा प्र च म $ल_1$ $ल_2$-पुरस्थितः । अ-सहासस्थितः । ५. आ-युद्धोद्यतेषु । च-युद्धोद्वेषु । $ल_2$ अ-युद्धोदवेषु । ६. फ-महत्सुवानरेषु च । प्र ०षु शतेषु च । ७. च रा थ प्र म $ल_1$ $ल_2$-सहसा प्राह: । अ-समहा० । ८. आ रा च प्र $ल_1$ $ल_2$-वानरांस्तांश्च सर्वश एव । म-वानरे सार्द्धमवश्य एव । अ-वानरांस्तांस्तु सर्वस्य एव । ९. रा-मृगाम् । १०. रा-नाखि । ११. प्र-रामाय ख्यातुन् । १२. प्र-कौशलाय च । $ल_2$-कोमलीशाय । १३. अ-रावणस्तु महाराजो । १४. $ल_2$-रावणो । १५ आ-आगतो ह । १६. रा-संशयः । १७. प्र-वानर । १८. आ-मां विदि । १९. फ-मो वेत्य । प्र-मां . त्य । अ-वेत्य मामिति । २०. च-सीना ॥

तम् अहं विविधैर् वाक्यैर् हेतुभिश् च नि-दर्शयन् ।
५६] उक्तवान् बहु-शो वाक्यं सीता निर्-यात्यताम् इति ९६॥[१४
स च न प्रति-जग्राह रावणः काल-चोदितः ।
५७] उच्यमानो हितं वाक्यं मुमूर्षुर् इव भेषजम् ॥९७॥ [१५
N] ततोऽहं भृशम् आ-क्रुष्टो रावणेन दुर्-आत्मना । [N
तथा परुषितस् तेन दासवच् चाऽव-मानितः ।
५८] त्यक्त्वा मित्राणि दारांश् च राघवं शरणं गतः ॥९८॥ [१६
रावणस्याऽव-लिप्तत्वाद् धर्मम् एव समा-श्रितः ।
५९] सहैभिः सचिवैर् भक्तै रामं शरणम् आ-गतः ॥९९॥ [N
न हि मे जीवितेनाऽर्थो नार्थैर् अर्थस् तथा सुखैः ।
६०] तद् अहं सर्व-संत्यागात् प्राणं रामाद् अवाऽऽप्नुयाम् १०० [N
चोद्य-मानो हि बहु-शो मया धर्माऽर्थ-संयुतम् ।

---

१. रा ब-विविधै वाक्यै । २. च-निदर्शनम् । रा ब म ल$_1$-निदर्शनैः । ल$_2$-हेतुभि विनिश्चितैः । ३. च-बहुषो । ४. प्र-द्वितीय-तृतीयपादौ न स्तः । ५. फ च ल$_2$ अ-०मोदितः । ६. फ च रा ब म ल$_1$ ल$_2$-तेनाह । ७. प्र ल$_2$-भृशविक्रुष्टो । आ-आक्रुद्धो । ८. फ-भिन्नाः-श्लोकार्धमेतत्पूर्वश्लोकोत्तरार्धात्पूर्वं पठन्ति । तथात्वेऽस्य भिन्न-क्रमता द्र० । ९. आ रा-सोह । १०. फ-परुषितो मोहाद् । रा-परुषीतस् । ११. आ-रावणस्यावलेपत्वाद् । १२. फ-समास्थितः । शचिवैर् । १३. आ च-रामशरणम् । १४. आ-तदा । १५. रा प्र ब म ल$_1$ ल$_2$-यद् । १६. अ-०गात्त्राणार्थं । १७. आ च रा प्र ब म ल$_1$ ल$_2$ अ-रामम् । १८. आ-आप्नुयात् । रा प्र-अवाप्नुयात् । १९ ब-०माने । अ-नोद्यमानो । २०. रा ब-महाधर्मार्थसंचयम् । च प्र म ल$_1$ ल$_2$-धर्मार्थसंचयम् । अ-धर्मार्थ-संज्ञितम् ।

६९] प्रहर्तुं त्वयि विश्वस्ते प्रच्छन्नम् अथवाऽनघ ॥१०८॥ [२७
वध्यताम् एष दण्डेन तीक्ष्णेन संचिवैः सह ।
७०] रावणस्य नृ-शंसस्य भ्राता पापो वि-भीषणः ॥१०९॥ [२९
एवम् उक्त्वा तु तं रामं सु-ग्रीवो वाहिनी-पतिः ।
७१] वाक्य-ज्ञो वाक्य-कुशलस् ततो मौनम् उप-स्थितः॥११०॥[३०
७२पू] तस्मिन् मौनम् अनु-प्राप्ते सु-ग्रीवे राघवस् तदा । [N
सु-ग्रीवस्य तु तद् वाक्यं रामः श्रुत्वा वि-मृश्य च ।
N] ततः सुग्रीव-सचिवान् इदं वचनम् अब्रवीत् ॥१११॥ [३१
परवान् अस्मि सर्वेषु भवत्सु हित-बुद्धिषु ।
N] अनु-प्रेयं मया किंचिद् इह प्राप्ते वि-भीषणे ॥११२॥ [N
तद् वक्तुम् अर्हन्ति हि मे भवन्तः
श्रेयोऽर्थिनः श्रेयसि सं-नियुक्ताः ।

१. फ-प्रछन्नः स तवानघ । ब-प्रछन्ने सर्वथानघ । म-प्रछन्न मयि वानघ । अ-प्रछन्नो मयि वानघ । २. रा प्र थ ल$_{1}$-०र्थं । ३. फ-०कालज्ञस् । ४. च-उपास्थितः । रा प्र ल$_{1}$ ल$_{2}$-उपाश्रितः । अ-उपागतमत् । ५. अतः परमधिक पाठः-फ च प्र म ल$_{2}$-धर्ममेवामतः कृत्वा विमर्षमगमत्तदा । ६. रा च ब प्र ल$_{1}$ ल$_{2}$ अ-च । ७. फ-श्रुत्वा रामो महामतिः । म-रामो महीपतिः । रा च ब ल$_{1}$ ल$_{2}$ अ-विमृष्य च । ८. अतः परमधिकः पाठः-फ च प्र ल$_{2}$-सम्यग्विमम्रुपे श्रीमान्सुमुहूर्तमिवान्तरम् । फ च प्र म-स तत् कपीश्वरवचो रामः श्रुत्वा विमृष्य च । ९. म-०सचिवम् । १०. प्र ल$_{2}$-भवत्याहित० । ११. ल$_{1}$-च यत् । १२. आ-प्रासो विभीषणः । १३ च रा-अर्हति । १४ च-हे । रा-ते हि । प्र-हि वै । ल$_{2}$-०न्ति......हि म० । १५. च-श्रेयोर्थिनां । ब-श्रेयार्थिनः । ल$_{1}$-श्रेयोस्थित । १६. च-सन्ति युक्ताः

१. रा ब म ल$_{1}$-दैवमे० । च-वर्गमे० । प्र ल$_{2}$-त्वमेव चा० ।
२. च रा ब प्र-०रक्षणात् । ल$_{1}$ ल$_{2}$-०रक्षणं ।
३. च ल$_{2}$-विधिमुखे धी० । प्र-विधमुखे धी० ।

यत् प्राप्त-कालं च[1] हितं[2] च मत्वा

N] कालोप-पन्नं च विचार्य सर्वम्[3] ॥११३॥ [N

इत्यार्षे रामायणे सुन्दर-काण्डे त्रिभीषण-गमनं

नामैकनवतितमः सर्गः ॥९१॥

१. आ-विहितं । फ-विदितं । २. आ फ ल₂-मर्वं । ३. आ फ-आर्षे । ल₂-इति सुन्दर० । अ-सुन्दरकाण्डे । ब-इत्यार्षे रामायणे । ४. आ फ-लंकापर्वणि विभीषण० ॥

१पू] प्राप्तं वि-भीषणं श्रुत्वा रामः सु-ग्रीवम् अब्रवीत् ।
N] स्मयन्न् इव स्पृशन् हस्तं हस्तेनाऽमित्र-तापनः ॥१॥ [N
N] हरि-श्रेष्ठ महा-बाहो वचनं श्रूयतां मम ।
१उ] आ-नृशंस्ये तदात्वे च आयत्यां चैव सं-श्रितम् ॥२॥ [N
आस्यताम् इह सु-ग्रीव सचिवांश् च समा-ह्वय ।
२] हनुमत्-प्रमुखान् सर्वान् अन्यांश् च हरि-यूथपान् ॥३॥ [N
तैः समर्थ्य च वक्तव्यं करिष्यामि परीऽऽक्षणम् ।
३] सम्यग् वदसि सु-ग्रीव राजानो हि बहु-च्छलाः ॥४॥ [N
तस्माद् एकैक-शंसे तावद् ब्रुवन्तु सचिवास् तव ।
८] हेतु-तो मति-संपन्नाः सं-मतांश् च पुनः पुनः ॥५॥ [३७

---

१. फ-मत्वा । २. रा-राम । ३. फ-स्मरन्निव । ४. घ-हस्त । फ रा म ब म ल$_1$ ल$_2$-हस्ते । ५. घ म ल$_2$ ञ-रामो वै शत्रुतापनः । ब रा म ल$_1$-राघवः शत्रुतापनः ॥ ६. फ-समीप वचनात् । ७. रा-०से । ८. फ-ञरर्थे । घ-तदात्ते । ९. फ घ रा म घ म ल$_1$ ञ-आयत्या । १०. फ-संस्थितम् । ञ-संमृशम् ॥ ११. आ च रा म ब ल$_1$ ल$_2$-श्रूयतामिति । ञ-आस्यातमिति । १२. आ म ल$_1$ ल$_2$-सुग्रीवं स० । १३. घ-समाह्वयन् । रा म ब ल$_1$ ल$_2$-समाह्वयत् । १४. आ घ-हनुमान्प्रमुखान् । १५. च-अनन्यांश्च ॥ १६. आ-समर्थ्येति कर्तव्यं । फ-संमंत्र्येति कर्तव्यं । ञ-समर्थेति संमन्त्र्ये । १७. ञ-राक्षसा । १८. प्र-बहुलांछनाः । म-बहुश्रुताः ॥ १९. च-एकैकसस् । २०. आ-तावद्ब्रु० । घ-ब्रुवेन्तु । २१. च रा-प्र ब म ल$_1$-सचिवांस्तव । २२ प्र-हेतुतः सम्पन्नाः । २३. घ-समस्ताश् । रा ब म-समंताच् । प्र-समंताश् ।

ततः सुग्रीव-वचनात् सम्-ईयुर्[1] वानरर्षभाः ।
४] सर्वे शास्त्र-विदः शूरा देव-पुत्राः प्र-हारिणः[2] ॥६॥ [N
९पू] वि-भीषणस्य ते[3] वाक्यं श्रुत्वा तु[4] हरि-यूथपाः ।
N] प्रणम्य शिरसा[5] रामं स्थिता[6]ः प्राऽञ्जलयस्[7] तदा ॥७॥ [N
९उ] सोपचारं ततो रामम् ऊचुः प्रिय-चिकीर्षवः । [३४उ
अ-ज्ञातं नाऽस्ति ते[8] किञ्चिन् त्रिषु लोकेषु राघव ॥८॥
६] महा-भाग्याद् आत्मनस् तु पृच्छस्य् अस्मान् सुहृत्वे-तया[9] । [३५
त्वं हि सत्य-व्रत[10]ः शूरो धार्मिको दृढ[11]-विक्रमः ।
७] परीऽऽक्ष्य[12]-कारी मतिमान् निसृष्टाऽऽत्मा[13] महा-द्युतिः ॥[14] ॥[३६
तस्माद्[14] एवं त्वम् अभि-योग्य[15] त्वां ब्रुवन्तु प्लवं-गमाः ।[16]
N] पृथक् पृथक् परीऽऽत्त्वाऽस्य[17] यं(?व)[18] इमं यत्र च नो हितम् १० [N
इत्य्-उक्ते[19] राघवः(वे)[20] सर्वैर्[21] हरिभिर् हरि-यूथपैः ।
९] मति-मान् अङ्गदो वाक्यम् इदं रामम् उवाच ह ॥११॥ [३८
शत्रोः सकाशात् सं-प्राप्तः[22] सर्व-थै[23] तर्कयताम्[24] अयम् ।

---

१. रा-सुदीयुर् । २. अ-प्रहर्षिणः । ३. व प्र ल$_2$-वाक्यं च । ४. फ-श्राग् । य-स । प्र ल$_2$-च । ५. आ ल$_2$-सिरसा । ६. रा प्र ल$_1$ अ-स्थिताः । ल$_2$-स्थितः । ७. ल$_2$-प्रांजलयः सदा ॥ ८. फ-ते नास्ति । प्र-नास्त्यतो । ९. व-आपृच्छयास्मा सुहृत्वया । च-पृच्छस्मात्सुल्हत्तया । आ-पृच्छसस्मात्सुहृत्तया ॥ १०. अ-०व्रतः । ११. प्र-दृढ० । १२. रा-परीत्यकारी । १३. फ-निविष्टात्मा । च-घृश्चलात्मा । रा-निष्टात्मा । प्र व म ल$_1$ ल$_2$-निश्चलात्मा ॥ १४. अ-तस्मादेकैकशस्तावद् । १५. रा प्र व म ल$_1$ ल$_2$-मनुवन्तु । आ-ब्रुवन्तं । १६. अतः परमधिकः पाठः-च रा प्र व ल$_1$ ल$_2$-ते हेतु. मतिसंपन्ना समस्ताश्च पुनः पुनः । १७. च-यन्नयं । रा प्र व म ल$_1$ ल$_2$-यद्वितं । १८. आ प्र ल$_2$-यत्र । १९. आ च-इत्युक्तो । २०. म-राघवं । २१. च म-सर्वे । २२. प्र-सम्प्राप्तात् । २३. व-०तस् । २४. आ-तर्किता यम । रा-तर्कतामयम् । व-तरकृतामयम् । प्र-तर्कितो मया । मया ।

१०] विश्वासो हरि-सैन्येन न कर्तव्यः कथंचन ॥१२॥ [३९
छादयित्वाऽऽत्मनो भावं चरन्ति शठ-बुद्धयः ।
११] प्र-हरन्ति च रन्ध्रेषु सोऽनर्थश् च कृतो भवेत् ॥१३॥ [४०
अर्थाऽनर्थौ विनिश्-चित्य व्यव-सायो भवेद् इति ।
१२] गुण-तः सं-ग्रहं कुर्याद् दोष-तस् च वि-वर्जयेत् ॥१४॥ [४१
यदि दोषो महान् अस्मिंस् त्यज्यताम् एव शङ्कया ।
१३] गुणान् वाऽपि बहून् ज्ञात्वा सं-ग्रहः क्रियताम् इह ॥१५॥[४२
शरभस् तु अथ सं-चिन्त्य हरिर् वचनम् अब्रवीत् ।
१४] क्षिप्रम् अस्मै नर-व्याघ्र चारः प्रतिवि-धीयताम् ॥१६॥ [४३
प्रणि-धाय हि चारेण ततो भावः परीऽऽक्ष्यते ।
१५] परीऽऽक्ष्य च तथा कार्यं यथा न्याय्यं(?य्यः)परि-ग्रहः १७[४४

---

१. फ-ह्यपरिक्षेपु । अ-हरिसैन्येषु । २. । च-न कर्तव्यं । ३. फ अ-कदाचन । ४. फ-छादयित्वात्मभावं हि । ५. अ-वदन्ति । ६. आ-रंधेषु । ७. फ-सोनर्थः स्वकृतो । च रा प्र ब म $ल_1$ $ल_2$ अ-सोऽनर्थस्तत्कृतो । ८. ब-०तोऽभवत् ॥ ९. आ-अर्थानर्थौ । १०. म $ल_2$ अ-व्यवसायं भजेद् । ११. फ-दोषतस्तु विसर्जयेद् । आ-विवार्जयेत् ॥ १२. रा-अस्मिस्तजगतामविशङ्कया । प्र-अस्य त्याज्यता-मविशङ्कया । $ल_2$-अस्यज्यतामविशङ्कया । फ-त्यज्यतामधिशंकितम् । च-त्यज्यतामेव शङ्कया । ब म $ल_1$-त्यज्यतामधिशङ्कया । अ-त्यज्यतामेव सर्वथा । १३. फ-गुणाश्चापि । अ-गुणा नापि । प्र-गुणान् । १४. आ-बहून्वा सर्वं । प्र-बहून्ज्ञात्वा च । १५. प्र-संग्राह्यः । १६. रा ब म $ल_1$ अ-इति ॥ १७. आ-सरभस् । १८. फ-निश्चिन्त्य । प्र- संचिन्त्य । १९. च-क्षिप्रं तस्मै ॥ २०. च अ-प्रणिधायाभिचा० । रा ब $ल_1$ $ल_2$-प्रणिधायाय । २१. फ अ-०तां । २२. आ-यथा कार्यो । च अ-तथा कार्यो । २३. प्र रा ब म $ल_1$-यथान्यायः । $ल_2$-तथान्यायः ॥

जांबवांस् त्व् अथ सं-प्रेक्ष्य शास्त्र-बुद्ध्या वि-चक्षणः।
१६] वाक्यं वि-ज्ञापयामास गुणवद् दोष-वर्जितम् ॥'१८॥ [४५
' वद्ध-वैरश् च पापश् च राक्षसेन्द्रो वि-भीषणः ।'
१८] अ-देशकाले संप्राऽऽप्तः सर्व-था शङ्क्यताम् अयम्।'
N] यस्य न स्व-जने प्रीतिः कुतस् तस्य परे जने ॥'१९॥ [N
अथ मैन्दो महा-बुद्धिर् नयाऽपनय-कोविदः ।
१९] वाक्यं परम-संपन्नं बभाषे सं-हृताऽञ्जलिः ॥२०॥ [४७
वचनं नाम तस्यैव राक्षसस्य वि-भीषणः ।'
२०] पृच्छ्यतां परमोपायं शनैर् नर-पते स्वयम् ॥ २१॥ [४८
भावम् अस्याऽथ विज्ञाय तत्त्व-तस् तत् करिष्यसि ।
२१] इति दुष्टो न दुष्टो वा वाक्य-साऽऽकारम् ऊर्जितम्॥२२ [४९

---

१. आ-जाम्बवांस्तथ । २. ल$_1$—नास्ति । ३. प्र—पापश् । ४. फ म—यद्धवैराच्च पापाच्च राक्षसेन्द्राद्विभीषणः । ल$_1$—नास्ति । ५. च—प्रदेशकाले । प्र—०काले । ६. आ—शंक्यता भयम् । रा—संक्यतामयं । प्र—परिशंक्यतामयं । अ—तर्किता मया । ७. ल$_2$—अत आरभ्य अष्टाविंशश्लोकं यावद् नास्ति । ८. फ अ—नास्ति ॥ ९. फ—नये परमकोविदः । १०. फ—वचनान्नाम तस्येव । म—वचनान्नाम तस्यैव । अ—वचनान्नाम तस्येप । ११. फ—राक्षसः स । १२. अत्र वं—वचनात्तावदस्यैव राघवस्य विभीषणः । १३ फ म—मधुरोपायं शनैर् । च—परमोपायं । अ—मधुरोपा...... नरपते । आ—शनैर्नरपते । रा—शनैर्नरमते । ब—शनैर्नरपते । च ल$_1$ ल$_2$ प्र—०नैर्नरपतेः । १४. फ—आस्थय । च रा प्र ब ल$_1$—नावमास्थाय । आ स—आस्थाय । १५. आ—तत्वं तत्प्रकरिष्यनि । फ प्र ल$_1$—करिष्यति । १६. अ—दुष्टोप्यदुष्टो । १७. आ—वाक्यमाकारसूचितः । च—वाक्यमाकारमूर्जितम् । फ—०रसूचितः । म—वाक्यमाकारसूचितः । अ प्र रा ब ल$_1$—वाक्यमाकारम् ॥

युक्तस् त्व् अष्टाऽङ्गयां बुद्ध्या हनुमान सचिवोत्तमः ।
२२] उवाच मधुरं श्लक्ष्णम् अर्थ-वद् च ततो वचः ॥२३॥ [५०
तं ब्रुवन्तं हरि-श्रेष्ठं सर्वे ते हरि-पुंगवाः ।
२३] समुद्-ऐक्षन्त शत-शो बृहस्-पतिम् इवाऽमराः ॥२४॥ [५१
न वादान् न च सं-रम्भाद् आधिक्याद् आत्म-दीपनात्(त्)[10]।
२४] वक्ष्यामि वचनं राजन् यथाऽर्थं कार्य-गौरवात् ॥२५॥ [५२
अर्थाऽनर्थ-निमित्तं हि यद् उक्तं सचिवैस् तव ।
२५] तत्र दोषं प्र-वक्ष्यामि क्रिया नह्य् उप-पद्यते ॥२६॥ [५३
ऋते नि-योगात् सामर्थ्यम् अव-बोद्धुं न शक्यते ।
२६] सहसा वेऽऽपि योगो हि दोष-वान् प्रति-भाति मे ॥२७॥ [५४
चार-प्रणिधि-संयुक्तं यद् उक्तं हरि-पुङ्गवैः ।
२७] अर्थस्योऽसंभवस् तत्र कारणं नोप-पद्यते ॥२८॥ [५५

---

१. रा घ-तुष्टांगया । २. फ-वचनं । ३. अ-सूक्ष्मम् । ४. फ म-हितं ॥ ५. फ घ-नो । ६. रा म-०वः । ७. आ च-समुदैक्षन्त । फ-समुदीक्षन्त । ८. म-इवापराः । च-इवामरान् ॥ ९. फ च म रा ध म ल, अ-संरंभाद्याधिक्याच्च कामतः । १०. अम घं-न दानाच्च च सहर्षाद्याधिक्यान्न च कामतः । ११. रा-यथार्थका० ॥ १२. आ-अथामर्थ० । १३. घ-दोषे । १४. फ-प्रपश्यामि । च-तापश्यामि । म रा घ म ल, अ-न पश्यामि । १५. फ-किं वा नाम्युपपद्यते ॥ १६. फ-स ते । १७. फ-नियोगमामर्थ्यादवरोद्धुं । च घ ल,-नियोगा ......मर्थ्यान् क्रिया बोद्धुं । रा म-नियोगात्सामर्थ्यात् क्रियावोद्धु । प्र-नियोगात्सामर्थ्यात्क्रिया बोद्धुं । अ-नियोगं कार्याणां क्रियां बोद्धुं । १८. च घ रा म ल,-सहसापि नियोगो । प्र-सहसा विनियोगो । १९. च-न युक्तं । रा-नियुक्तः । म म ल,-न युक्तः । २०. घ-चारवच्चारसंयुक्तं । रा-वचश्चार सं० । म म ल,-वचश्चार संयुक्तं । म-न चारप्रणिधिसंयुक्तं । २१. फ अ-अर्थस्यासम्भवात् ॥

सहसा न हि चारेण शक्यो वोढुं वि-भीपणः ।
२८] काले-प्रकर्षे दोषश् च तस्माच् चारो न विद्यते ॥२९॥ [N
अ-देशेऽकाले सं-प्राप्त इत्य् अयं यद् वि-भीपणः ।
२९] विवक्षा तत्र मे हीऽयं तां नि-बोध यथा-मति ॥३०॥ [N
स एवं देशः कालश् च भवतीऽह यथा तथा । [५६
३०] पुरुषं पुरुषं प्राप्य गुण-दोप-समन्वितम् ॥३१॥
दौरात्म्यं रावणे दृष्ट्वा वि-क्रमं तं च तेऽनघ ।
N] युक्तम् आ-गमनं तस्य वि-मृष्यैतच् च बुद्धि-जः ॥३२॥ [५७
अज्ञात-रूपैर् हरिभिर् एप सं-पृच्छ्यताम् इति ।
N] यद् उक्तं तत्र मे बुद्धिः काचिद् अस्ति सम्-ईक्ष्यताम् ॥३३॥ [५८

---

१. च रा प्र घ म ल$_1$–नास्ति । २. प्र–शक्यं वोढुं । च रा ध म ल$_1$–वोढुं । ३. प्र–विचक्षणः । ४. रा घ ल$_1$–कालप्रकर्षदोपैश् । प्र–काले प्रकर्षदोपेस् । म–कालप्रकर्षो । अ–कालप्रकर्षदोपद् । ५. आ–नास्ति ॥ ६. च अ–आदेशकाले । फ प्र म ल$_1$–अदेशकाले । ७. फ–इत्येवं । ८. आ ल$_1$–नास्ति तन्निबोधय । रा प्र अ–नास्ति तन्निबोध । च–नास्ति तन्निबोधद् । ल$_2$–नास्ति तन्निबोध । ९. आ फ रा प्र घ–॰मतिः । ल$_1$–॰विधि ॥ १०. प्र ल$_1$–स एव । अ–एवं च । ११. फ–पुरुषपुरुषं । च–पुरुषं पुरुष । रा प्र घ ल$_1$ ल$_2$–पुरुषं पुरुषः । १२. च रा प्र घ म ल$_1$ ल$_2$ अ–च वानघ । १३. घ–आगमने । १४. आ–विमृशैतस् । च–विमृष्यैतश्च । प्र म–विमृशैतच्च । ल$_1$–विमृष्यैतच्च । अ–विमृष्यैव स । ल$_2$–विमृश्यैतच्च ॥ १५. फ–संपृच्छताम् ॥ १६. आ–तदुक्त । रा प्र घ ल$_1$–यदुक्तं । १७. प्र घ ल$_1$ म–काश्चिद् । अ च रा–कच्चिद् । १८. फ ल$_2$–समीक्षताम् । म–समीक्षितम् ॥ १९. आ–नास्ति ॥

पृच्छ्यमानोऽपि शङ्केत सहसा बुद्धि-मांश् च यः ।

N] तथा मित्रं प्र-दुष्येत मृषा पृष्टं सुखाऽऽवहम् ॥३४॥ [५२

न शक्यं सहसा राजन् भावं वेत्तुं नृणां भुवि ।

N] अन्तरेणेङ्गितैर् नीतैर्(तैः) निपुणं यस्य यादृशम् ॥३५॥ [६०

न चास्य ब्रुवतो वाक्यं सं-दिग्धं जातु लक्ष्यते ।

N] प्रसन्नो मुख-वर्णश् च तस्मान् नेहाऽस्ति सं-शयः॥३६॥ [६१

अ-शङ्कितमतिः स्व-स्थो न शठः प्रति-सर्पति ।

N] न चाऽस्य दुष्ट-व्यापत्तिस् तस्मान् नेहाऽस्ति संशयः३७॥ [६२

आकारश् छाद्यमानोऽपि न शक्यो विनि-गूहितुम् ।

N] बलाद् हि वि-वृणोत्य् एवं भावम् अन्तर्-गतं नृणाम्॥३८॥ [६३

देश-कालोप-पन्नानां कार्यं कार्य-विदां नृणाम् ।

---

१. आ-पृच्छामानोपि । फ-पृच्छ्यमानो हि । च-पृच्छमाणो हि । २. प्र म-शङ्क्येत । ३. आ-बुद्धिमान् शठ । फ-बुद्धिमानथ । रा-बुद्धिमश्च यः । प्र-बुद्धिमांश्च । म-बुद्धिमांश्च य. । प्रान्ते-बुद्धिमान् शठे । ४. फ आ-मिथ्या । ५. प्र-स्पृष्टं । ६. च-सुखावह । अ-सुखावहं ॥ ७. फ-शक्यः । ८. फ-राजन्भावो । प्र म ल$_1$ ल$_2$-नास्ति । अ-वेत्तुं मनोभावं । ९. फ-०गितैर्नीतैर् । च-०गितैश्च निपुणं । च रा प्र ल$_1$-०गितैर्नीच नि० । म-०गितैर्नीच निपुणः । ल$_2$-०गितैर्नीचानिपुण । १०. फ म-पश्यता भृशम् । ब रा ल$_1$-यद्यथादृशम् । प्र-यच्च यादृशम् । ल$_2$-यद्यथादृशम् ॥ ११. फ रा प्र घ म ल$_1$ ल$_2$-चास्य । अ-स्वस्य । १२. ब-जात ॥ १३. च म ल$_1$ ल$_2$-दुष्टतापत्ति । रा ब-दुष्टतापत्तिस् । १४. आ-नास्ति । १५ घ-आकाराच्छा० । प्र-आकारः छद्यमानो वै । अ-आकारं छा० । १६ घ-गुहि० । १७. प्र घ ल$_1$ ल$_2$ विवृणो येप । म-विवृणोत्येव । प्रान्ते-०त्येप ॥ १८. आ-कार्याकार्य० ।

स-फलं भवति क्षिप्रं प्र-योगेनाऽति-संहतम् ॥३९॥ [६४

३१] उद्योग-वन्तं तांं प्रेक्ष्य मिथ्या-वृत्तं च रावणम् ।
वालिनं च हतं श्रुत्वा सु-ग्रीवं चाऽभि-षेचितम् ॥४०॥

३२] राज्यं प्रार्थय-मानस्य बुद्धि-पूर्वं प्र-पश्यतः । [६५

३३पू] एतान् अर्थान् पुरस्कृत्य विद्यते ह्य् अस्य सं-श्रयः ॥४१॥ [६६पू
शत्रोर् वि-रागाद् यद्य् एष संप्राऽऽप्तो नः परं हितम् ।

N] न वयं तद् करिष्यामः परस्य स्वे-जनो यथा ॥४२॥ [N
सत्त्वे बले च देशे च दुर्ग-योगे समुद्-यमे ।

N] अभि-ज्ञः सर्व-कार्येषु स्व-जनानां वि-भीषणः ॥ ४३॥ [N
अथवोपधिना प्राऽऽप्तो रावणस्य मतेन सः ।[18]

---

१. फ–०नापि संवृत्तम् । च–०नाभिसंवृता । रा प्र घ म ल$_1$, ल$_2$ अ–०नाभिसंवृतं ॥ २. रा–उद्यागवन्तं । म–उद्योग० । ल$_1$–तं उद्योग० । ३. आ–संप्रेक्ष्य । प्र च रा ब म ल$_1$ ल$_2$–प्रप्रेक्ष्य । ४. फ–निहत । ५. आ–चाभिषेचित । च–चाभिषेचित । ६. च म–०माणस्य । ७. च–प्रपस्यतः । अ–प्रदश्यतः । ८. ल$_1$ ल$_2$–सश्रयः । ९ आ–इत ४२–५४ ऊर्ध्वं त्रयोदशश्लोकी नास्ति ॥ १०. फ–शत्रो रागापयेप प्राप्तो नः परो हितम् । च–शत्रुर्विरागात्संप्राप्तो निश्चयं नः पर हितम् । रा च ल$_1$–तस्मात्क्षिप्रं सदास्मि तुल्यो भवतु राघव । प्र–तस्मात्क्षिप्रं सहास्माभिस्तुल्यो भवति राघव । ल$_1$ ल$_2$–शत्रोर्(ल$_1$–(त्रुर) विरागात्संप्राप्तो न ह्ययं निश्चय. परः । अ–शत्रोर्विरागात्संप्राप्तो निश्चय नः परं हितम् । ११. फ च म ल$_1$–स्वजने ॥ १२. म ल$_1$ अ–दुर्गे योगे । ब रा–दुर्गे योग्ये । प्र ल$_2$–दुर्गं योग्ये । १३. आ–समुद्यते । १४. फ च रा प्र ब म ल$_2$–०ज्ञ । १५. च–स्वजात्यणा । रा–स्वजात्यानो । ब म ल$_1$–स्वजात्याना । ल$_2$ अ–स्वजातीना ॥ १६ फ–अर्थेनोधिना । च ल$_2$–अर्थेवोपधिना । रा–अथवा पाधिना । प्र–अथवा वादिना । म ल$_1$ अ–अथवोपाधिना । १७ रा–रावण सविभीषणः । च प्र ल$_2$–०स्य हिते रतः । व म ल$_1$–०स्य विभीषण । अ–०स्य मते चरः । १८. व–४५तम-श्लोकपूर्वार्धस्त्वं पठितः ॥

N] यंतताम् अ-निशं वीर किं दुष्टोऽपि करिष्यति ॥४४॥ [N
अनेन रावणः क्रुद्धोऽधर्म-युक्तो मम ग्रेहे ।[2]
N] तस्मात् साधुम् अहं मन्ये राजन्न् एतं वि-भीपणम् ॥४५॥ [N
३३उ] यथा-शक्ति मयोक्तं ते[7] राक्षसस्याऽऽर्जवं प्रति ।
त्वं प्र-माणं तु सर्वस्य श्रुत्वा बुद्धि-मतां वरे ॥४६॥ [६६उ
३४] अथ रामः प्रसन्नाऽऽत्मा श्रुत्वा वायु-सुतं ततः ।
प्रत्य्-अभापत दुर्-धर्षः श्रुतवान् आत्मनि स्थितः ४७ [१८, १
३५] ममाऽपि किञ्चिद् वि-ज्ञानं प्रति भाति वि-भीपणम् ।[13]
श्रुतं चेच्छाम्य् अहं सर्वैर् भवद्भिः श्रेयसि स्थितैः ॥[14]४८॥ [२
मित्र-भावेन संप्राऽऽप्तं न त्यजेयं वि-भीपणम् ।

---

१. फ अ–यम्ना नामनिशं । च–यत्तत्तामनिमनिशं । २. फ–०युक्तः परिग्रहे । रा–क्रुद्धो धर्म्यंमुक्तो मम । प्र ब–क्रुद्धो धर्ममुक्तो । म–क्रुद्धोऽधर्म्यंमुक्तो मम बुद्धया । ल$_1$–०धर्ममुक्तो ममाग्रहे । अ–धर्ममुक्तो मम । ३. च–नास्ति । ४. प्र ल$_1$–अमुं । ५. रा–राजन्नेनं । म–राजन्नेन । ल$_1$–राजन्येवं । ६. ब–०शक्तो । ७. फ–मयोक्तेषु । च–मयोक्तेन । अ–मयोक्तोक्ति । ८. अ–प्रमाणानां सर्वबुद्धि० । ९. प्र अ–०तां वरः ॥ १०. च–प्रसन्नात्माश्च । ११. रा–वयुसुतात् । च प्र ब म ल$_1$ ल$_2$ अ–वायुसुतात् । १२. फ–श्रुतवानात्मविस्मितः । च–०वानात्ममविस्थितः ॥ १३. च–ममाऽप्यत्र विवक्षास्ति किञ्चिदिति विभीषणम् । रा ब म ल$_1$ ल$_2$–ममाप्यत्र विवक्षास्ति काचित्प्रति विभीषणम् । प्र–ममाप्यत्र विवक्षास्ति कश्चित्प्रति विभीषणम् । अ–ममापि तु विवक्षास्ति काचित्प्रति विभीषणम् । १४. च प्र ब म ल$_1$ ल$_2$–श्रोतुमर्हथ तत्सर्वं मम यद् हृदि वर्तते । अ–श्रोतुमर्हसि तत्सर्वं मम यद् हृदि वर्तते ॥ १५. च–संप्राप्त । रा–सम्प्रातः । ब प्र म ल$_1$ ल$_2$ अ–०प्तः । १६. च–न संत्याज्यो नाकथंचन । रा ब प्र म ल$_1$ ल$_2$–संत्याज्यो न कथंचन । अ–न त्यजेयं कथंचन ।

३६] दोषो यद्य् अपि तस्मिन् स्यात् तत् सतां मति-गर्हितम् ॥[1]४९ [२
एवं ज्ञात्वा महाऽऽत्मानम् आर्य-भावे[3] व्यव-स्थितम् ।
३७] आनन्तर्येण[4] संप्राऽऽप्तं वि-शुद्धं[5] ज्ञायताम् इति ॥[6]५० ॥ [N
राघवं परम-प्रीतं[7] स्तुवन् वायु-सुतस् तदा ।
३८] प्रत्य्-अभाषत धर्माऽऽत्मा तत्र काल-सदृशं वचः ॥५१ ॥ [N
रामस्य[8] चैवं वचः श्रुत्वा सु-ग्रीवः प्लवगेश्वरः ।
N] प्रत्य्-अभाषत काकुत्स्थं सौहार्देनाऽभि-चोदितः ॥५२ ॥ [३९
किम् अत्र चित्रं धर्म-ज्ञ लोक-नाथ सुखाऽऽवहम् ।
३९] यस् त्वम् आर्यं[12] प्र-भाषेथाः सत्त्व-वान् सत्-पथे स्थितः[13] ५३ [३६
मम चाऽप्य् अन्तरात्माऽयं शुद्धं वेत्ति वि-भीषणम् ।[14]

---

१. च-दोषा यद्यपि विद्यन्ते प्रा⋯⋯ह्येतद्विगर्हितम् । रा घ-दोषा यद्यपि दृश्यन्ते न मे ह्येतद्विगर्हितम् । प्र ल$_2$-दोषा यद्यपि विद्यन्ते प्राप्ते ह्येतद्विगर्हितम् । ल$_1$-दोषो यद्यपि वर्तेत न मे ह्येव विगर्हितम् । अ-दोषो⋯⋯⋯संप्राप्तः सजतां परिगर्हितः ॥ २. च रा प्र थ म ल$_1$ ल$_2$-यथात्मानम् । ३. फ-आर्यभावस्य० । च रा प्र घ ल$_2$-आर्यमार्गे व्य० । ४. रा-आनन्तर्ये च । प्र-अनन्तर्येण । ५. फ ल$_2$-विशुद्धिः क्रियतामिह । रा प्र ब-विशुद्धः क्रियतामिह । अ-विशुद्धिः ज्ञा० । ६. म-आनर्येण तु संप्राप्तं विशुद्धिः क्रियतामिह । ल$_1$-अनार्येण च संप्राप्तं विशुद्धिः क्रियतामिह ॥ ७. म-०प्रीतः । ८. अ-रामस्य हि वचः श्रुत्वा सुग्रीवः प्लवगेश्वरः । ९. अ-काकुत्स्थं प्रहर्षेण प्रचोदितः ॥ १०. च [illegible] [illegible] ल$_1$ ल$_2$-तु ॥ अ-हि । ११. अ-प्रहर्षेण प्रचोदितः ॥ १२. रा व अ-आर्य । १३. रा ब-सत्त्ववानात्मपथे । म-सत्त्वे चार्यपथे । अ-सत्यवान् स० । ल$_2$-सत्त्वे वार्यपथि ॥ १४ च-चाप्यंत्यरात्मायं शुद्धि वेत्ति विभीषण । रा म ल$_1$-०यं शुद्धः प्रति विभीषणम् । ब-०यं शुद्धं प्रति विभीषणम् । प्र ल$_2$-०यं शुद्धं वक्ति वि० । अ-चाप्यन्तरात्मा वै शुद्धं वेत्ति वि० ।

४०] अनु-मानेन भावेन सत्त्वेन[1] च परीऽऽक्षितम्[2] ॥५४॥ [३७

तस्माद् क्षिप्रं सहाऽस्माभिस् तुल्यो भवतु[3] राघव ।[4]

४१] वि-भीषणो महा-प्राज्ञः सखित्वं चाऽभ्यु उपैतु ते[5] ॥५५॥[6] [३८

चकार तस्याऽथ वचः सु-भाषितं

रामो महाऽऽत्मा प्लवगाऽधि-पस्य ।

वि-भीषणस्य प्र-णतस्य सं-ग्रहं

N] मतिं विनिश्-चित्य महाऽऽत्मभिः स्थिराम् ५६[7] [३९

इत्यार्षे रामायणे सुन्दर-काण्डे वानर-मन्त्रो नाम[8]

द्वानवतितमः सर्गः॥९२॥[9]

---

१ फ-सत्येन । २. च रा प्र व म ल $_1$ ल $_2$ अ-परीक्षितः ॥ ३. ल $_2$-भवति । ४. आ-तस्या क्षिप्रं सहास्माभिस्तुतो भवतु राघवः । च-तस्मा क्षिप्रं सहास्माभिस्तुल्यैर् भवतु राघवः । अ-तस्मादेव सहास्माभिस्तुल्यो भवति राघव । च रा प्र व म ल $_1$ ल $_2$-एभिर्मन्थैरयम्पाठः द्विः पठितः । ५. आ प्र-श्वासितुं , चाभ्युपैति नः । च-सखित्वं चाभ्युपैतु ते । म ल $_1$-शंसितुं चाभ्युपैति नः । अ-सखित्वे मुाभ्युपैतु वे । ६. अतः परमधिकः पाठः-फ च प्र म ल $_1$ ल $_2$ अ-ततः स सुग्रीववचो निशाम्य हरीश्वरेणाभिहितं नरेश्वरः । फ च प्र व म ल $_1$ ल $_2$ अ-विभीषणेनाशु चकार स गतिं पवतिन्द्रराजेन यथा पुरन्दरः । प्र-शत्रुविरागात्स प्राप्तो न चायं निश्चयः परः ॥[3] ७. फ च रा प्र व म ल $_1$ ल $_2$ अ-नास्ति ॥ ८. फ-इति रा० । अ-नास्ति । ल $_2$-इति सु० । ९. अ-विभीषण···री···णो नाम ॥

---

१. फ-नास्ति । २. च-तत्तद्धरिणामपि राघवश्च । म ल $_1$-तद्धरिणामपि राघवोथ । म-तद्धरीश्वरेणाभिहितं नरेश्वर (तद्धरीणामपि राघवोथ) । ३. पाठोऽयं द्विः पठितः ॥

उक्त-वाक्येऽथं सु-ग्रीवे तस्मिन् हरि-गणेश्वरे ।[2]

१] उवाच राघवः श्रीमान् धर्मोऽर्थ-सहितं वचः ॥१॥ [N

सं दुष्टो वाऽप्य् अ-दुष्टो वा किम् एष रजनी-चरः ।

२] सूक्ष्मम् अप्य् अ-हितं कर्तुं मम शक्तः पुर्व-गर्माः ॥२॥ [२२

रावण-भ्रातरं वीरं गृह्णीमो धर्मम् आ-स्थितम् ।

६] आ-गतं सचिवैः सार्धं सह(?हि)भी राक्षसैर् द्रुतम् ॥३॥[13] [N

पृथिव्यां राक्षसान् सर्वान् पिशाचांश् च स-दानवान् ।

४] अंगुल्यग्रेण शक्तोऽहं हन्तुं हरि-गणेश्वर ॥४॥ [२३

श्रूयते हि कपोतेन शत्रुः शरणम् आ-गतः ।

---

१. च रा प्र य म ल$_1$ ल$_2$–०वाक्ये तु । २. अतः पूर्वं–फ च रा य म ल$_1$ ल$_2$ अ–रामस्त्वेषां वचः श्रुत्वा शरणागतवत्सलः । पूरयन्निव घोषेण श्लक्ष्णं वचनमब्रवीत् ॥ ३. च–रामं श्रीमांस्तु । रा य म ल$_1$ ल$_2$–रामः श्रीमांस्तु । ४. अ–सतुष्टो वाथ दुष्टो वा । फ–दुष्टो वाप्यदुष्टो वा । य ल$_2$–सुष्टो वाप्यदुष्टो वा । म ल$_1$–सुदुष्टो वाप्यदुष्टो वा । ५. अ–मामनकः । ६. व–०गमा । ७. रा–रावणं भ्रा० ॥ ८. अ–वीरौ । ९. च रा प्र ल$_1$ ल$_2$–सर्वदा । प्र म–सर्वथा ( सर्वदा ) । १०. अ–आश्रिताः । ११. अ–सचिवैः । फ–दाचिवै(ः) । १२. अ–महद्भी राक्षसैर्युतं । च–सहैव राक्षसैर्युतम् । रा–माख्तं (चतुर्थी) रा० । व–सहितं (चतुर्थी) राक्षसै युतम् । प्र म ल$_1$ ल$_2$–सहितं (चतुर्थी) राक्षसैं युतं, । म–अनुगृह्णन्तु वानराः । अ–सहसा राक्षसै वृतम् । १३. च व ल$_1$ ल$_2$ प्र रा म–श्लोकोऽयं पश्लोकात् परं पठितः ॥ १४. च–पृथिव्या न रा० । व–०व्यां राक्षसां । अ–पृथिव्यां राक्षसांन् । १५. अ–सचो । अ–चैव । १६. च रा प्र व म ल$_1$ ल$_2$–पिशाचान् । १७. च रा व म ल$_1$–दानवांस्तथा । प्र ल$_2$–मानवांस्तथा । १८. रा–अंगुल्याग्रेण । १९. च–सक्तोहं ॥

४] पूजितश् च यथा-न्यायं स्वै-र्मांसैश् च नि-मंत्रितः ॥५॥ [२४

स तावत् प्रत्य्-अगृह्णाव(?ह्णीत) खगो भार्या-निसूदकम् ।

५] कपोतो वानर-श्रेष्ठ किम् उताऽहं वि-भीषणम् ॥६॥ [२५

ऋषेः कण्वस्य पुत्रेण कंडुना परमर्षिणा ।

७] शृणु गाथाः पुरा गीता धर्मिष्ठाः सत्य-वादिना॥७॥" [२६

बद्धाऽञ्जलि-पुटं दीनं याचन्तम् अपराधिनम् ।

८] न हन्याच् छरणं प्राप्तं सतां धर्मम् अनु-स्मरन् ॥८॥ [२७

आर्तो वा यदि वा त्रस्तः परेषां शरणाऽऽगतः ।

९] अपि प्राऽऽणान् परि-त्यज्य रक्षि-तव्यः कृताऽऽत्मना ९ [२८

स (?यश्) चेद् भयाद् वा मोहाद् वा द्वेषाद् वाऽपि न रक्षति ।

१०] स्वयं शक्त्या यथा-न्यायं तम् आहुः पुरुषाऽधमम् ॥१०॥[२९

---

१. च- प्र रा ब म ल$_1$ ल$_2$-अर्चितश् । २. फ च-स्वैश्च मांसैर् । प्र-पुमांसैश्च । ल$_2$-स्वमांसैश्चानि० ॥ ३. फ-च यं प्रत्यगृह्णाद्दे । च प्र म ल$_1$ ल$_2$-तावत्सत्क्रियां प्राप्तं । अ-हि तं परिजग्राह । रा ब-तावत्सत्क्रियां प्राप्तः । ४. अ-हंतार भार्यया खगः । आ-०र्यानिसूदनं । च-०र्यानिसूदकः । म-०र्यानिषूदकः । ल$_1$-०र्यानिवेदकः । ल$_2$-खगो भार्यः...निन्दकः । रा-भार्यानिषूदकः । ब-भार्यानि......दकः । प्र-भार्यो......निदर्शकः । ५ अ-उताय ॥ ६. च रा ब म ल$_1$-ऋषिकश्यपुत्रेण । प्र ल$_2$-ऋषिकश्यपपमित्रेण । ७ फ-कदुना । ब-कंडुजः । ८. फ च ब ल$_1$ ल$_2$ प्र रा म-गाथा । ९. फ अ च ब ल$_1$ ल$_2$ प्र रा म-धार्मिष्ठा । १०. अतः परमधिकः पाठः-च रा प्र ब म ल$_1$ ल$_2$-हन्यमानं रिपुं दृष्ट्वा रिपुणा शरणागतम् । शत्रु सुविदितं दीनं याचन्तमपराधिनम् ॥ ११. च-नास्ति । १२. प्र- हन्यां शरणं । १३. ल$_2$-०स्मरेत् ॥ १४ रा प्र ब म ल$_1$ ल$_2$-परेभ्य । १५. आ-शरण गतः । १६. ब-०तव्याः ॥ १७. फ-यः स । १८. फ-कामाद्वापि । च-द्वेषाद् वा तन् । प्र रा ब म ल$_1$ ल$_2$-द्वेषाद्वा व । १९. फ-रज्य(क्ष्य) ते । २०. फ-शक्तो । २१. फ अ-उरपापं लोकगर्हितं ॥

वि-नष्टः पश्यतो यस्य रक्षितुः शरणाऽऽगतः ।
११] आ-दाय सु-कृतं तस्मात् सर्वं गच्छत्य् अ-रक्षितः ॥११॥ [३०
एष दोषो महान् अत्र प्र-पन्नानाम् अ-रक्षणे । [३१
१२] अ-स्वर्ग्यं चाऽप-यशस्यं च बल-वीर्य-विनाशनः ॥१२॥ ३२पू
सु-पर्याप्तं वि-सृष्टस्यं नाऽर्थ-मेधस्य तत् फलम् ।
N] यत् फलं जात-संत्रासे रक्षिते शरणाऽऽगते ॥१३॥ [N
करिष्यामि यथाऽर्थं तत् कंडोर् वचनम् उत्तमम् ।
१३] धर्मिष्ठं च यशस्यं च स्वर्ग्यं चाऽपि महोदयम् ॥१४॥ [३२उ
अ-भयं सर्व-भूतेभ्यो ददाम्य् एतद् व्रतं मम ।
१४] सं-ग्रामे च प्र-पन्नानां तवाऽस्मीति च वादिनाम् ॥१५॥ [३३
नाऽयुयुत्सुर् नि-हन्तव्यो न भीतो न कृताऽञ्जलिः ।
N] आ-रूढोऽपि न योऽर्थं तु यश् च भूमौ नि-पातितः ॥१६॥ [N
आ-नयैनं हरि-श्रेष्ठ दत्तम् अस्याऽभयं मया ।

---

१. फ म-पश्यतः तस्य । २. च रा प्र ध म ल, ल२ अ-तस्य ॥ ३. च रा प्र ध म ल, ल२-महाबाहो । ४. आ-अस्वर्गंम् । च-अस्वर्गंम् । ५. च-चोपयशस्यश्च । रा ध-चायशस्याश्च । ६. ल१-०विदांवरः ॥ ७. फ प्र रा ध म ल, ल२-सुपर्याप्तवि० । ८. फ-नास्व० । ९. फ-तत्र संत्रासे ॥ १०. च-यथार्थं । ११. फ-तत्कंदोर् । च-तं कंडोर् । १२. च-स्वर्गे लोके । रा प्र ध म ल, ल२-स्वर्गलोके । अ-स्वर्ग लोके ॥ १३. आ-दयामेतद् । रा-ददास्येतद् । अ-दयामेतद् । १४. ल१-संक्रामे । १५. च-सुप्रप० । अ-वा प्रप० । १६. च-न चास्मीति । रा-न चास्मीति । ध म ल१-न यमस्मीति । प्र-तव चास्मीति । ल२-यमस्मीति । १७. आ-यो वदेत् । फ अ-च यो वदेत् । १८. च-ना युयुत्सुन् । रा-नायुयुत्सोः । १९. प्र-योधं । २०. च-यस्तु । प्र म-यश्च । २१. फ-आनय त्वं । २२. म-०श्रेष्ठं ।

१५] वि-भीषणो वा सु-ग्रीव यदि वा रावणः स्वयम्॥१७॥[३४
रामेणाऽर्थाऽभये दत्ते सँ ततो वानरर्षभः ।
१,६] उत्-पपात दिवं हृष्टः सँर्वैर् अनु-चरैः सह॥१८॥ [१९,१
सँ सम्-एत्यँ कँपि-श्रेष्ठः सं-श्लिष्यं च वि-भीषणम् ।
१७] सांत्वयित्वा च मेधा-वी दर्शयामासे रांघवम् ॥१९॥ [N
१९पू] पादयोः स तु रामस्य नि-पपात वि-भीषणः ।[12]
रांक्षसः शरणाँऽन्वेषी चतुर्भिः सँचिवैः सह ॥२०॥ [२
२०] तं रामः समुत्थाप्य परि-ष्वज्य वि-भीषणम् ।
उवाच मधुरं वाक्यं सखा मम भवान् इति ॥२१॥ [N
२१] अब्रवीच् च तदा रांमं युक्त-वाँक्यं वि-भीषणः ।
धँर्म-युक्तं च पथ्यं च सांप्रतं संप्र-हर्षणम् ॥२२॥ [३

---

१. रा-रावण स्वय ॥ २. च अ-रामेणात्वभये । रा प्र ल१, ल२-रामेण स्वभये । ब-रामेण तु भये । ३. च-सर्वदा रावणानुजः । प्र रा ब म ल१ ल२ अ-सर्वथा रावणानुजः । ४. च-सोत्पपात । ५. च रा प्र ब म ल१ ल२-तदा हृष्टो भकैर् ॥ ६. रा-समेत्य । अ-समुत्क्षिप्य । ७. अ-हरि॰ । ८. रा-साश्लिष्टः । ९. आ च-दर्शयित्वा च । १०. च-रामं । ११. अतः परमधिक पाठः—अ-पादयोः पातयामास सुग्रीवः प्लवगेश्वरः । १२. रा च प्र ब म ल१ ल२-ततो वीरस्य धर्मात्मा मूर्ध्नि पादौ विभीषणः । १३. अ-जगाम राजपुत्रस्य । रा प्र ब ॥ ल१, ल२-जग्राह राजपुत्रस्य । १४. फ-शाचिवैः । १५. फ-समुत्क्षिप्य । रा प्र ब अ-समुत्थाय ॥ १६. प्र ल२ अ-ततो । १७. अ-वाक्यं रामं रक्षो । आ प्र ल२-रामयुक्तवाक्यं । १८. च रा प्र ब म ल१ ल२-धर्मार्थयुक्तं । फ-नास्ति । १९. च रा प्र ब म ल१, ल१-आत्मनश्च गुणोदयम् । फ-सांप्रतं सर्वहर्षणम् ॥

२२] अनु-जो रावणस्याऽहं तेन चाऽस्म्य् अव-मानितः[1] ।
भवन्तं सर्व-भूतानां शरण्यं[2] शरणं गतः[3] ॥[4]२३॥ [४

२३] परि-त्यक्ता मया लंका मित्राणि च धनानि च ।
भवद्-गतं च मे[5] राज्यं जीवितं[6] च सुखानि च ॥२४॥ [५

राक्षसानां[7] वधे साह्यं[8] लंकायाश् च प्र-धर्षणे[9] ।
२४] करिष्याम्य्[10] अहम् एतत् ते[11] नेष्यामि तव वाहिनीम् ॥२५॥ [२४

स[12] एवम् उक्त्वा नर-देव-पुत्रम्[13]
वि-भीषणो धर्म-भृतां वरिष्ठः ।
बभूव तूष्णीं[14] स तदा महाऽऽत्मा
२५] प्रसादम्[15] इच्छन् नर-देव-पुत्रात्[16] ॥२६॥ [N

इत्यार्षे[17] रामायणे सुन्दर-काण्डे विभीषण-परिग्रहो[18]
नाम त्रिनवतितमः सर्गः ॥९३॥

---

१. आ-तेन चास्मि अवमानितः । च-तेन चास्मि वमानितः । रा ब म ल$_1$ ल$_2$-तेन चास्मि विमानितः । प्र-लंकायाश्च प्रधर्षणे । २. च-शसपि । ३. ल$_2$-शरणागतः । ४. प्र-अत आरभ्य "लंकायाश्च प्रधर्षणे" इति यावत्पाठो नास्ति ॥ ५. च रा ब म ल$_1$ ल$_2$-राज्यं मे । ६. रा ब म ल$_1$-जीवितानि ॥ ७. फ च रा ब ल$_1$ ल$_2$ अ-रक्षसां च । म-राक्षसां च । ८. म-सार्यं । ९. आ-प्रधर्षणं । १०. फ-करिष्यामि यथाप्राणं । ११. अ-नयिष्याम्यपि वा० । फ-नेष्यामि हरिवा० ॥ १२. फ च-तमेवमुक्तो । रा-तमेवमुक्त्वा । आ-स एवमुक्तो । प्र ब म ल$_1$ ल$_2$-अ-तमेमुक्त्वा । १३. आ-०पुत्रः । १४. ब-तूष्णीं । १५. फ-प्रवादम् । प्र-प्रासादम् । १६. ब-०पुत्राम् ॥ १७. फ-आर्षे रा० । ल$_2$-इति सु० । १८.फ-विभीषणनिग्रहो । अ-विभीषण-गिरिग्रहो ॥

[वं-९२]= [ चतुर्नवतितमः सर्गः ] =[दा-१९]

इति ब्रुवाणं तं रामः परि-ष्वज्य वि-भीषणम् ।

१ ] उवाच लक्ष्मणं वीरं[1] समुद्राज् जलम् आनय ॥१॥ [२५

२उ] अभि-षिंचस्व लंकायाम् इमं सौम्यं वि-भीषणम् ।

राजानं राक्षसेंद्रत्वे प्र-सन्ने मयि लक्ष्मण ॥ २ ॥ [२६

३ ] एवम् उक्तस् तु सौमित्रिर् अभ्यं-अपिंचद् वि-भीषणम् ।

मध्ये वानर-मुख्यानां राजानं राम-शासनात् ॥ ३ ॥ [२७

४ ] तं प्रसादं तु रामस्य दृष्ट्वा संधः प्लवं-गमाः ।

प्र-चुक्रुशुर् महा-नादान् साधु साध्व् इति चाऽब्रुवन्॥४ [२८

५ ] अब्रवीत् तं हनूमांश् च से चे राजा वनौकसाम् । [२९

कथं सागरम् अ-क्षोभ्यं तरेम वरुणाऽऽलयम् ॥५॥ [३०पू

६ ] उपायं नाऽधि-गच्छामो यथा नद-नदी-पतिम् ।

उद-तरामः कुशलिनः स-सैन्या वरुणाऽऽलयम् ॥६॥

७ ] एवम् उक्तम् तु धर्म-ज्ञः प्रत्य्-उवाच वि-भीषणः । [३१

---

१. आ फ अ-वीर. । २. च-अनय ॥ ३. फ-•षिष्यस्व । ४. प्र ल१-सौम्यं ॥ ५. आ-अत्पोंचद् । फ ब ल२-अभिषिंचद् । ६. च-•सासनात् । रा-शाशनात् । ल२-राम शासशासनात् ॥ ७. फ-सर्व्वें । रा-सव । ८. आ-प्रचकुर् । च-प्रचुकुश्च । प्र ल१-प्रचुकुशुर् । ल२-प्रचक्रुशुर् । फ-प्राचुकुर् । ९. आ अ च ब ल१ ल२ प्र रा म—•नादं ॥ १०. अ-अब्रवीच्च । ११. रा-नास्ति । १२. रा-राजव नौ• । ब ल१-राजा सर्वं वनौ• । १३. च रा म ल१-सागरक्षोम्यं । १४. आ-तरे । प्र-तरेयं । १५. फ-रुणालय ॥ १६. रा प्र ल१ ल२-उपायेनाधिगच्छामो । १७. वं-उत्तरेम शिवेनेम स• । १८. आ फ च रा प्र ब ल१ ल२ अ-नास्ति । १९. फ अ-सर्वज्ञः ।

समुद्रं शरणं राजन् गन्तुम् अर्हति राघवः ॥ ७ ॥ [३२
८ ] खानितः सगरेणाऽयम् अ-प्रमेयो महोदधिः ।
९पू ] कर्तुम् अर्हति रामस्य ज्ञाति-कार्यं महाऽऽत्मनः ॥८॥ [३३
सगरस् तु हि रामस्य श्रूयते प्र-पितामहः ।
१० ] तस्य पुत्रः समुद्रोऽयं ज्ञाति-कार्यं करिष्यति ॥ ९ ॥ [ N
एतद् वि-भीषणेनोक्तं राक्षसेन विपश्चिता । [३४पू
११ ] प्रकृत्या धर्म-शीलस्य राघवस्याऽप्य् अरोचत ॥१०॥ [३६
स लक्ष्मणं महा-तेजाः सु-ग्रीवं च हरि-प्रभुम् ।
१२ ] सत्-क्रियाऽर्थं क्रिया-दक्षः स्मित-पूर्वम् उवाच ह ॥ ११ [३७
वि-भीषणस्य मन्त्रोऽयं मम लक्ष्मण रोचते ।
१३ ] ब्रूहि त्वम् अपि सु-ग्रीव तवाऽपि यदि रोचते ॥ १२॥[३८
सु-ग्रीवः पण्डितो नित्यं भवान् मन्त्र-विचक्षणः ।
१४ ] उभयोः संप्र-धार्याऽर्थं रोचते यत् तद् उच्यताम् ॥१३ [३९

---

१. च–समुद्रशरणं । म–समुद्र सरणं । २. प्र म ल१ ल२–राजा । ३. आ–यातुमर्हसि रा० । फ–गन्तुमिच्छसि राघव । अ च–गन्तुमर्हसि रा० ॥ ४. रा च–नास्ति ॥ ५. च–सागरेणोयम् । ६. आ रा प्र च ल१ अ–ज्ञातिधर्म ॥ ७. फ–सागरः स तु । रा प्र च म ल१ अ–सगरश्चापि । ल२–सागरश्चापि । प्र–सागरस्तु हि । ८. प्र–समुद्रस्य ॥ ९. प्र–०णे नोक्तो । १०. फ–०स्याप्यरोचत् । म ल१–राघवस्यान्यरोचत । ल२ अ–राघवस्य व्यरोचत ॥ ११. फ–०चाहुः । १२. म–नास्ति । १३. ल२–हरिं प्रभुं । १४. आ–स क्रियार्थं । १५. फ–अभाषत ॥ १६. च–विभीषणोऽस्य । १७. प्र–स सलक्ष्मण । च–मम लक्ष्म......रोचते । १८. आ–वाच्च ॥ १९. अ प्र ल२–नास्ति । २०. आ–सुग्रीव । २१. आ च रा व म ल१ ल२ अ–पंडितोऽत्यर्थं । प्र–पण्डितोऽम्यर्थं । २२. प्र–स्म यद् ॥

एवम् उक्तौ तु रामेण तदा सुग्रीव-लक्ष्मणौ ।
१५] समुदाचार-संयुक्तम् इदं वचनम् ऊचतुः ॥१४॥ [४०
किम् अर्थे नौ नर-व्याघ्र नैतद् रोचिष्यते वचः ।
१८] वि-भीषणोक्तं हृद्यं च युक्तं चैव विशेषतः ॥ १५ ॥ [४१
अ-बद्ध्वा सागरे सेतुं घोरेऽस्मिन् वरुणाऽऽलये ।
१६] लंका नाऽऽसादितुं शक्या सेन्द्रैर् अपि सुराऽसुरैः१६ [४२
वि-भीषणस्य शूरस्य यथा-वत् क्रियतां वचः ।
१७] अलं कालाऽत्ययं कृत्वा सागरोऽयं नि-युज्यताम् १७ [४३
एतच् छ्रुत्वा शुभं वाक्यं विभीषण-समीरितम् ।
N ] सं-विवेश ततो वीरो रम्ये सागर-रोधसि ॥ १८ ॥ [ N
सागरं द्रष्टुम् इच्छामि रूपिणं त्वां सरित्-पतिम् ।
N ] कर्तुम् अर्हसि मे साह्यं भव त्वं शरणं मम ॥ १९ ॥ [ N
एवम् उक्त्वा कुशाऽऽस्तीर्णे तीरे नद-नदी-पतेः ।
१९] सं-विवेश तदा रामो वेद्याम् इव हुताऽशनः ॥ २० ॥ [४४
परेण हर्षेण तदा नरेश्वरः
परेण वीर्येण च शत्रु-तापनः ।

---

१. फ–उक्तौ थ ॥ २. फ–रोचयते । च–रोचिष्यते । ३. आ–हृद्यं ॥ ४. ल₁–अबद्धा । ५. रा–लंकामासादितुं । प्र–लंका नासाधितुं । ल₂–लंका नासादिता ॥ ६. आ–विभीषस्य । ७. आ–यथा च । व–यथा वः । ८. आ–काला···यं । च–कारात्यये । रा–कार्यात्यये । प्र व ल₂–कार्यात्ययं ॥ ९. फ–ततो । १०. च–विभीषणस्य स० । ११. च–संविवेश । १२. रा व–वीर । ल₂–वीरै । १३. फ–रामः । च–रम्यसा० । ल₂–रम्यै ॥ १४. च–सागरः द्रष्टुमि·····रू० । १५. आ–सरितां पतिं । १६. फ–साह्यं भवांश्च ॥ १७. प्र–कुशास्तीर्णे । १८. फ–ततो । १९. प्र–हुतासनः ।

२०] कृत्वा मतिं सागर-दर्शने तदा

बभूव तूष्णीं नि-यतः स पार्थिवः ॥२१॥ [ N

इत्यार्षे रामायणे सुन्दरे-कांडे विभीषणाऽभिषेको नाम

चतुर्नवतितमः सर्गः ॥ ९४ ॥

---

१. फ-बभू-। २. फ-आर्षे। ३. श्र-नास्ति । ४. ल $_2$ -नास्ति ।
५. ल $_2$ श्र-विभीषणभाषणं ।

तस्य रामस्य सुप्तस्य कुशाऽऽस्तीर्णे महो-तले ।
१ ] नि-यतस्याऽप्र-मत्तस्य निशास् तिस्रोऽति-चक्रमुः ॥१॥ [१०
न हि दर्शयते रूपं तदा रामं महाऽर्ण-वः ।
२ ] प्र-यतेनाऽपि रामेण यथाऽर्थं प्रति-पूजितः ।[१२
N ] न सर्व-था वि-कारं स भजते निरप-त्रपः ॥२॥ [ N
ततः क्रुद्धो महा-बाहू रामो रक्ताऽन्त-लोचनः ।
३ ] समीपे लक्ष्मणं वीरं स-रोषो वाक्यम् अब्रवीत् ॥३॥ [१३
पश्य तावद् अन्-आर्यत्वं पूज्य-मानस्य लक्ष्मण ।
४ ] अव-लेपं समुद्रस्य न दर्शयति येन स्वयम् ॥ ४ ॥ [१४
प्र-शमश्च च क्षमा चैव मार्दवं प्रिय-वादिता ।
५ ] अ-सामर्थ्यफला ह्य् एते निर्-गुणेषु सदा गुणाः ॥५॥ [१५
आत्म-प्रशंसा-निरतं धृष्टं वाऽप्रियं-वादिनम् ।

---

१. रा-सु (प्रा) सस्य । २. अ-कुशातीर्णे । ३ फ-तिस्रोपच० । च-तिस्रोस्ति च० । रा-तिस्रो प्रच० । प्र-तिस्रोतिचक्रमुः ॥ ४. रा-दर्शयती । ५. आ-रामे । ६. आ-यथार्थः । अ च रा प्र व म ल$_1$ ल$_2$-यथार्हं । ७-आ-०थाधिकारं । म-०था प्रसादं (विकारं) । ८. आ-निरपत्रपः ॥ ९. च-०बाहु । १०. च प्र म ल$_1$ ल$_2$ अ-सरोषं ॥ ११. च-०क्षेपं । १२. आ-य स्व० ॥ १३. फ-प्रणामश्च । म-प्रशम (सच) श्च । १४. ध-प्रभावश्च । १५. च-सार्द्दवं । प्र-मार्दवं । १६. आ-असामर्थ्यं फला । फ-असामर्थ्यंफलं । च व म ल$_1$ ल$_2$ अ-असामर्थ्यं फलन्त्येते । रा-असामर्थ्यं फलन्त्येत । प्र-असमर्थ्यं फलन्त्येते । १७. फ च रा प्र व म ल$_1$ ल$_2$ अ-कुतो । १८. च-०प्रसंपानिरतं । व-०प्रशंसानिरता । १९. ल$_2$-दृष्टं । २०. फ-चाप्रिय० । च-चा परिवादिनं । रा-च परिनंदिनं । प्र व म ल$_1$ ल$_2$ अ-च परिवा० ।

६] सर्वत्रोत्सृष्ट-दण्डं च लोकः[2] सत्-कुरुते[2] नरम् ॥ ६ ॥ [१६
न साम्ना शक्यते कीर्तिर् न साम्ना शक्यते यशः ।
७] प्राऽऽप्तुं लक्ष्मण लोकेऽस्मिन् जयो वा रणे-मूर्द्धनि ७॥[१७
क्षमया च सम-युक्तं माम् अयं वरुणाऽऽलयः ।
८] अ-समर्थं वि-जानीते धिक् क्षमाम् ईदृशे[10] जने ॥[11] ८॥[२१
९पू] चापम् आ-नय सौमित्रे शरांश् चाऽशी-विषोपमान् । [२४पू
N] क्रूरस्योद्धत-दण्डस्य लोकोऽयम् अनु-वर्तते[14] । [N
९उ] अद्याऽहं क्षोभ्यम् अपि क्रुद्धः क्षोभयिष्यामि सागरम्[१५] [२४उ
वेला-संस्पर्श-मर्यादं सहस्रोर्मि-समाऽऽकुलम् ।
१०] निर्-मर्यादं करिष्यामि सायकैः पश्य लक्ष्मण ॥१०॥ [२५
अद्य मद्-बाण-निर्भिन्नैर् मकरैर् मकराऽऽलयम् ।[20]

---

१. आ-सर्वतोत्सृष्ट० । २. आ-चोक न कुरुते । घ-लोकः स कुरुते ॥ ३. प्र-क्रियते । ४. प्र घ-प्राप्तुं । ५. फ-वा रणमूर्धनि ॥ ६. फ-तु । ७. रा प्र घ-समायं । ८. आ फ म ल₁ ल₂ घ-समर्थं । घ-असंशयं । ९. ल₂ अ-विजानीहि । १०. आ घ-विक्रमार्जितं । रा-धिक् क्षमा चेदृशे । ११. अतः परमधिकः पाठः—घ-अतः प्रकृपितः प्राह चतुर्थे दिवसेऽर्जुनं । भुजंगमसमः कोपाद् दुर्निरीक्षतमो नृणां ॥ [illegible] जडीवासः सौमित्रे निम्नगापतिः । नायं विग्रहः [illegible] ॥ १२. आ फ-शराश्चाशी० । घ-[illegible] वि० । घ-शरांश्चाशी० । १३. प्र-क्रूरस्योद्धत० । १४. आ-[illegible] । १५. फ-यावदक्षोभ्यमाक्रम्य [illegible] । घ-[illegible] । रा द म ल₁,ल₂ अ-अद्य क्षोभ्यमपि क्रुद्धः क्षो० । प्र-अद्य क्षोभ्यमपि क्रुद्धः क्षो० ॥ १६. आ-वेला यस्य समर्यादा । रा-वेला संस्पर्श० । घ-[illegible] । प्र म ल₁ ल₂ अ-वेला संस्पर्श० । १७. फ-[illegible] । १८. फ-महान० । १९. प्र-[illegible] । २०. घ-[illegible] ।

११] निरुद्ध-तोयं सौमित्रे प्लव-मानैर् वि-लोकय ॥ ११ ॥ [१८
भोगिनां पश्य नागानां मया छिन्नानि लक्ष्मण ।
१२] महा-कायानि गात्राणि प्लव-मानानि सागरे ॥ १२ ॥ [१९
सशंख-शुक्तिका-जालं समीन-मकरं शरैः ।
१३] अहं क्रोधेन महता समुद्रं परि-वर्चये ॥ १३ ॥ [२०
स स-क्रोधोऽथ तद् दिव्यं लक्ष्मणाद् धनुर् उत्-तमम् ।
१४] जग्राह सायकान् घोरान् ब्रह्म-दण्डान् इवोद्यतान् १४ [ N
१६पू] स वि-नाम्य धनुर् घोरं कंपयन् तरसा तलम् । [२८
ततो बाण-धनुष्पाणिः क्रोध-विस्फारितेक्षणः ।
१५] बभूव रामस् तेजस्वी युगान्ताऽग्निर् इव ज्वलन् १५ [२७
N ] स-रोपः शब्दम् आ-रेभे दग्धुं व्यव-सितः किल ।[ N
१६उ] मुमोच नि-शितान् बाणान् वज्राणीऽवे शत-क्रतुः१६ [२८
ते ज्वलन्तो महा-बाणाम् तेजसा पावकोपमाः ।

१. प्र-०तोयैः । २. आ फ ब म ल$_{1}$-०मानो । च-०माणैर् । ३. आ-विलोक्य । च-विलोक्या । ४. ल$_{2}$ अ-नास्ति ॥ ५. रा-नागाना । ६. फ-०भोगाणि । ब-०कायाणि । च-महायानि । ७. फ-नास्ति । ८. ब-प्लवमानः निशाचरे ॥ ९. आ-सश्वतशुक्तिका० । फ ब-सशंखशुक्तिका० १०. रा घ-शनैः ॥ ११. च प्र ब म ल$_{1}$ ल$_{2}$ अ-म संक्षुब्धोथ तद् । आ-स संक्षुब्धोऽनयद् । १२. आ-लक्ष्मणो धनुम् । १३. आ-सायकां घोरां फ-शायकान् घोरान् । च म ल$_{2}$-सायकान् घोरा । ब-सायको घोरो । १४ फ-०दण्डानि चोद्यतान् । रा ल$_{1}$ ब-०दण्डान् इवोद्यतान् ॥ १५. आ-स विनाम्य रा ब-विनाम्यध० । [illegible] ल$_{1}$-सविनाम्य स घ । १६. फ-कम्पयंस्तच्छरैर्जलम् च-कंपयंतु रसातलम् । रा ब प्र म ल$_{1}$ ल$_{2}$ अ-कंपयंश्च रसातलम् १७. च-०विस्फुरितेक्षणः । १८. रा-राम ॥ १९. फ-सरोषं महदारेभे च-सु...कर्तुं समारेभे । रा प्र ब म ल$_{1}$ ल$_{2}$ अ-शुष्कं कर्तुं समारेभे २०. ब-निशितां बाणां । २१. फ-वज्रीव च । रा ब-वज्रानीव । २२. ल$_{2}$ अ-ज्वलन्ति ।

१७] विविशुस् तत् समुद्रस्य सलिलं त्रस्त-पन्नगम् ॥१७॥ [२९
ततो वेगः समुद्रस्य स-नक्र-मकरो महान् ।
१८] स बभूव महा-घोरः स-मारुत-रवस् तदा ॥ १८ ॥ [३०
महोर्मि-जालाऽवततो नाना-सत्त्व-समाकुलः ।
२०] सधूम-परिवृत्तोर्मिः सं-चचाल महोदधिः ॥ १९ ॥ [३१
व्यथिताः पन्नगाश् चाऽऽसन् दीप्ताऽऽस्या दीप्त-लोचनाः ।
२१] दानवाश् च महा-घोराः पाताल-तल-वासिनः ॥२०॥ [३२
N ] स्थिताः मांऽजलयः सर्वे वेपमाना भयाऽर्दिताः । [ N
ऊर्मयः सिन्धु-राजस्य तिमि-नक्र-झपाऽऽकुलाः ।
१९] विन्ध्य-मन्दर-संकाशाः समुत्-पेतुः सहस्र-शः ॥२१॥ [३३
N ] स मारुतोद्धूत-तरंग-माली
संभ्रान्त-दैत्योरग-मीन-संघः ।
सधूम-फेनश् च स-विस्फुलिंगः
N] सं-तापितोऽस्त्रैर् व्य्-अनदत् समुद्रः ॥२२॥ [N
इत्यार्षे रामायणे सुन्दर-काण्डे समुद्र-क्षोभणो नाम पंचनवतितमः सर्गः॥९५॥

---

१. रा—पन्नस्त॥ २. रा—वेग । ३. आ—नक्रमकरो । ४. राप्र घ म $ल_1$ $ल_2$—संबभूव । ५. रा—॰घोर । ६. आ—समातुवरवं ॥ ७. आ—॰ज्वालावततो । घ—॰आलावनतो । प्र—॰ज्वालवितवो । $ल_1$—जालावन्तो…… । ८. घ म—॰कुलाः ॥ ९. प्र—॰वृत्तः स्म । १०. घ रा व म $ल_1$ $ल_2$ अ—स चचाल ॥ ११. रा—व्यथिताः । $ल_2$ अ—पृथिव्याः । १२. घ रा—त्व सन् । व—चासं ॥ १३. आ—भयार्दिता । १४. आ—॰नक्रमपाकुलाः । फ—नक्रसमाकुलाः । १५. घ—॰संकाशः ॥ १६. फ—मारुतोद्वृत॰ । १७. फ—सघातदैत्योरगमीनसधाः । $ल_2$ अ—संभ्रांतमनोरग-दैत्यसंगः । प्र—संभ्रान्तदैत्य……संघः । १८. आ $ल_1$ व—फेनः शरावि॰ । प्र $ल_2$ अ—॰लेसः शरावित्स्फुलिंगः । १९. फ—व्यनदत् ॥ २०. फ—आर्ये । २१. $ल_2$ अ—नास्ति । २२. रा—सुन्दरका……। २३. घ रा व म $ल_1$—॰क्षोभनं । प्र $ल_2$ अ—॰क्षोभवर्णनं ॥

तस्मिन् वि-कृष्टे स-शरे राघवेण शराऽऽसने ।[3]
N] रोदसी विव्यथाते च पर्वताश् च चकम्पिरे ॥१॥ [६
तमश् च लोकम् आ-वव्रे दिशश् च न चकाशिरे ।
N] प्रति-चुक्षुभिरे चाऽऽशु सरितश् च सरांसि च ॥२॥ [७
तिर्यक् च सह नक्षत्रैश् चेरतुश् चन्द्र-भास्करौ । [८पू
N] तमसा च परि-च्छन्नाव् उभौ न रेजतुस् तदा ॥३॥ [N
भास्कराऽंशुभिर् आ-दीप्तं तमसा चाऽभिसं-वृतम् । [८उ
N] न चकाशे च तद् अह उल्का-शत-विदीपितम् ॥४॥
अन्तरिक्षाच् च निर्-घाताः सं-जग्मुर् अतुल-स्वनाः । [९
N] मोऽस्फुरंश् चोऽपि परुषा दिवि मारुत-वह्नयः ॥[21]५॥ [१०

---

१. ब-विनष्टे । २. ब-राघवेन । ३. फ-इतः पूर्वं एष पाठः पठ्यते- अथश्च कृतवाग्यौघैर्विधुता कृद्धमम्बुधिम् । मत्वा दाशरथी रामः संदधेऽस्त्रं विभावसोः ॥ ४. च-रोदसी । ५. ब रा म प्र ल$_1$ ल$_2$- लोकानावव्रे । ६. फ अ ब रा म प्र ल$_1$ ल$_2$- चकाशिरे । ७. आ-वाशु । प्र-वांशु । म-वाशुः । ८. ल$_2$ प्र-नास्ति । ९. अ ल$_2$-प्रहन० । १०. ब रा म ल$_1$-शशि० । ११. आ-तु । च-तु । १२. फ- ०छन्नौ न नभसि चकासतुः । रा-०छिन्नौ निभौ तौ रे० । म ब ल$_1$-०छन्नौ नोभौ तौ रे० । प्र-०छिन्नौ नोभौ तौ । च-०छन्ना उभौ तौ रे० । अ-०छिन्नौ न तौ रे० । ल$_2$-०छिन्नौ न तौ तौ रे० । १३. रा-०रांऽशुभिर् । १४. आ-चाभिसंवृतम् । १५. आ-तु त० । च-तदा सर्वम् । रा प्र म अ ल$_1$ ल$_2$-वियत्सर्वम् । १६. आ च- ०रिक्षाश्च । १७. च-निर्घाताः । १८. च ब म प्र अ ल$_1$ ल$_2$- सं जग्मुर् । १९. फ म-प्रस्फु० । च-प्रस्फुरंश्चापि । ब प्र म ल$_1$ ल$_2$ अ-रंश्चापि हि । २०. ब ल$_1$-रुषा । प्र अ ल$_2$-दिशः । २१. रा-नास्ति ॥

वभंज च तरून् वायुः सं-मूलान् उद्-ववर्ह च ।
N] आ-भुग्नानि च शैलानां शिखराणि नभस्-वता ॥६॥ [११.
दिवि ये च महा-भूताः सं-हृता भीषण-स्वनाः । [१२पू
N] संभ्र-विव्यथिरे ते च न च चेस्कंदिरे भयात् ॥७॥ [१४
दृश्यानि चैव भूतानि न चुक्रुशुः शनैर् अपि । [?
N] अ-दृश्यानि च भूतानि प्र-जग्मुः सं-भ्रमं महत् ॥८॥ [१३
सह-भूतः स-तोयश् च स-नागश् च स-दानवः ।
N] सहसा दुद्रुवे वेगाद् भीम-वेगो महोदधिः ॥९॥ [१५
तान् उत्पातान् अ-चिन्त्यैव कुपितो राघवोऽब्रवीत् । [N
N] अद्य त्वां शोषयिष्यामि स-पातालं महार्णव ॥१०॥ [१७
N] पन्नगाऽसुर-वासांश् च वि-धमिष्यामि ते शरैः । [N
शर-निर्दग्ध-कायस्य परि-शुष्कस्य सागर ।
N] तव देशेषु सर्वेषु पांशुर् उत्-थास्यते महान् ॥११॥ [२

---

१. आ-व तनून् । २. च-०ळानुदवर्हत् 1 घ रा-०ळान्नुत्पाटयन् । प्र-०ळानुत्पाटयन् । म-०ळानुदपाटयत् । अ ल$_2$-०ळानुदपाटयत् । ३. आ अ-भायुग्णानि । फ-भातुलानि । ल$_2$-अभुग्नानि । ४. च-शैलानो । ५. आ-सिखा० । ६. फ-श्वचरस्तदा । ल$_2$ अ-नभस्वतः । म-नभस्वना । ७. आ-भीषणः स्वना । ८. फ-प्रविश्य व्यथिरे । ९. आ-च मेस्कंदिरे । व रा ल$_1$-प्रचस्कंदिरे । १०. आ-भयात् । ११. च ल$_2$ अ-चक्रुशुः । १२. आ रा घ-नास्ति । १३. फ म-दृश्यानि । १४. व-चैव । १५. अ रा ल$_2$ य प्र म ल$_1$-जग्मुर्वै ॥ १६. आ-०भूताः । फ-भूतैः । रा-०भूतं । म-०भूतश्च । १७. आ-स तेजाश्च । म-तोयश्च । १८. आ-सनागाश्च । फ-सनाग । १९. आ व ल$_1$-सुदानवाः । २०. आ-सहसा दुदुवे । २१. आ-वानुद्भता० । फ-तानुभ्या० । २२. फ-संचिन्त्यैव । आ च-०नुचिन्त्यैव । रा व-नास्ति । २३. रा-कुपित । २४. च-महार्णवे । रा-महार्णवम् ॥ २५. रा च व प्र म अ ल$_1$,ल$_2$-०रनागांश् । २६. च-सागरा । २७. फ-देशेष्व-देशेषु । २८. व रा म प्र अ ल$_1$ ल$_2$-रेणुर् । २९. प्र ल$_2$ अ-दृश्याप्यते ॥

मम कार्मुक-निर्मुक्तैः शरैर् नूनं महोदधे ।
N] अद्य त्वां संतरिष्यन्ति पद्भिर् एव प्लवं-गमाः ॥१२॥ [३
मम त्वं न वि-जानीषे पौरुषं वि-क्रमं बलम् ।
N] दानवाऽऽलय-संत्रासं तस्मान् मे नाऽव-गच्छसि॥ १३॥ [४
ततः समीपे रामस्य वि-धूयोर्मीः सहस्र-शः ।
स्वयं मध्यात् समुद्-पत्य सागरः परमं वपुः । [१७
२] पन्न-गैः सह दीप्तौऽऽस्यैर् धारयन् सम्-अदृश्यत॥१४॥ [१८पु
ताम्र-पीतौऽसितैः श्वेतैः सप्तौऽऽस्यैः सप्त-मूर्द्धभिः ।
N] अग्नि-जिह्वैर् महा-नागैर् अनु-बद्धः समन्त-तः ॥१५॥ [N
दिव्य-पुष्प-मयीं चित्रां शिरसा धारयन् स्रजम् । [१९उ
N] जात-रूप-मयीं चैव तपनीय-विभूषिताम् ॥१६॥
आत्म-जैर् अपि रत्नौघैर् भूषितो भूषणोत्तमैः । [२०

---

१. फ–मत्कार्मुकाविनिर्मुक्तैः । ब–स स कार्मु० । २. फ रा च प्र ब म अ ल$_1$ ल$_2$–शुष्कं । ३. ब अ ल$_2$–महोदधेः । ४. रा–सन्तरिस्यन्ति । ५. च–न मे त्वं च । रा ब म प्र ल$_1$ ल$_2$ अ–न च मे त्वं । ६. फ–जानीषे । रा–विजानेषे । ७. फ–पयोधे पौरुषं । ८. रा–नाधि गच्छति । ब–नाधिगच्छति । प्र–नाधिगच्छसि॥ ९. अ च ब ल$_1$ ल$_2$ रा म–समीपं । १०. अ–विधूयोमान् स० । च–विधूयोर्मिस० । रा–विधूयोर्मीः स० । म ब ल$_1$ ल$_2$–विधूयोर्मीन् स० । ११. रा ब म प्र अ ल$_1$ ल$_2$–जलमध्यात् । १२. प्र–पुन्नागैः । १३. अ–दीप्तास्यैः परिवार्य । रा ब ल$_1$–स्यैर् वारयन् । १४. अ–समंततः । १५. प्र–ताम्रमेताभिवैः । १६. च–नास्ति । रा–चैतैः । १७. रा–सप्तास्यै । १८. अ–माहा० । १९. च–०मयां । २०. अ–धारयत् । २१. फ च–०विभूषितः । ब रा म प्र अ ल$_1$ ल$_2$–०विभूषणः । २२. फ–०जैश्चापि । २३. रा–रत्नोघैः । २४. ल$_1$–रूपतो । २५. रा– भूषणोत्तमै ।

N] धातुभिर् मण्डितः शैलो वि-विधैर् हिम-वान् इव ॥१७॥[२१पू
स्निग्ध-वैडूर्य-संकाशो महाऽभ्रै-शिखरोपमः । [१८उ
२] रक्त-माल्याऽम्बर-धरः पद्म-पत्र-निभेक्षणः ॥१८॥ [१९पू
महा-नदीभिर् बह्वीभिर् नाना-रूपाभिर् ईश्वरः ।
N] गङ्गा-सिन्धु-प्रधानाभिः पुरः पश्चात् समा-वृतः ॥१९॥ [२३
४पू] स रामम् उपसं-गम्य पूर्वम् आ-मन्त्र्य वीर्य-वान् ।
N] मध्ये वानर-कोटीनां कृताऽञ्जलिर् उप-स्थितः ॥२०॥ [N
३उ] अब्रवीत् प्र-श्रितं वाक्यं दिशः सं-पूरयन्न् इव । [२४उ
N] भो भो राम महा-बाहो रघुवंश-विवर्धन ॥२१॥
शृणु मे वचनं सौम्य मा क्रुधस् त्वं रघूऽत्तम ।
N] इत्य्-आह रामं मधुरं सर्वं सं-स्मारयन्न् इव॥[13]२२॥ [N
पृथिवी वायुर् आकाशम् आपो ज्योतिश् च पञ्चमम् ।
५] स्व-भावे सौम्य तिष्ठन्ति शाश्वतं मार्गम् आ-स्थिताः । [२५
६पू]तत् स्व-भावो ममाऽप्य् एष,यद् अ-गाधोऽहम् अ-व्ययः२३[२६पू

---

१. रा घ-०भिर्मण्डितैः । २. घ फ-०वैदूर्य० । ३. फ-महाद्रिशिपरोपमः । ४. फ-प्रवाहाभिः । ५. रा-पुरा । ६. फ-समन्वितः ।७. आ-पूर्वमाम...वी० ।८. आ-प्रसृतं । फ घ-प्रसृतो । ९. फ घ म प्र रा ब ल$_1$ ल$_2$' अ-मूत्वा । १०. फ-संक्रुद्धोध । रा-मा क्रुद्धस्त्वं । आ-मा क्रुध त्वं ।११. रा-इदाह । १२. रा-सर्वे । प्र-सर्व० । १३. फ-नास्ति ॥ १४. फ-ज्योतिर् । १५. फ-वायु-सितिम्भो । १६. घ-ना स्वभावो । रा ब ल$_2$-न स्वभावो । रा-सा स्वभावो । १७. फ ब घ-अगाधो यदव्ययः । प्र ल$_2$ अ-०हमीश्वरः ।

त्वया सं-[1]स्थापितो देवै विष्णुस् त्वं हि सनातनः ।
आत्मानं स्मर देवेशाऽऽ[2]त्मं-[3]वृत्तं तव [4]पुरातनम् ।
N] कारणे[5]नाऽसि देवानां मै-[6]विष्टो मानुषीं तनुम् ॥[7]२४॥ [N
N] [8]अवश्यं तु मया साह्यं [9]कर्त्तव्यं दे[10]वानां वरं ।[11] [N
६उ] वि-कारस् तु [12]भवेद् गाध एवं ते[13] प्र-ददाम्य् अहम् २५[२६उ
१२पू] न लोभान् न च वै[14] कामान् न भयात् पार्थिवाऽऽत्मज ।
गाधोऽहं त्रिषु लोकेषु [15]भवेयं कस्य-चित् क्वचित् । [२७
N] [16]एतन् मयोक्तं [17]तैस्त्वं पुनर् वक्ष्यामि तच् छृणु ॥[18]२६॥ [N
७पू] सगरो नाम पूर्वस् ते मम कर्ता महा-द्युते ।[19]
N] अवश्यं [20]तु मया साह्यं कर्त्तव्यं तेन तेऽनघ ॥२७॥ [N
[21]स्तंभयेयं जलं राम [22]पद्भ्यां चैव तेथा गतिम् ।
८] [23]गच्छेरस् तेन हरयो न तु [24]स्तंभो भविष्यति ॥२८॥ [N

---

१. प्र च रा अ म ल$_1$ ल$_2$–संस्थापिता । व–संस्थाप्यते । २–प्र च य रा ल$_1$ ल$_2$ अ–देवा । ३. च रा व प्र म अ ल$_1$ ल$_2$–देवेश यद्वृत्तं । ४. च रा य ल$_1$–पुरातने । प्र अ ल$_2$–पुरातनः । ५. ल$_2$–कारणेनान्य-दे० । ६. प्र–प्रविष्टुं । ७. फ–नास्ति ॥ ८. प्र–अवाच्यं । ९. आ–कर्तुव्यं । १०. य च म अ$_1$ ल$_2$–देवताकृते । ११. फ रा–नास्ति ॥ १२. आ–भवेद्गध । च अ–भवेद्गाधे । १३. आ फ–एवचे । १४. आ–वा । १५. आ–भवेहं । १६ च प्र य म अ ल$_1$ ल$_2$–एवं । १७. च य म म ल$_1$,ल$_2$ अ–तवं तु पु० । १८. रा–नास्ति । १९. य–हि । २०. फ–पाद्यं मे क० । च प्र अ ल$_2$–मया कार्यं । २१. आ–ददाम्येवम् । म य रा प प्र ल$_1$ ल$_2$ अ–पद्यां चैव । म–पद्यां तेऽहं । २२. च य रा प्र अ ल$_1$ ल$_2$–यया । आ–अयाग० । २३. फ–गच्छेरन् ये । रा–गच्छेरंस्त्वन । प्र–गच्छेर्य तेन । म ल$_1$–गच्छेयंस्तेन । २४. फ–स्वस्यं ॥

आश्चर्यं हि महल्लँ लोके  समुद्रे स्थलँ-दर्शनम्  ।
९] तर्वे तु मे  परि-हर्त्तव्यं शृणु राम यथाऽर्थ-तः ॥२९॥ [N
अन्येऽपि वल-वन्तो मां  दण्डमुँ  उर्द्-यम्य राघवँ ।
१०] गत्य्-अर्थम् इह मार्गं चँ दापयिष्यन्ति तेजसा ॥३०॥ [N
वि-धास्ये  राम  मार्गं  ते वि-पहिष्ये  च मारुतम् ।
N] ग्राहा न वि-चरिष्यन्ति यावत् सेना तरिष्यति ॥३१॥ [२८पु
तृण-काष्ठ-लता-गुल्मैः  प्लुवान् आँ-स्तीर्य  सँर्व-तः  ।
N] तरन्तु हरयो  रामँ न  तेषां मृत्यु-तो  भयम् ॥३२॥ [N
उत्तरेणाँऽवका-शोऽस्ति  कश्चित् पुण्य-तँमो  मम  ।
N] तिमि-कूले इति ख्यातो लोके ख्यातो यँथा भवान् ॥३३॥[३१
उग्र-दँर्शन-कर्माणो   वसन्तें   तत्र   दँस्यवः ।
N] आँभीर-प्रमुखाः पापाः पिवन्तः  सलिलं मम ॥३४॥ [१२
तैश्  च  सं-स्पँर्शनं  रौम  न  सहे  पापँ-कर्मभिः ।
N] अ-मोघः क्रियतां राम तत्राऽयं  ते शरोत्तमः ॥३५॥ [१२

---

१. म—अनर्थं । २. च म ल$_1$—महांल् । ३. प्र—खूळद॰ । ४. आ—तत्र ते । य रा च प्र म अ ल$_1$ ल$_2$—तच्च मे । ५. रा—अन्ये च । घ—अन्योन्य । ६. फ—दण्डमुच । ल$_1$—दाल्मुयम्य । ७. ल$_1$—शाकितः । ८. प्र—इमं । ल$_2$—इव । ९. आ—मार्गो । १०. प्र—माहित । ११. आ—विसहिष्ये । रा—विहनिष्ये । १२. फ अ—ग्रहा । १३. आ—प्लवम् । च रा ल$_1$ अ—प्लवन । १४. च—आस्तीर्णे । १५. च म रा ल$_1$—सर्वशः । १६. च ल$_2$— नाम । १७. आ—उत्तरेण विका॰। फ—॰त्तरेण वका॰। १८. च रा प्र म ल$_1$ ल$_2$ अ—॰तरो । १९. आ—किमिकूट । फ—द्रुपिकूल । प्र—तिमिंगल । २०. आ—यथा भवत् । २१. च—उग्रे दर्शन॰ । २२. च—दस्यवः । २३. फ—अभीरप्र॰ । २४. अ—संदर्शनं । ल$_2$—संदर्शन । २५. अ—नम । ल$_2$—नाम । २६. च—सहेप्युपक॰ ।

तस्य[1] तद् वचनं श्रुत्वा समुद्रस्य रघूऽत्तमः ।
N] मुमोच तं शरं घोरं[2] भास्करोपमम्[3] ऊर्जितम् ॥३६॥ [३४
तं च[4] देशं[5] चकाराऽथ मरुं[6] सागर-शासनात्[7] । [N
N] ततोऽसौ मरु-कान्तारः[8] पृथिव्यां वि-श्रुतोऽभवत् ॥३७॥
पपात[9] स शरो यत्र मदीप्ताऽशनि-सन्निभः[10] । [३५
N] वि-ननाद[11] धरा तत्र सु-गाढं[12] शल्य-पीडिता ॥३८॥ [३६पू
शोषयित्वा तु[13] तं[14] कुक्षिं राघवोऽमित-विक्रमः[15] ।
N] यस्माऽऽसन्[16] देस्यवः[17] पूर्वं[18] तत्र रामो वरं ददौ[19] ॥३९॥ [१९
पशव्यश् चैव निर्-व्याधो[20] बहु-मूल-फलोदकः ।
N] बहु-क्षीरो[21] बहु-स्नेहः सु-गन्धिर्[22] वि-विधौषधिः ॥४०॥ [४०
एवम् उक्तैर्[23] गुणैर् युक्तो बहुभिः स मरुस्[24] तदा ।
N] रामस्य वर-दानेन शिवः क्षेमो[25] बभूव ह[26] ॥४१॥ [४१

---

१. फ-ततस्तस्य वचः । २. फ-वज्र । ३. फ-भास्करोतमम् । ४. च प्र$ल_2$ अ-देशं च । ५. आ प्र च $ल_2$ अ-चकाराथं । ६. च-मरु । ७. घ-०सासनात् । रा-..........सासनात् । ८. आ-ततो सौम तु का० । [illegible] प्र-ततो सो मरुका० । रा-ततोऽसो...रुका० । ९. च रा प्र घ म $ल_1$ $ल_2$ अ-स पपात । १०. आ-०शासनिसन्निभः । ११. आ रा घ-विनिनाद । १२. आ-सुगाढं । च-सगाढं । [illegible] घ-सुगाढ्यं । १३. प-च । १४. च प्र घ $ल_1$ $ल_2$ अ-तां । १५. च $ल_2$-राघवो० मिति० । १६. आ-यस्यासं । १७. फ-दस्यवः । १८. प्र-पूर्वे । १९. प्र-दधौ । २०. आ-पशवश्चैव निर् । फ-पशवश्चैव निष्यासो । च-पशवश्चैव निर्व्यासा । [illegible] घ $ल_1$-पश्यस्यश्चैव निर्व्यासो । म-पशव्य-श्चैव निर्व्यासो । अ-पशश्चैव निर्व्यासो । $ल_2$-पशव्यश्चैव निर्व्यासो । २१. $ल_2$ अ-०क्षीरः । २२. प्र रा घ-सुगन्धि ॥ २३. म-पूतैर् । $ल_2$-उक्तो । २४. फ-बहुभिर्मरुतास् । २५. च-क्षेम्यो । २६. फ म-सः । घ-हा । रा-चः ॥

ततो महोदधिर् वाक्यम् उवाच रघु-नन्दनम् ।
N] मध्ये वानर-सिंहानां मनः प्रह्लादनं शुभम् ॥४२॥ [N
१३७] उपाऽऽयं शृणु तं सौम्य येन मां सं-तरिष्यसि ।
तव पित्रा मम महत् सं-गतं देव-सद्मनि ॥४३॥[N
२१] तदा देवाऽसुरे युद्धे सं-ग्रामे तारकाऽऽमये ।
तत्रै ते व्या-पृतं पित्रा सुराणां हित-काम्यया ॥४४॥ [N
२२] मया सह महा-बाहो तत्र सख्यं च वै कृतम् ।
N] तद् युद्धम् अभवद् घोरं सुराऽसुर-समाकुलम् ॥४५॥ [N
देवतानां ततः सैन्यं पत्त्य्-अश्व-रथ-संकुलम् ।
N] मत्त-द्विप-सहस्रैश् च सं-वृतं सुरै-संमतम् ॥४६॥ [N
अ-सुरैः सर्व-तो भग्नं पलायितं दिशो दश ।
N] तत् प्र-भग्नं बलं सर्वं दृष्ट्वोऽहं त्वरयाऽन्वितः ॥४७॥ [N
शिला-पादप-दृन्दैश् च पर्वतैश् च प्र-दृष्टवान् ।
N] अ-सुराणाम् अभूत् सैन्यं सर्व-तो द्रावितं मया ॥४८॥ [N

---

१. च ल$_2$अ–उपायान्छृणु मे । रा प्र म–उपायाञ्शृणु मे । व–उपायं शृणु मे । ल$_1$–उपायं शृणु मे । २. आ च–मम हत् । ३. आ–संसदि । ४. रा–नास्ति ॥ ५. फ–मंत्रिव्यापृतं । आ–ते व्याहृतं । च–तत्र देव्याहृतं । स–तत्र वै द्रावतः । ६. रा–तत्र पित्रा सुराणां हितकाम्यया ॥ ७. आ–तव । ८. ल$_1$–सांख्यं । ९. च रा प्र व म ल$_2$ अ–महत्कृतम् । ल$_1$–महद्व्रतम् । १०. आ फ–घोर ॥ ११. व–देवता या तत्र । १२. ल$_1$–प''''''स्व० । १३. फ–सुरसंनिभम् । प्र रा व ल$_1$ ल$_2$–शूरसंमतम् । म–शूरसंगतम् ॥ १४. अत्र हस्तलेखेषु 'पलायत' इति पाठः ? । १५. आ–दृष्ट्वा तत्राहं त्व० । १६. व–'पलायत दिशो' इति पूर्वार्द्धे द्वितीयपादोक्तः पाठोऽत्र चतुर्थपादेऽपि द्र० ॥ १७. आ रा च प्र व म ल$_1$ ल$_2$ अ–वर्षैश्च । १८. आ–स दृष्टवान् । १९. आ च रा प्र व म ल$_1$ ल$_2$ अ–असुराणां महत् । २०. आ फ–सर्वतोभिद्रुतं । २१. प्र–च तत् ॥

मयैव च सह स्थित्वा[1] तदाऽयुध्यत ते[2] पिता ।
N] शक्तिभिर्[3] भिंडि(?दि)-पालैश् च पाशैस् तीक्ष्णैः परश्वधैः[4]॥४९॥[N
एतस्मिन्न् अन्तरे राम राजा दश-रथस् त्वरन् ।
एकैकेन[5] स[6] बाणेन दश पंच च सप्त वा[7] ।
N] निर्-बिभेदाऽसुरान्[8] क्रुद्धः शत-शोऽथ सहस्र-शः ॥५०॥ [N
ततस् तं (?तत्) कोष्ठकी-[9]कृत्य दैतेयानां[10] बलं महत् ।
N] अ-दृश्यं सायकैश्[11] चक्रे ततः क्रुद्धो नराऽधिपः[12]॥५१॥[13][N
सं-दधे चैव नाराचम् आग्नेयाऽस्त्र[14]-समायुतम् ।
तेषां[15] तं च मुमोचाऽऽशु ततोऽदह्यन्त दानवाः[16] ।
N] अ-सुराश् च[17] स-दैतेयाः हताः[18] शत-सहस्रशः ॥५२॥ [N
एतस्मिन्न् अन्तरे राम निर्[19]-वृताः सर्व-देवताः[20] ।
N] वरेण छन्दयामास्[21] राजानं पितरं तव ॥५३॥ [N
ब्रूहि राजन् महा-बाहो वर-दा देवताः[22] स्थिताः[23] ।
N] किं ते वरं ददत्व्[24] एताः सु-युद्धेनाऽद्य तोषिताः ॥५४॥ [N
दैवतैर् एवम् उक्तस्[25][26] तु राजा दश[27]-रथोऽब्रवीत् ।

---

१. च–छित्वा । २. आ–राघव । फ–राघवः । ३. रा–शक्तिभि । ४. आ रा–०स्वधैः । ५. फ–एकेन । च–एकैकेण । ६. च रा प्र व म ल₁ ल₂ अ–च । ७. फ च रा प्र व म ल₁,ल₂,अ–च । ८.च–०दासुरा । ६.फ ल₁म–कोष्टकी० । १०. प्र राघ ॥ ल₁,ल₂ अ–दैत्येंद्राणां बलं महत् । फ–दैतेयानां बलानि च । ११. आ–शायकैश्चतुस् । १२. ब–०धिप । १३. आ–नास्ति । १४. च–आग्नेभाग्नस० । आ–०समातुलम् । ब–आग्नेय्याग्न० । १५. आ रा–तच् । म ल₁ ल₂ –तत् । १६. रा–दानवा । १७. रा अ–च सदैसेया । प्र–चैवं दैत्येया । ल₂–चैव दैत्येया । १८. ल₂–सता । १६. आ रा–निवृताः । २०. रा–०देवता । २१. आ–०मास । २२. च–देवतां । रा–स्वया । २३. रा–स्थिता । २४. आ म–ददंत्वेताः । रा ब–ददास्वेताः । प्र–दधन्वेताः । २५. फ–सुयुद्धेनाद्य । च–स युद्धेना...सो० । प्र–सुयुद्धेनादि । म ल₁–स युद्धेनाप । २६. आ–उक्तैस् । च–उक्तास् । २७. रा–दशथो० ।

देवता यदि मे तुष्टाः पुत्रो मह्यं प्र-दीयताम् ।
N] सर्वैः क्षत्र-गुणैर् युक्तो महा-बल-पराक्रमः ॥५५॥ [N
एवम् उक्ते तदा राज्ञा देवा वाक्यम् अथाऽब्रुवन् ।
N] चत्वारस् ते सुता राजन् भविष्यन्ति महा-बलाः॥५६॥ [N
जे (ज्ये) ष्ठो राम इति ख्यातो भरतो लक्ष्मणस् तथा ।
N] शत्रु-घ्नश् च महा-वीर्यः सुमित्राऽऽनन्द-वर्धनः ॥५७॥ [N
अयोध्यां गच्छ भद्रं ते वि-ज्वरो भव पार्थिव ।
N]पूजितं(तो)विधि-वद् देवा(वैर्)दत्त्वा रत्नानि चाऽप्य् उत५८[N
वस्त्राणि चैव दिव्यानि रथं युक्तं च सु-प्रभम् ।
N] चूडा-मणिं तथा शुभ्रं दिव्यं चाऽमृत-संभवम् ॥५९॥ [N
वि-सर्जितस् ततो देवैर् मया सह नराऽधिपः ।
N] आऽगच्छत तदा राजा अयोध्यां त्वरयाऽन्वितः॥६०॥ [N
मया सह महा-बाहुः स्वां पुरीं प्र-विवेश ह ।
N] सत्-कारेण महाऽर्हेण पूजयामास मां नृपः ॥६१॥ [N

---

१. च प्र व ल१-उक्तास् । रा ल२ अ-उक्त । २. घ-०वान् । ३. आ-पेष्ठो । फ-एको । ४. रा व-वत्तः । ५. आ-कोशे क्रमभ्यस्तासो द्र० । 'महाबलाः' इत्यनन्तरं 'चूडामणिं यथा' इत्येष पाठो द्र० । ६. ल१ म-०वीरः । ७. आ-विज्वरोभवपार्थिवः । ८. फ-संपूज्यमानं विधिवत्तु । घ-तं पूज्य विधिवद् । रा व म ल१-संपूज्य विधिवद्देवा । प्र ल२ अ-संपूज्य विधिवद्धीमान् । ९. रा व म ल१-चाप्यथ । च-चाप्य । १०. फ-शस्त्राणि । घ रा प्र य-अस्त्राणि । ११. फ-रत्नयुक्त । १२ च रा व-सं० (सु०) प्रभं । १३. आ-कोशे 'महाबला' इत्यारभ्य 'सुप्रभम्' इत्यन्तः पाठः क्रमव्यत्यासेन पठितः । १४. फ-चूरामणिं । प्र-चूडामणिस् । १५. म ल१ ल२ अ-तया । १६. आ घ ब रा प्र व म ल१ ल२-राम । १७. फ-महात्मा च । १८. रा-राज्ञा । १९. व म ल१ ल२ अ-ह्ययोध्यां । सन्ध्यभाव आर्षः द्र० । २०. आ-०माहुः । २१. अ-त्व ।

सु-मुखी मासम् उषितो राज्ञस् तस्य नि-वेशने ।
N] ततो राजानम् आ-मन्त्र्य स्वं वेश्म पुनर् आगतः ॥६२॥ [N
तस्य राज्ञो भवान् पुत्रः सर्व-ज्ञः सु-गुणैर् युतः ।
N] यथा दश-रथस्य त्वं तथा मम न सं-शयः ॥६३॥ [N
चिन्तयन् सन्-ततं राम किं कुर्यां नृ-पतेः प्रियम् ।
N] चिन्तयानस्य कालो मे गतोऽयं व्रीडितस्य च ॥६४॥ [N
विद्यते त्वयि मे स्नेहः परा सं-भावना च मे ।
कृत-प्रत्वाद् अहं भीतो न कृतं तस्य यत् प्रियम् ।
N] करिष्ये ते प्रियं तस्माद् यथा दश-रथस्य हि ॥६५॥ [N
यथा राजा दश-रथस् त्वं तथा मे न सं-शयः ।
N] तस्मात् तव मया साह्यं कर्तव्यं सं-विशेष-तः ॥६६॥ [N
१४पू] अयं सौम्य नलो नाम तनयो विश्व-कर्मणः । [४२पू
N] बुद्धि-मान् बलवांश् शूरो वि-क्रान्तो वानरोत्तमः॥६७॥[N

---

१. आ फ-स सुखी । प्र $ल_2$ अ-सुमुखी । २. आ रा घ $ल_1$-॰मुखितो । ३. आ-स्व॰ । ४. फ-सर्वैः पुत्रगुणैर् । च-सर्वज्ञः स्वगुणैर् । ५. आ-मह्मम॰ । ६. आ फ रा-॰यत् । ७. आ व-कुर्मे । रा प्र $ल_1$-कुर्यान् । ८. आ-चिन्तया तस्य । ६. फ रा $ल_1$-कालोयं । १०. च-मतोयं । फ रा $ल_1$-गतो मे । ११. म-तथा (परा) । १२. आ-भीतो । रा घ-भीमं । १३. रा-कृत्यं । १४. आ-तद् । फ-यद् । १५. च रा प्र घ $ल_1$ $ल_2$ अ-तत् । १६. रा प्र घ म $ल_1$ $ल_2$ अ-तस्य । १७. आ म-त्रुटितः । १८. आ $ल_1$-दशरथस्य । १९. फ $ल_2$-यथा मे त्वं । च रा प्र घ म अ-तथा त्वं मे । $ल_1$-तथा मम । २०. प्र रा घ म $ल_1$ $ल_2$ अ-च त्रि॰ । २१. आ फ-नास्ति । २२. घ-सौम्यं नले । २३. रा-बलवान् शूरो । प्र व-बलवां शूरो ।

१४उ] पित्रा दत्त-वरः श्री-मान् धृति-मान् सु-महामनाः । [४३
वानरेन्द्रो नर-श्रेष्ठ युज्यतां सेतु-कर्मणि ॥६८॥ [N
१५] एष सेतुं महोत्साहः कुरुते यदि वानरः ।
तम् अहं धारयिष्यामि ममाप्य् एष महा-सुहृत्॥ ६९॥ [४४
१६] ग्राहा न वि-चरिष्यन्ति न प्र-वास्यति मारुतः ।
सलिलं स्तम्भयिष्यामि नलस्य वचनाद् अहम् ॥७०॥ [N
१७] एवम् उक्तः समुद्रेण समुत्-थाय नलस् तदा ।
N) अ-ब्रवीद् वानर-श्रेष्ठो वाक्यं रामम् इदं शुभम् ॥७१॥ [४५
अहं सेतुं करिष्यामि वि-स्तीर्णे मकराऽऽलये ।
१८] पितुः सामर्थ्यम् आ-श्रित्य सत्यम् आह महोदधिः॥७२॥[४६
तितीर्षोः सागर-जलं सेतु-कर्माऽत्र साधनम् ।
N] स्मारितोऽस्म्य् अहम् एतेन समुद्रेण महाऽऽत्मना॥७३॥[५०१
मम मात्रे वरो दत्तो मन्दरे विश्व-कर्मणा ।
१९] औरसो मम पुत्रोऽयं[23] सदृशो मम कर्मभिः[24] । [४९

१. च–दत्तो वरः । २. च–श्रीमान्धृतिमान् । रा–धीमां धृतिमान्स महामनाः । घ–श्रीमां स······महामना । प्र ल$_{2}$ अ–श्रीमान्कृतिमान् । ३. प्र रा च म ल$_{1}$ ल$_{2}$–नृप० । ४. च–सेतुम० । रा–शेतुं । ५. म–यश्च । ६. फ अ–वार० । ७. आ फ अ ल$_{1}$–ववाप्येष । ८. च रा म ल$_{2}$–महान् सु० । प्र–महत् सु० । ९. ल$_{1}$–नास्ति । १०. आ–०ष्यति । रा–विचरेष्यति । ११. रा–प्रहस्यति । च–प्रवास्यन्ति । १२. रा–मारुति । १३. रा प्र च ल$_{1}$ ल$_{2}$ अ–उक्ते । १४. प्र ल$_{2}$ अ–समुद्रे तु । १५. फ च रा प्र व म ल$_{1}$ ल$_{2}$ अ–प्रत्युत्थाय । १६. फ च रा व–विस्तीर्णे । म ल$_{1}$ अ–रिस्तीर्णे । १७. सामर्थम् । १८. च–०कर्मा तु । १९. फ–स्मारितोऽप्यहम् । अ–स्मारितो स्माहम् । २०. आ–पित्रे वरो । व–पित्रे वमे । च–मात्रे विरो । प्र–मात्रे वरो । २१. प्र–मन्दरो । २२. फ–अरसो । प्र–एपौरसो । २३. प्र–पुत्रः । ल$_{2}$ अ–पुत्रो हि । २४. फ–कर्मणि ।

N] सर्व-कर्म-करश् चैव भविष्यति तवांऽगने ॥७४॥ [N
न वक्तुं सम्-अर्थोऽहं स्वयम् एवाऽऽत्मनो गुणान् । [५०३
२०] कामम् अद्यैव बध्नन्तु सेतुं वानर-पुंगवाः । [५१३
२३उ] अवश्यं तव साहाय्यं मया कार्यं विशेष-तः॥ ७५॥ [N
नलस्य वचनं श्रुत्वा रामः परम-हर्षितः ।
N] सम्-उद्रम् अभिसं-पूज्य वचनं चेदम् अब्रवीत्॥७६॥ [N
भवान् पितृ-समो मह्यं पितुश् च दयितः सु-हृत् ।
N] प्रीत्या परमया युक्तस् तं नलं प्र-शशंस च ॥७७॥ [N
क्रियतां मम कार्योऽर्थः सखे सौम्य महा-मते ।
N] सम्-उद्रे बध्यतां सेतुः सह सर्वैः प्लवं-गमैः ॥७८॥[13] [N
N] ततः सुग्रीव-सचिवान् हनुमत्-प्रमुखान् हरीन् ।[15]
९५.२उ] तदा दाशरथी रामो हर्ष-पूर्वोऽब्रवीद् वचः ॥७९॥ [N
श्रुतं भवद्भिर् वचनं सम्-उद्रस्य महाऽऽत्मनः ।
४] अत्र यत् संवि-धातव्यं तत् सर्वं संवि-धीयताम् ॥८०॥ [N
एवम् उक्त्वा ततस्[21] तं[21] तु सु-ग्रीवं[22] वाक्यम् अब्रवीत् ।

---

१. फ-वरांगने । २. फ रा प्र घ अ-न तु वक्तु । ३. च-गुणात् । फ रा प्र घ अ-गुणा । ४. प्र-सेतुर् । ५ फ-नास्ति । ६.रा-न तस्य । ७.आ-दायितो हरेः । रा घ-दयित सुहृत् । ८. फ म-च परया । ९. रा घ-युक्त वं । म-युक्तं त । १०. रा घ-प्रशशास । ११. रा-क्रियार्थम् । १२. घ-समुद्र । १३. अत्र परं सर्गसमाप्तिः-च रा प्र घ-इत्यार्षे रामायणे सुन्दरकाण्डे समुद्रदर्शनं नाम सर्गः । ल२ अ-इत्यार्षे सुन्दरकाण्डे समुद्रदर्शनं नाम सर्गः । १४. च-सचिवा । १५. फ-हनूमत्० । १६. घ रा प्र घ ल२-अतो नवः सर्ग आरभ्यते । १७. अ-दाशरथी । रा-दाशरथि । प्र-दाशरथो । ल२-दाशरथो । १८. घ रा प्र घ म ल१ ल२ अ-०पूर्वो-ऽब्रवीद् । १९. रा-भवद्भि । २०. फ म-वीर्य । २१. फ ल२-जं तु । घ घ अ-तांस्तु । २२. आ फ-सुग्रीवं ।

N] आ-दिशत् त्वं महा-बाहो सेतु-कर्मणि यूथ-पान् ॥८१॥ [N
N] रामस्य तु वचः श्रुत्वा निर्-दिष्टास् ते पुरं-गमाः ।
७उ] अभि-पेतुर् महाऽरण्यं हृष्टाः शत-सहस्र-शः ॥८२॥ [५२उ
वचनात् तस्य सु-ग्रीवस् तम् एवाऽभिम-हर्षयन् ।
N] स्वयं राजाऽथ सु-ग्रीवो नलो नीलश् च वानरः॥८३॥ [N
हनु-मान् पनसश् चैव ततः दधि-मुखः कपिः ।
N] जांब-वांश् च सु-षेणश् च वेग-दर्शी च वानरः॥८४॥ [N
गजो गवाऽक्षो गवयः शरभो गंध-मादनः ।
N] युव-राजोऽगदश् चैव तारश् च वन-गोचरः ॥८५॥ [N
अन्ये च वानर-श्रेष्ठाः शत-शोऽथ सहस्र-शः ।
N] आ-स्फोटयन्तः सं-हृष्टाश् चक्रुः किलिकिलाम् अपि॥८६॥[N
ते नगान् नग-संकाशान् गृह्य शाखा-मृगर्षभाः ।
N] बभञ्जुर् वानरास् तत्र चकर्षुश् च रसा-तले ॥८७॥ [५३
बद्धुं[21] समाऽरभन् सेतुं मध्ये नद-नदी-पतेः[22] ।

---

१. आ—आदिशस् । च—प्रादिशस् । २. ल$_2$—च । ३. रा—महा॰पुण्ये । ४. ल$_1$—तु…सु॰ । ५. ल$_1$—प्रहर्षणम् । ६. फ अ—राजा तु । ७. ल$_1$—वानराः । ८. ब—हनुमां । ९. म—॰मुलक॰ । १०. फ—सुखेनश् । ११. आ फ—॰दर्शीच । १२. रा—गवय । १३. फ—शरभो । आ—सरभो । १४. ब—वानरश्रेष्ठाश्च । १५. रा य—२य ३यपादौ न स्तः । १६. फ च अ—किलिकिलाम् । म—किलिकिलान् । १७. ल$_2$ अ—नगा नागसंकाशां । ब—॰संकाशां । प्र म ल$_1$—॰संकाशा । १८. आ—भवन्तु । च ल$_2$—चमंज । प्र ब म ल$_1$ अ—चभंजु । १९. फ रा—चकपुस् । आ—चकर्षस् । २०. फ रा—॰तलान् । २१. च प्र ल$_1$,ल$_2$ आ—वद्धुं । २२. आ—समारभव् । च—सेनारमत् । २३. आ रा ब—॰पते ।

N] वेग-साराः प्रगे काले महाऽभ्रम इव वायुना ॥८८॥ [N
शैलांश् च वानरास् तूर्णं चूतान् नीपांस् तथैव च ।
८] कुटजान् अर्जुनांस् तालांस् तमालांस् तिन्दुकान् वटान् ८९[५
स-मूलान् अपि चोन्-मूलान् कृत्वा वृक्षान् महौजसः ।
N] इन्द्र-केतून् इवोद्-यम्य प्र-जग्मुर् बाहु-शालिनः॥९०॥ [५६
लता-पादप-पुष्पाणि नालिकेरांश् च पुष्पितान् ।
N] खर्जूरान् पनसान् आम्रान् अशोकांस् तिलकान् अपि[12]॥९१॥[N
९पू] वृक्षाणां तानि कूटानि गिरीणां शिखराणि च ।
N] प्र-चिक्षिपुस् तृणैः सार्धं महतश् च मही-रुहान्॥९२॥[13][N
अन्यांश् च वृक्षान् आ-दाय तूर्णं काष्ठं च सर्व-तेः ।[14]
९उ] सागरे सलिले सेतुं चक्रुः शत-सहस्र-गः ।[15]
N] तैः शैलैर् अव-कीर्णैश् च चक्रुः सेतुं महोदधौ॥९३॥[16][N

---

१. आ—०सारोः । २. च रा व म ल$_1$—ह्लेवे । प्र—ह्लवा । ल$_2$ अ—ह्लवकाले ॥ ३. फ घ—शालां मलानश्वकर्णी । रा प्र व म ल$_1$ ल$_2$ अ—सालांश्च वा० । ४. आ फ घ—नीपांश् च वानराः । ५. ल$_2$ अ—अर्जुलांस् । घ—अर्जुनां स्ताली । ६. प्र—ढिर्मुकाघरान् । रा—ढिंदुकान् वरान् । म—विंसुकान् वटान् । ल$_1$—ढिल्वकान् सुजान् । ७. फ—इन्द्रवारुणि चोद्यम्य । प्र—इन्द्रकेतूनिवोद्रस्य । ८. फ—प्रजहुर् । ९. रा व—बलशा० ॥ १०. फ—०पुष्पानि । ११. रा प्र घ म ल$_1$—नालिकेलांश् । ल$_2$ अ—नारिकेलांश् । १२. च रा प्र व म ल$_1$ ल$_2$ अ—नास्ति । १३. फ—शिपराणि । १४. आ फ रा ल$_1$—मृगकाष्ठं । १५. आ फ—०श । १६. घ—नास्ति । १७. व म ल$_1$ ल$_2$ अ—सालैर० । प्र—साटैरिव कीर्णै । फ—शालैश्चाश्वकर्णैश्च । १८. फ प्र—पर्वतैश्च वानराः । १९. अतः परं भिन्नक्रमोऽधिकश्च पाठः—फ घ रा प्र व म ल$_1$ ल$_2$—कुटजैरर्जुनैस्तालैस्तमालैस्तिन्दुकैर्वटैः । महद्भिः पर्वताग्रैश्च चक्रुः सेतुं महोदधौ ॥

दश-योजन-विस्तारम् आ-यतं शत-योजनम् । [७६पू
१२] नलश् चक्रे महा-सेतुं मध्ये नद-नदी-पतेः ॥९४॥¹[६१पू
ततः शाखा-मृगाः सर्वे पुष्पितान् विहगाऽयुतान्³ ।
१४] स-मूलांस् तूर्णम् उत्-पाट्य चिक्षिपुर्⁵ लवणाऽम्भसि ॥९५॥⁶[N
वृक्ष-पर्णाणि काष्ठानि वृक्षांश् चाऽश्म-तृणानि च ।
१५] सम्-उद्रे क्षिप्यमाणानि न श(?स)सं(? स्रं)सुः कथं-चन ॥९६॥[N
शैलोनां दीर्य-माणानां वृक्षाणां चैव पात्यताम् ।
२१] बभूव (-?व) तुमुलः शब्दस् तदा तस्मिन् महोदधौ ॥९७॥[६६
दश-कोटि-परीमाणा प(?वि)ष्टिः संमे-अधिकाऽपि वा ।
N] तृण-काष्ठ-वरंडीभिः सागरं सम्-अपूरयत ॥९८॥ [N
अ-मानुषं तु कुर्वाणा वानराः कर्म तेऽद्भुतम् ।

---

१. फ-नास्ति ॥ २.फ-ते हि साखा० । ३. फ-भ्रमरायुतान् । ४.फ-पादपान् । ५. आ-विक्षिपुर् । ६. प्र घ रा म ल₁,ल₂ अ-अतः परं 'दशकोटिपरीमाणा' इत्यादिपाठो व्यत्यासेन पठितः । ७. आ-वृक्षपर्णामुपादाय । घ रा प्र ॥ ल₁-वृक्षपर्णान्युपादाय । ल₂ अ-वृक्षपर्णाण्युपादाय । ८. आ-चाम्ये तृ० । फ-चाल्पे तृ० । ९. घ रा प्र व ल₂-०मानानि । १०. फ-न च शसंसुः । च घ-न च सेसुः । रा-न चस्लेसु । प्र-न च सेदुः । म-वान् शसंसुः । अ-न च शसेसुः । ल₂-न चचेसु ॥ ११. आ-शैलानां । च-शालानां । १२. फ-भिद्यमानानां । प्र-धार्यमाणानां । म ल₁ ल₂ अ-दार्यमाणानां । १३. फ-वृक्षाणां चैव पावने । च-द्रुमाणां च सहस्रशः । रा व-द्रुमाणां चैव विशेषतः । प्र म ल₁ ल₂ अ-द्रुमाणां च विशेषतः । १४. रा व-बभूवुर् । १५. फ-संघः तदा । रा व-शब्दस्तत्र । १६. च रा प्र ध म ल₁,ल₂ अ-तत्र महार्णवे ॥ १७. व अ-परीमाणाः । प्र-परपाणां । १८. म-संवेश्य । फ-विष्टः । १९. म-स...धिकारे । २०. आ-तृणकाष्टं चरंचीभिः । च रा प्र व म-तृणकाष्टा वरंडीभिः । २१. प्र ल₂ अ-समपूजयत् ॥ फ-समपूरयन् । २२. आ फ घ-रम । २३. च-कुर्वाणा सगवानराः । २४. आ च-तद्भुतं । फ-रा प्र घ ल₁ अ- ते द्रुतम् ।

N] तत्र तत्र व्यु-अवर्तन्त वेल-वन्तो वली-मुखाः ॥९९॥ [N
नाग-प्राणा महा-वेगाः कपयः काम-रूपिणः ।
२३] पर्वतान् उप-कर्षन्ति नखैः परि-लं(?लि)ष(?ख)न्ति च १०० [५८
ते वै गोष्ठ्या-ऽव-हास्यैश् च कुत्सयन्तः परस्-परम् ।
N] आ-जह्नुः संक्रमं-द्रव्यं यथा-शक्त्य् अति-शक्ति च ॥१०१॥[१२] [N
N] प्र-क्षिप्यते च तत्र सर्वं तेन सस्वैनिरे दिशः ।
२२पू] उन्मत्त-भूतः क्षुभितो व्या-घूर्णन्न् इव सागरः ॥१०२॥[१५] [N
विचित्र-पुष्पा गिरयो धातु-चित्र-शिखास् तथा ।

---

१. फ-विवर्त्तन्तो । प्र-विवर्धन्तो । २. फ-विलपन्तो ॥ ३. च रा-सहावेगाः । ४. ल१-कारयत् । ५. ल२ अ-प्राणरूपिणः ६. फ-अवकर्षन्ति । च म ल१ ल२-अपकर्षन्ति । रा-अपि कर्षन्ति । ख प्र अ अपि कर्षन्ति । ७. फ-यन्त्रैः परिनयन्ति । आ-न पैः परिल० । रा-नखैः परिनयन्ति । ख ल१-नखैरपनयन्ति । च प्र अ ल२-नखैः परिणयन्ति । म-यन्त्रैः परिणयन्ति । ८. अतः परमधिकः पाठः-च रा प्र ख म ल१ ल२ अ-ते नगान्नगसंकाशास्तत्र शाखामृगर्षभाः । बभंजुर्वह्वस्तत्र समुद्रं चावतस्थिरे ॥ ९. फ-ते गोष्ठ्यवहासैश्च । च-ते वै गोष्ठ्यावहासैश्च । आ अ-ते चैव... ...हैश्च । ख-ते चैव निनद......सैश्च । प्र-ते चैव......बहु...रम्यैश्च । म-नानानृत्यातिहासैश्च । ल१-ते चैव वानरा यस्य । ल२-चेव......स्यैश्च । १०. आ च-संक्रमं द्रव्यं । रा-संभ्रमं द्रव्यं । ख-परमं द्रव्यं । प्र-सर्वतो द्रव्यं । म-संक्रमन् द्रव्यं । ल१-सरसं द्रव्यं । ल२-सद्रुमं द्रव्यं । ११. फ-यथाशक्त्या अभिसर्प्य च । रा ख-यथाशक्त्यातिशक्तिश्च । प्र-यथाशक्त्या यथोति......... । म-यथा शक्त्यानिशक्ति च । १२. आ फ-अतः परं "दारीरेष्वपिरोरवे" इति ११३ श्लोकं यावत् पाठो नास्ति ॥ १३. आ प्र-सस्वनता । ल२ अ-सस्वनिरे । १४. च-उन्मत्तः भूतः । १५. रा प्र ख म ल१ ल२ अ-अतः परमधिकः पाठः-कुर्वाणास्सागरे सेतुं वानरास्ते सहस्रशः ॥ १६. च-०पुष्पा । १७. रा-धातुचित्रासिखास् । ख-धातुचित्र० । ल२-धातुचित्रा शिखास् ।

N] क्षोभ्यन्ते हरि-शार्दूलैर् उद्-यतैः सेतु-बन्धने॥१०३॥ [N

तस्मिन् कोटि-सहस्राणि वानराणां महाऽऽत्मनाम् ।

N] चिचिंपुर् वि-विधं द्रव्यं सम्-उद्रे सेतु-बन्धने ॥१०४॥ [N

शैलैस् तालैस् स-मन्दारैस् तथा वेत्र-लता-चयैः ।

१७] सेतुं बबन्धुः कीलैश् च वृक्षैश् च सु-महाबलैः ॥१०५॥[N

नव-मेघ-निकाशैश् च नगैः परम-पुष्पितैः ।

१८] तैः स-मूलैः स-पत्रैश् च नलः सेतुं नि-बद्धवान् ॥१०६॥ [N

बलिभिर् वानरैर् वीरैर् बाहुभिस् तीर-जा द्रुमाः ।

२०] ताडिताः पातिताश् चैव सम्-उद्रे सरितां पतौ ॥१०७॥ [N

सु-ग्रीवश् चाऽपि शृङ्गाणि गिरीणां शिखराणि च ।

२४] आ-रुह्याऽऽरुह्य शैल-शश् चिक्षेप लवणाऽम्भसि॥१०८॥[N

दुर्धरस्याऽङ्गदः श्री-मान् शृङ्गम् आ-रुह्य पाणिना ।

२५] लवणाऽम्भसि चिक्षेप स-विद्युतम् इवाऽम्बुदम् ॥१०९॥ [N

सशृङ्ग-कन्दर-वनं सर्व-तः पुष्पितं महत् ।

२६] आ-रुह्य जह्रतुः श्री-मान् मैन्दश् च द्वि-विदश् च हैं॥११०॥[N

---

१. च-क्षाम्येते हरिशार्दुळै । २. च-॰बन्धनम् । प्र ब-त्रुटितः ॥ ३. च-कौटि ॰ । ४. च-महात्मानाम् । ५. च ल$_2$-चिक्षिपुर् । ६. प्र ल$_1$-नास्ति ॥ ७. रा प्र ब ल$_1$ ल$_2$ अ-सालैस् । ८. रा ब-॰लतारुचयैः । प्र-॰लताश्चयैः । म-॰लतासयैः । ९. च ब-ययन्ध । म अ-बन्धु ॥ १०. ब ल$_2$-॰बलैः॥ ११. रा ब-नागैः । १२. च म ल$_1$ ल$_2$ अ-समुलैः । १३. प्र-स बन्धवान् । १४. रा-वीराः । च प्र म ल$_1$ ल$_2$-नास्ति । १५. रा-पादितास् । ब-पाटितास् । १६. रा ब म ल$_1$-शृङ्गानि । १७. च प्र अ-गिरीशि॰ । १८. च प्र म ल$_1$ ल$_2$ अ-शतश् ॥ १९. ब अ-दुंदुरस्यांगदः । रा-दुर्दरस्या॰ । ल$_2$-ददुः रस्यांगदः । प्र-दुर्दुरस्यां॰ । म-दुर्दरस्यांगदः । ( दुर्धरस्यां॰ ) । २०. ल$_1$-आगृह्य । २१. ल$_1$-नास्ति ॥ २२. ल$_1$-नैंदाश् । २३. रा ब ल$_2$ अ-द्विविधश्च ह । ल$_1$-द्विविधश्च यः ॥

हनु-मता च वीरेणं यत्रं कृतं सेतु-कर्मणि ।
सप्त-योजनं-विस्तीर्णं पर्वतं प्राऽऽद्य पाणिना ।
N] लवणाऽम्भसि चिक्षेप मध्ये कपि-वृषस् तंदा॥ ११९॥[N
गिरीणां भिद्य-मानानां सागरे सेतु-कर्मणि ।
२७] भुवि दिव्य् अन्तरिक्षे च श्रूयते नि-नदो महान् ॥११२॥ [N
तेन वि-त्रासिताः सर्वे मृग-पक्षि-गणा वने ।
२८] नाऽशक्नुवन्न् उत्-पतितुं शरीरेष्व् अपि शेरते ॥११३॥[N
क्रियमाणे तदा सेतौ वानरैस् तैः सहस्र-शः ।
N] उन्मत्त-भूतः क्षुभितो व्यो-चूर्णन्न् इव सागरः॥११४॥ [N
प्र-क्षिप्यमाणैर् उपलैः सहसा क्षोभितं जलम् ।
N] समुत्-पत्य तदाऽऽकाशं प्रति-पेदे पुनः पुनः॥११५॥ [N

इत्यार्षे रामायणे सुन्दर-काण्डे समुद्र-धैर्षणं
नाम षण्णवतितमः सर्गः ॥९६॥

---

१. ल$_2$ अ-वेगेन । २. प्र-वत् । ३. च-०योजनमास्तीर्ण ।
४. प्र ल$_1$ अ-नास्ति । ५. च-लवणंभसि । ६. रा-चपिवृषस् । ७. च रा-तथा । ८. आ-अधिशेरते ॥ ९. आ-कुर्वागे स्म । फ-कुर्वाणैः स्म ।
१०. फ-मेतुं । च रा ल$_2$-सेतो । ११. प्र-त्ते । १२. आ-व्याघूर्ण ॥
१३. फ-प्रक्षेप्यमाणैर् । रा च प्र ल$_1$-प्रक्षिप्यमानैर् । १४. रा-उपलै ।
१५. च-प्रतिपदे ॥ १६. ल$_2$ अ-नास्ति । १७. आ-०प्रदर्शनो।
रा-०प्रवर्णनं । फ प्र म ल$_1$ अ-०प्रदर्शनं ।

तत्तो देवाः स-गन्धर्वाः सिद्धाश् च परमर्षयः ।
२९] आ-हत्य गगनं तस्थुर् द्रष्टु-कामास् तद् अद्भुतम् ॥१॥ [७९
ऋषयः पितरो यक्षा राजर्षि-पतगोरगाः ।
३०] आ-जग्मुः प्रेक्षितुं सेतुं बध्यमानं महाऽर्णवे ॥२॥ [ N
अ-विभ्रम् एव रामस्य सर्वे वियद्-अधिष्ठिताः ।
N] ऊचुः परम-संहृष्टाः परस्पर-समागमे ॥३॥ [ N
अ-विदूराच् च रामस्य सर्वे वि-यति सं-स्थिताः ।
३१] पूजां च राघवे चक्रुर् ऊचुश् च मधुरा गिरः ॥४॥ [ N
ऊचुः परम-संहृष्टाः परस्परम् इदं वचः ।
दण्ड एव परो लोके दुर्-जने प्रति-भाति नः ।
N] न क्षमाऽऽद्य् अकृत-प्रज्ञेषु शां(?सां) त्वं-दानम् अथाऽपि वा॥५[४७
तितीर्षोः सागर-जलं सेतु-कर्म-चिकीर्षया ।
N] ददौ दण्ड-भयाद् गाधं राघवस्य महोदधिः ॥६॥ [४८

---

१. आ ल२—सगन्धर्माः । फ रा ब—सगन्धर्वा । २. आ—गगने । फ—गगणं । ३. च घ—० कामा ॥ ४. आ—०गरुडा नगाः । फ—०गरुडो नगाः । ५. च—प्रेषितुः । आ—प्रेक्षितं ॥ ६. फ—अविभ्राय व । ७. आ—सर्वेषां चित्तधिष्ठिता । च प्र ल२ अ—सर्वे व्यायन्त्यधिष्ठिताः । रा—सर्वे व्यायति (न्ति) धिष्ठिताः । म—सर्वे व्यायन्तु धिष्ठिताः । ल१—सर्वे व्यायत्यातिष्ठताः । ८. म—परस्परं संहृष्टाः ॥ ९. आ—संस्थितः ॥ १०. च प्र ब ल१ अ—पुनः । ११. फ—धिक् क्षमामकृतज्ञेषु । च—धिक्क्षमानमकृतः प्रज्ञे । रा प्र म च—न क्षमा ह्यकृतप्रज्ञे । ल३ अ—न क्षमा ह्यकृतप्राज्ञे ॥ १२. च—सर्वं दानम् । रा व प्र म ल१ ल२ अ—सामदानम् ॥ १३. रा—तितीर्षो । १४. आ—सागरजलसेतु० । १५. रा—गाध ॥

३२५ ] न चकार पुरा कश्चिन् न च कर्त्ता भविष्यति ।
N] सोऽमरैष् अपि लोकेषु सागरे सेतु-बन्धनम् ।
३२३ ] उपाऽऽदाय सुरान् सेन्द्रान् भवितान्यत्र राघवात् ॥७॥[N
ये रामम् एवं द्रक्ष्यन्ति सम्-अन्ताद् अ-कुतोभयम् ।
३३ ] कारयन्तम् इमं सेतुं सम्-उद्रे सरितां पतौ ॥८॥ [N
तेषां पुत्रा भविष्यन्ति वीर्य-वन्तो यशस्-विनः ।
३४ ] आ-हर्त्तारः परोऽर्थस्य यशसो वि-क्रमस्य च ॥९॥ [N
यावत् सम्-उद्रस् तावच् च सेतु-र्बन्धोर् (न्धो) भविष्यति ।
३५ ] यावच् च सागरे कीर्तिस् तावद् रामे भविष्यति ॥१०॥[N
कः सम्-उद्रस्य बध्नाति सेतुम् इत्य् एव चारणाः ।
३६ ] विद्या-धराश् च शत-शः सु-प्रीतास् तूर्णम् आ-ययुः ॥११॥[N
रामः सेतुं समुद्रस्य बध्नातीऽति दिशो दश ।
३७ ] जगाम तुमुलः शब्दः पृथिव्याम् अपि शुश्रुवे ॥१२॥ [N
तद् अ-चिन्त्यम् अनाऽधृष्यम् अद्भुतं लोम-हर्षणम् ।

---

१. रा—कर्ता नाकरिष्यति । घ—कर्ता भविष्यति । प्र म ल$_1$ ल$_2$ अ—कर्ता न करिष्यति । २. च—सामरेष्वपिलो० । रा ब म ल$_1$—सामरे त्रिषु । प्र ल$_2$ अ—सामरेषु च । ३. फ—सुराजेन्द्राद् । ४. च रा व—भविता यत्र । ५. राघवः ॥ ६. आ—एव । ल$_1$—इति । ७. च—कारयन्तमि……॥ ८. आ रा प्र घ म ल$_1$ ल$_2$ अ—आहर्त्ता च । ९. रा व म ल$_1$—परार्थस्य । प्र—पुराणस्य । ल$_2$ अ—परा यस्य ॥ १०. प्र ल$_2$ अ—समुद्रात् । ११. फ—तावत्तु सेतु एष । च म—तिष्ठेत तावत्सेतुर्भ० । रा ब—तिष्ठेतु सेतुर्भ० । प्र ल$_1$ ल$_2$ अ—तिष्ठन्तु तावत्सेतु । १२. आ—रामो ॥ १३. रा—समुद्रेषु । १४. रा प्र व म ल$_1$ ल$_2$ अ—सेतुं नदनदीपतेः । फ—० व चारणः । १५. रा ब—विद्याधरश् । १६. फ—चाप्सरसः । रा—च शतसः । १७. च—तूर्ण…………भ्ययुः । आ फ ब—तूर्णमभ्ययुः ॥ १८. रा—तुमलः । १९. च—सुश्रुवे ॥ २०. प्र—तदा चिन्त्यमना० । आ फ—सदचिन्त्यमाना० । २१. रा च ब ल$_1$ ल$_2$—रोम० ॥

N] ददृशुः सर्व-भूतानि सागरे सेतु-बन्धनम् ॥१३॥ [७८
कृतानि प्रथमेनाऽह्ना योजनानि चतुर्दश ।
N] वानरैर् नग-संकाशैः सेतु-कर्मणि नि-र्भ्रितैः ॥१४॥ [६८
ततो विद्या-धराः सर्वे देवा देवर्षयस् तथा ।
N] यक्ष-भूत-पिशाचांश् च सर्वे चाऽप्सरसां गणाः ।
वि-स्मितास् तस्थुर् आकाशे वर्ध्यमाने महोदधौ ॥१५॥ [७९
श्रान्तान् न तपते सूर्यः कदाचिद् अपि वानरान् ।
२८ ] अभ्राणि जज्ञिरे दिग्भ्यः पीतां सूर्य-प्रभाम् इव ॥१६॥[N
प्र-ववर्ष च पर्जन्यो मारुतश् च शिवो[13] ववौ ।
२९ ] वृक्षेभ्यश् च तदा जज्ञे कपि-भक्ष्यं फलं परम् ॥१७॥ [N
ततोऽस्तं[15] गत आदित्ये नि-पेतुर् वानरर्षभाः ।
आ-रुह्यांस् तु समा-स्थाप्य सर्वे ते सर्वतो-दिशम् ।
N] सुषुपुः सुमहा-वीर्याः ससुग्रीव-विभीषणाः ॥१८॥[23][N
कथं दर्शयेत सा लंका कथं वध्येत सागरः ।
N] एवं[25] समुद-युक्ता भूत्वा सेतवे[26] वानरर्षभाः ॥१९॥ [N

---

१. फ–प्रथमेह । च–प्रथमेणाह्ना । २. फ ल$_2$ अ–नाग॰ । ३. आ ल$_2$ अ–निर्भ्रितैः ॥ ४. रा–सर्वैः । ५. रा–॰पिशाचस् । ६. च–वध्यमानेन ॥ ७. फ–सान्वाम्न तपते । रा अ–आर्तानापतते । प्र प म ल$_1$ ल$_2$–अर्तान्न तपते । अ–आर्तान्न पतते ।८. फ–सूर्यस्तदा वानरपुंगवान् । ९. प्र–अंभ्रानि । १०. च–॰अज्ञिर । ११. आ रा–पीता ॥ १२. आ–पर्यन्यो । फ–पर्यण्यो । रा–पर्यन्थे । १३. आ–शि……वौ । १४. फ म–तथा । १५. फ ल$_1$–॰भक्षं । १६. [illegible] प्र व ल$_2$ अ–परं फलं । फ म–फलं बहु ॥ १७. व ल$_2$–ततोस्तगत । १८. आ ल$_1$–अरह्यांस् । प्र–मारह्यंस् । १९. आ च रा प्र ल$_1$ ल$_2$ अ–समास्थाय । म–सममास्थाय । २०. च–पर्वता दिशम् । २१. आ–सुषुवुः । फ–सुप्सुवुः । २२. रा म ल$_1$–॰विभीषणः । २३. च–नास्ति ॥ २४. रा–दर्शयंत । २५. आ रा म–कथं । २६. आ फ प्र म ल$_1$ ल$_2$ अ–शेरते । रा म–सर्वे ते ॥

उत्साह-युक्ता हरयः कौतूहल-समन्विताः ।
N] रात्रि-शेषं तदृ अत्यं-उग्रं निन्युः कृच्छ्राद् इवोदिताः ॥२०[N
ततः प्रभात-समये कृत्वा पौर्वाऽह्नि(ह्नि)कीं क्रियाम् ।
परस्परं समुत्-सौह्य प्र-स्थिताः सर्वतो-दिशम् ।
N] ततः शृंगाणि जगृहुः पर्वतानां प्लवं-गमाः ॥२१॥ [N
विचित्र-पुष्पा गिरयो धातु-चित्र-शिखास् तथा ।
N] शोभन्ते हरि-शार्दूलैर् उद्-यतैः सेतु-बन्धने ॥२२॥ [N
तानि कोटि-सहस्राणि वानराणां महाऽऽत्मनाम् । [७९१
N] चिक्षिपुर् वि-विधं द्रव्यं सम-उद्रे सेतु-बन्धने ॥२३॥ [N
शैलैस् तालैः स-संतानैः तथा वेत्र-लता-शतैः ।
N] सेतुं बबन्धुः कीलैश् च द्रुमैश् च सु-महा-बलैः ॥२४॥ [N
नागै मेघ-निकाशैश् च नगैः परम-पुष्पितैः ।
N] तैः स-मूलैः स-पत्रैश् च नलः सेतुं वबन्ध ह ॥२५॥ [N
बलिभिर् वानरैर् वेगाद् बाहुभिस् तीर-जा द्रुमाः ।
N] ताडिताः पातिताश् चैव सम-उद्रे सरितां पतौ ॥२६॥ [N
प्रिय-कामस् तु रामस्य सु-ग्रीवः संप्र-हर्षयन् ।

---

१. ख तदात्युग्रं । २. फ च रा प्र ब म ल$_1$ ल$_2$ अ-इवोद्यताः । ३. रा-पौर्वाणिकिं । ४. रा-क्रिया । ५. आ फ म-समुत्साय । प्र-समुत्साय । आ-समासाद्य । ६. रा ब-शृङ्गानि ॥ ७. च-विचित्रा पुष्पा । ८. रा-धातुश्चित्र० । प्र-धातुश्चित्रशिखस् । ९. आ फ-हरिशार्दूलै उद्यताः । घ-०शार्दूलैरुद्यता । प्र-०शार्दूलैरुदितैः ॥ १०. आ-कोटी० । ११. इत ऊर्ध्वं कियांश्चित्पाठः केषांचित्कोशाना साक्षतो पूर्वस्मिन्सर्गे टिप्पणीकृतः पठितचरः द्र० । अत एवाऽत आरभ्य 'सरितां पतौ' इत्यन्तः पाठो-च रा प्र ब म ल$_1$ ल$_2$ अ-नास्ति ॥ १२. फ-शाखतालैः । १३. फ-०चयैः । १४. आ-ववंध ॥ १५. आ-नगमेनि० । १६. फ-नागैः । १७ फ-व्यबंध यत् ॥ १८. फ-वलिभि ॥ १९. रा-०कामास्त । २०. फ-समहर्षयत् ।

N] वि-वर्धुं स समा-रेभे स्वयं नद-नदी-पती ॥२७॥ [N
वेगै-सारो(रि) प्तु (रिम्) गे काले महाऽभ्रम् इव वायुना ।
N] स्वयं वानर-राजेन गिरि-शृंगम् उपाऽऽहृतम् ॥२८॥ [N
सु-ग्रीवः शैल-शृंगाणि गिरीणां शिखराणि च ।
N] आ-रुह्य शत-शो वृक्षैश् चिक्षेप लवणाऽम्भसि ॥२९॥ [N
दर्दुरस्याऽङ्गदः श्री-मान् शृंगम् आ-रुह्य पाणिना ।
२९] लवणाऽम्भसि चिक्षेप स-विद्युतम् इवाऽम्बुदम् ॥३०॥ [N
अर्द्ध-योजन-विस्तीर्णं विन्ध्यस्य शिखरं महत् ।
N] सु-षेणः पाणिना गृह्य पातयामास सागरे ॥३१॥ [N
प्रक्षिप्त-मात्रे शिखरे जल-राशिः समुत्-[illegible] ।
N] आकाशाऽभि-मुखो भूत्वा वि-ससर्प समन्त-तः ॥३२॥ [N
नीलेन मलयस्याऽथ शृंगं द्रुम-शताऽऽकुलम् ।
दोर्भ्याम् उत्-पाट्य तरसा क्षिप्तं लवण-सागरे ।

---

१. आ-विवर्द्धु । फ च-वर्द्धुं । प्र रा अ ब ल$_1$ ल$_2$ म-वर्द्धुं । २. फ च प्र रा म अ-समारभत्सेतुं स्वयं । ब ल$_1$-समारभेत्सेतुं स्वयं । ल$_2$-समारेभे सेतुं स्वयं ॥ ३. फ-वेगेनोपप्लवे । रा-वेगसारोप्लवे । आ प्र ब ल$_2$-वेगसारोऽर्णवे । अ म ल$_1$-वेगसारो प्लवे । ४. फ ब-उदाहृतम् ॥ ५. फ-०शृंगानि । ६. फ-शिखराणि । ७. फ-भास्वरात्व शतशत् । ८. प्र ब म ल$_1$ ल$_2$ अ-नास्ति ॥ ९. आ-हृत्वा मुख्य ॥ १०. आ-०विस्तीर्णं । ११. अ-शिखरं । १२. फ च-सुखणः । प्र-सुखेणः । [illegible]-सुखेनः । १३. रा प्र ब म ल$_1$ ल$_2$ अ-पातयामास पाणिना गृह्य ॥ १४. [illegible]ब म ल$_1$ अ-प्रक्षिप्यमाणे । रा प्र ब ल$_2$-प्रक्षिप्यमाने । १५. फ रा-[illegible]शिखरे । १६. च-०रासि । रा-०राशिं । १७. प्र-समुत्थित्वा । १८. च रा प्र [illegible] म ल$_1$ ल$_2$ अ-गत्वा । १९. रा-विससर्ज ॥ २०. रा-शृंगद्रुमशत० । [illegible]-शृंगं द्रुमसमाकुलं । प्र, ब म-शृंगं द्रुमलताकुलम् । च-शृंगं द्रुश० । [illegible]१. आ फ-उत्पाद्य । ब-उत्पात्य । २२. रा-क्षिप्तं ।

N] शब्दश् च सु-महान् य(?ज) ज्ञे वि-च्युताम् अम्बरे यथा ॥३३[N

स-शृंगं[2] चन्दन-वनं सर्व-तः पुष्पितं महत् ।

२६] आ-रुह्याऽऽजह्रतुः शीघ्रं मैंदश् च द्वि-विदश् च ह ॥३४॥[N

हनू-मता च वीरेण यत् कृतं सेतु-कर्मणि ।

सप्त-योजन-विस्तीर्णं पर्वतं प्राऽऽप्य पाणिना ।

N] लवणाऽम्भसि चिक्षेप मध्ये कपि-वृषस् तदा ॥३५॥[7] [N

गजो गवाऽक्षो गवयः शरभो गन्ध-मादनः ।

शृंगाण्य् आ-दाय पंचैते महेन्द्राद् आ-गता द्रुतम् ।

N] चिक्षिपुः सहसा सर्वे पर्वतान् पर्वतोपमाः ॥३६॥ [N

पर्वतांश् च सुसं-क्रुद्धाः पतन्तः सागरेऽम्भसि ।

N] क्षोभं चक्रुः सम्-उद्रस्य क्षीरोदस्येव मन्थने ॥३७॥ [N

गिरीणां भिद्यमानानां सागरे सेतु-कर्मणि ।

N] [11]भुवि दिव्य् अन्तरिक्षे च शुश्रुवे नि-नदो महान् ॥[21]३८॥ [N

---

१. फ च रा प्र ब म ल$_1$ ल$_2$ अ-गावो ॥ २ प्र-सशख च० । च-सश्टगं चन्दनवने । ल$_2$ अ-सश्टगचन्दनवने । ३. फ प्र ब म ल$_2$-आरह्य जह्रतुः । फ-आरह्य जह्रुः । ४ फ च प्र ब म ल$_1$,ल$_2$ अ-श्रीमान् । रा-क्षिप्रं । ५. च-द्विविधश्च । ल$_1$ अ-द्विद्विधश्च । ६. फ-लवनाम्भसि । ७. प्र ब म ल$_1$ ल$_2$ अ-नास्ति ॥ ८ आ-सरभो । ९.च प्र ब ल$_1$-पचैते शिखरान गृह्य । रा-पचैते शिखरान्गृह्य । १०. रा-महेन्द्रागता । ११. फ-द्रुमम् । १२. फ-पर्वतात् ॥ १३. फ च रा म ल$_1$ ल$_2$ अ-पर्वतास्तु सुसमुत्का: । प्र-पर्वतास्तासु संमुक्ता: । प्र-पर्वतास्तु समुत्यक्ता: । १४ प्र ब अ-पततो लवणाम्भसि । १५. च-वक्र । १६. प्र [illegible] ल$_2$ अ-समुद्रस्य । १७. आ-क्षारोदस्यैव । च रा प्र ब ल$_1$ ल$_2$ अ-सागरस्येव । १८. आ-बन्धने । रा-मन्थनम् । ब-मंथरे ॥ १९. च प्र ल$_1$ ल$_2$ अ-दिवि भुम्यन्त० । रा ब म-दिवि भूम्यन्त । २०. रा ब म ल$_2$ अ-श्रूयते । प्र ल$_1$-श्रूयेत । २१. आ-नास्ति ॥

तेन वि-त्रासिताः सर्वे मृग-पक्षि-गणा वने ।
२८] अशक्नुवन् प्रति-स्थातुं शरीरेष्व् एव शेरते ॥३९॥[1] [N
आश्चर्यम् इत्य्-अभाषन्त[2] मुनयो दिवि[3] सं-स्थिताः ।
N] पुष्प-वर्षाणि मुमुचुः[4] स-गन्धर्व-महोरगाः ॥४०॥ [N
साधु साध्व् इति भाषन्तो[5] वानरान्[6] प्र-शशंसिरे ।
N] देव-दुन्दुभयो[7] नेदुर् ननृतुश् चाऽप्सरो-गणाः[8] ॥४१॥ [N
तुम्बरु[9]-प्रमुखाश् चैव गन्धर्वा गीत-कोविदाः[10] ।
N] दिव्य[11]-तानेषु गायन्ति तन्त्री-लय-समन्वितम्[12] ॥४२॥ [N
दिवि तेषां नि-नादस् तु वानराणां च नि-स्वनः ।
पर्वतानां च सं-घर्षाच्[13] छब्दः सम्-अभवत् तदा[14] ।[15]
N] शुचि[16] शुक्र(क्रे)-व्यतिक्रान्ते[17] मेघानां गर्जताम्[18] इव ॥४३॥ [N
सत्त्वानां च महा-नादैः स्वनिता[19] गिरि-कन्दराः[20] ।

---

१ आ प्र व म ल₁ ल₂ श्र–नास्ति ॥ २. फ–अभाषन्त । ३. रा दिति । ४. फ–मुमुचुस्तथा गंधर्वपन्नगाः ॥ ५. फ रा प्र व म ल₁–चामाव्य । च–चौमाष्य । ल₂ श्र–वामाव्य । ६. आ–वानराः प्रशशंसिरे । फ–०रान् प्रशसंशिरे । च–वानरांश्च प्रशंसिरे । रा व–वानरेन्द्रा प्रशंसिरे । ७. रा–देवदुंदुभयो । ८. प्र–चाप्सरसो गणाः ॥ ९. च म श्र–तुंबुरु० । १०. च रा–० कोविदा । ११. फ–दिव्यगाणेषु । प्र च–दिव्यगानेषु । व म ल₁ ल₂ श्र–दिव्यागानेषु । १२. रा–दिव्या गायन्ति गीतानि तंत्रीलयसन्वितम् ॥ १३. च–सवर्षाच्छब्दः । आ रा–संघर्षाच्छब्दः । १४. रा प्र च म ल₁ ल₂ श्र–०वन्महान् । १५. प्र–पर्वतानां च सर्वेषां घर्षाच्छब्दो अभवन्महान् । १६. फ–शचि । १७. व म ल₁–शुक्रव्यपगमे । फ–नक्रव्यतिक्रामे । च प्र रा ल₂ श्र–शुक्रव्यपगमे । १८. फ–गर्जितानि च ॥ १९. आ–स्वनित्वा । च रा प्र व ल₁ ल₂–स्वनिता । म–स्वनिता (स्तमिता) । २०. रा–गिरिकन्दरा । ल₁–गिरिकंधराः ।

N] तेन शब्देन महता नाऽन्योऽश्रूयत कंश्-चन ॥४४॥ [N
द्वितीयेऽहनि तस्मिंस् तु मध्यं प्राऽऽप्ते दिवा-करे।
N] श्रान्तास् तु वानराः सर्वे वृक्ष-मूलानि भेजिरे ॥४५॥ [N
फलानि भक्षयित्वाऽथ पीत्वा च वि-विधं जलम्।
N] वि-श्रान्ताश् च वि-तृष्णाश् च पुनः सर्वे प्र-पेदिरे॥४६[N
वृक्षान् केचित् समा-जह्रुः शिलाः केचित् समा हरन्।
N] पर्वतानां तथा सानूंस् तृण-काष्ठांस् तथाऽपरे ॥४७॥ [N
क्षिपन्ति सहसा दृप्ता वानरा लवणाऽम्भसि।
N] क्षिप्तं क्षिप्तं नलः सर्वं समी-भूतं करोति च ॥४८॥ [N
आ-गतैर् गच्छमानैश् च नर्द-मानैश् च वानरैः।
N] पर्वतैः क्षिप्यमाणैश् च सं-कुलं सर्व-तोऽभवत्॥४९॥ [N
दिवसेन द्वितीयेन षड्विंशद् योजनानि तु।
N] बद्धानि वानरैस् तैश् च समु-द्रे सेतु-कर्मणि ॥५०॥ [N
पश्चिमायां तु सन्ध्यायां यथा-स्थानानि भेजिरे।

---

१. फ च रा– नान्यच्छ्रूयत। ब अ–नान्यः श्रूयेत। प्र म ल$_1$ ल$_2$–नान्यच्छ्रूयेत। २. फ च रा प्र ब म ल$_1$ ल$_2$ अ–किंचन॥ ३. प्र ल$_1$ अ–मध्ये। ४. फ–श्रान्तास्तु वृक्षमूलानि भेजिरे वानरर्षभाः। ५. फ–भक्षयित्वा तु। च प्र ब म ल$_1$ ल$_2$ अ–भक्षयित्वा च। रा–भक्ष्ययित्वा च। ६. फ–तु। ७. आ ल$_2$ अ–वितृषात्। ८. फ च रा प्र ब म ल$_1$ ल$_2$ अ–प्रतस्थिरे॥ ९. च रा प्र ब म ल$_1$ ल$_2$ अ–नास्ति॥ १०. फ–क्षिप्तं क्षिप्तं। रा–क्षिप्तं क्षिप्तं। ११. रा–सर्वे। १२. रा–शमीभूते। ब म–शमीभूतं। १३. फ च रा प्र ब म ल$_1$ ल$_2$ अ–सः॥ १४. आ–॰माणैश्। प्र–इच्छमानैश्। १५. रा प्र ब ल$_2$ अ–नंदमानैश्। १६. आ फ च ब म ल$_1$ अ–॰मानैश्। १७. च–पर्वतोऽभवत्। प्र–सर्वतो भवेत्॥ १८. रा ब–च। १९. फ च रा ब म ल$_1$ ल$_2$ अ–वानरैस्तैस्तु। प्र–वानरेन्द्रैस्तैः॥

N] कर्पाणि कथयन्तस् ते स्थानि स्थानि प्लवं-गमाः ॥५१॥ [N
रामाये कथयान्ति स्म पश्य सेतुं महोदधौ ।
N] राम-पादाव् उप-स्पृश्य सु-ग्रीवस्य च वानराः ॥५२॥ [N
शिश्यिरे तत्र तत्रैव केचिज् जाग्रति हर्षिताः ।
N] समुद-सुकानां तेषां तु गता सा शर्वरी सुखम् ॥५३॥ [N

इत्यार्षे रामायणे सुन्दर-काण्डे सेतु-कर्माऽऽरम्भो नाम
सप्तनवतितमः सर्गः ॥९७॥



१. च–नामां य । २. फ च–रामपदानुपस्पृश्य । रा–रामपादाम्बुजस्पृश्य । ३. च–तु ॥ ४. फ–शंसिरे । आ व–शिश्यिरे । रा–शिशित । प्र ल₁ ल₂ अ–शिशिरे । ५. फ–केचिन्नयेति । रा–केचिज्जागर्ति । प्र–केचिच्च प्रतिहर्षिताः । ६. आ फ–सर्वरी । च–'''र्वरी । ७. च–सुखम् ॥ ८. अ–नास्ति । ९. फ–सेतुकर्म । १०. च–नास्ति ॥

[वं- ९५]= [अष्टानवतितमः सर्गः] =[दा-२२]

प्र-भातायां तु शर्वर्याम् उद्-गच्छति दिवा-करे ।
N] वानराणां सहस्राणि प्र-युतान्य् अर्बुदानि च ॥१॥ [N
तथैवर्क्ष-सहस्राणि गो-लांगूल-शतानि च ।
N] ववन्धुः सागरे सेतुं राघव-प्रिय-काम्यया ॥२॥ [N
अहं पूर्वम् अहं पूर्वम् इति शैलान् प्र-चिक्षिपुः ।
N] क्षिप्ता पर्वत-वृष्टिः सा चालयामास सागरम् ॥३॥ [N
क्षुभिते सागरे तस्मिन् क्षुब्धाः सागर-वासिनः ।
N] नागांश् च दानवांश् चैव किम् एतद् इति मेनिरे ।
प्र-लयः किं नु सम्प्राऽऽप्त उताहोऽमृत-मन्थनम्॥४॥ [N
N] सेतु-कर्म समा-रब्धं रामेण विदिताऽऽत्मना ।
ज्ञात्वैवं तत्त्व-तस् ते तु निरुद्-विग्नास् ततः स्थिताः ॥५॥[N

---

१. प्र म ल, ल, अ-च । २. भा फ-सर्वर्याम् । च-सर्वयाम् । ३. च रा प्र ब म ल, ल, अ-उदिते च । ४. म ल,-अर्बुधानि ॥ ५. फ-तथा ऋक्षस० । ६. च रा प्र-गोलांगूलायुतानि । ब म ल, अ-गोलांगूलयुतानि । ७ भा फ च रा ल,-बबंधु । ८. च रा प्र ब म ल, ल, अ-राघवप्रीतिकाम्यया ॥ ९. च-अहं पूर्वं इति शो···प्रचिक्षिपुः । प्र-शैलान् प्रचिक्षिपुः । १०. च-पर्वतावृष्टिः सा । रा-पर्वतवृष्टिश्च ॥ ११. च प्र रा ब म ल, अ-०भूमयः । १२. च-नागांश्च दानवांश्चैव । १३. रा-प्रलय । १४. म-द । १५. च-संप्राप्तः । रा-संप्राप्ता । १६. भा-ताहोऽमृत० ॥ १७. भा फ-समारब्धः । १८. फ प य-ज्ञात्वैव । १९. च रा प्र ब म ल, अ-विदिताः सर्वे । ल,-विविताः सर्वे । २०. रा ब ल, ल, अ-निरुद्योगास्तु । प्र-निरुद्योगास्तु ॥

N] वानरा रभसेनैव ववन्धुः सागरं तदा ।
अन्ये च सूत्रं गृह्णन्ति दृष्टिं सं-चारयन्त्य् अपि ।[६०पृ
N] समश् च क्रियताम् एवं नलम् एवं बभाषिरे ॥६॥ [N
अन्ये क्षिपन्ति ह्य् उपलान् पाद-पान् अपरे पुनः ।
N] वि-श्राम्यन्त्य् अपरे क्रान्ताः केचिन् निद्रां सिषेविरे ॥७॥ [N
आऽस्फोटयन् ववल्गुश् च चक्रुः किलकिलाम् अपि ।
N] वृक्षाद् वृक्षं पतन्त्य् अन्ये पर्वतात् पर्वतं तथा ॥८॥ [N
दिवसेन तृतीयेन चत्वारिंशद् योजनानि तु ।
N] बद्धानि कपिभिर् वीरैः शेषं तु दश-योजनम् ॥९॥ [N
स्वल्पोऽयं बध्यते सेतुर् इति कृत्वा प्लवं-गमाः ।

---

१. म–वानराः । २. फ–सागरे । ३. च ल१–सूत्रं गृह्णन्ति । रा य म अ–सूत्रं प्रगृह्णन्ति । प्र–सूत्रं प्रगृह्णन्ति । आ म ल२ फ अ–च सूत्रं गृह्णन्ति । ४. आ–दृष्टिं । फ–दृष्टिं । प्र–दृष्टं । म ल२ अ–सृष्टिं । ५. फ–धारयन्त्यपि । च रा प्र य म ल१ ल२ अ–संधारयन्त्यपि । ६. फ–समैश्च । ७. च–क्रियातामेप । आ–क्रियतामेव । ८. रा य–एव ॥ ९. च–आक्षिपति ह्यचलान् । प्र म ल१ ल२ अ रा य–आक्षिपन्त्यचलान् केचित् । १०. रा प्र य म ल१ ल२ अ–मुहुः । ११. रा ल१–विश्राम्यं ह्यपरे । म–विश्रम्यंत्यपरे । १२. च प्र य म ल२ अ–श्रांताः । रा ल१–श्रांता । १३. च–निषेविरे ॥ १४. म ल२–आस्फोटन् वल्गुश्च । आ–॰यन्प्रावल्गंश्च । च–॰यन्प्रवल्गुश्च । १५. फ–किलकिलान् । १६. प्र ल१–इति । १७. च–पतन्त्यन्ये । १८. प्र–पर्वतान् ॥ १९. रा–दिवसे तृतीये चैव । २०. फ च रा प्र य म ल१ ल२ अ–पंचाशद् । २१. रा प्र य म ल१ ल२ अ–च । २२. च–बद्धानि । २३. रा प्र य–कपिभि ॥ २४. आ–स स्वयं । फ–स्वल्पोयं । रा–स्वल्पस्वयं । २५. रा प्र य म ल१ ल२ अ–मत्वा ।

N] धृति-मन्तः प्र-सुप्तास् ते कृत-कर्माण एव च ॥१०॥ [N
प्र-भातायां निशायां तु रामम् ऊचुर् वनौकसः ।
N] अद्य राम महा-बाहो सेतुर् नि-ष्ठां गमिष्यति ॥११॥ [N
अद्य द्रक्ष्यसि तां लंकां पुरीं रावण-पालिताम् ।
N] एवम् उक्त्वा ततो रामं वानरास् ते महा-बलाः॥१२॥ [N
एकोत्-पातेन ते सर्वे समुत्-पेतुः प्लवं-गमाः ।
N] जगृहुश् चैवं वृक्षांस् ते शिलाः के-चित् प्लवं-गमाः॥१३॥ [N
शैल-शृङ्गाणि चाऽप्य् अन्ये तृणं काष्ठम् अथाऽपरे ।
N] अन्ये च वादयन्ति स्म बहुना किं प्र-योजनम्॥१४॥ [N
अन्योऽन्यस्य तु तेजांसि वर्द्धयन्तः परस्-परम् ।
N] आकाशं छादमानास् ते वर्षा-काले घना इव ॥१५॥ [N
नर्दमाना महा-नादं प्रावृट्-काल इवाऽम्बु-दाः ।

१. च–धृतिमन्तः । २. रा–कृतकर्मण ॥ ३. [illegible] प व ल$_1$ ल$_2$ अ–तु शर्वर्यां । म ल$_1$–तु सर्वर्यां । ४. फ–पश्य । ५. आ फ–सेतुः ॥ ६. रा–पुरीं । ७. आ फ–उक्ता ॥ ८. च–एकोत्पातेन । ९. फ–ते । च–रम्यं । प्र रा व म ल$_1$ ल$_2$ अ–र्वे । १०. फ म ल$_1$ ल$_2$ अ–०पेतुर् । ११. फ च रा व–वल्लीमुखा । म ल$_1$ ल$_2$ प्र अ–वलीमुखाः । १२. रा–चै···। १३. च रा प्र व म ल$_1$ ल$_2$ अ–शैलान् । १४. रा–प्लवंगमा ॥ १५. [illegible] व–०शृंगानि । १६. म ल$_1$–तृणकाष्ठानि चापरे । च प्र–तृणं काष्ठान्यथापरे । रा व ल$_2$ अ–तृणं काष्ठानि चापरे । १७. प्र–वादयन्ति ॥ १८. फ च रा प्र व म ल$_1$ ल$_2$ अ–च । १९. फ च रा प्र व म ल$_1$ ल$_2$ अ–प्लवंगमाः । २०. फ–अभ्रसंङ्काशं छादयन्तो । च रा प्र व ल$_1$ ल$_2$ अ–शशसङ्काशं छादयन्तो । म–छायामासु वर्षाकाले (नभ्रसंकाशं छादयन्तो)। २१. च प्र ल$_1$–घना ॥ २२. रा व म ल$_1$ ल$_2$ अ–नन्दयन्तो महानादान । प्र–नादमाना महानादान् । च–नर्दमाना महानादान् । २३. आ–प्रावृ·····ल । च रा प्र व म ल$_1$–प्रावृट्काले । २४. च–०म्बुदा ।

N] आकाशे सम्-अदृश्यन्त पतन्-तन्त इवाऽचलाः ॥१६॥ [N
पर्वतानां ततो दृष्टिश् छादयन्ती नभस्-तलम् ।
N] सागरोपरि मुक्ता सा शेषं संछाद्य (ऽह्याऽ)धिष्ठिता ॥१७॥[N
दश-योजन-मात्रं तु सर्वं बद्धम् अ-शेषतः ।
बद्धो बद्धेति वेदवां सिद्धानाम् अम्बरे स्वनः ।
N] वानराणां च हृष्टानां सहसा सं-बभूव ह ॥१८॥ [N
दश-योजन-विस्तारं शत-योजनम् आ-यतम् ।[13] [७६पू
१२] नलश् चक्रे महा-सेतुं मध्ये नद्-नदी-पतेः ॥१९॥ [६१पू
समुद्र-वरदानाद् च संवि-धानाद् च कर्मणः ।
४०] सेतुः स्व्-अल्पेन कालेन नि-ष्ठां प्राऽऽप्तोऽभवत् तदा ॥२०॥[N
४१पू] वेला-मूलाद् प्र-वृत्तः सन् लंका-मूले प्रति-ष्ठितः ।
४२उ] अशोभत तदा सेतुः सीमन्त इव सागरे ॥[20] २१॥ [N
नलेन सु-कृतश् चाऽसौ सेतुर् मन्दर-संनिभः ।[21]

---

१. ल$_1$—आकाशं । २. श्रा—॰शेऽदृश्यन्त । च—समाऽदृश्यन्त । ल$_1$—शाखशाखां । ३. फ—दृष्टा छादयन्ति । च—दृष्टि छादयन्ती । प्र—दृष्टिः छादयन्ती । ल$_1$—दृष्टिः छादयन्ती । ४. च—सागरा परिमुक्ता । ल$_2$ अ—सागरे परिमुक्ता । ५. रा—सो शङ्कं संरोध । ६ फ—विष्ठितः । श्रा—धिष्ठिताः ॥ ७. रा ब—॰मात्रे । ८. श्रा—नास्ति । ९. फ—प्रोचैः । १०. रा—स्वगृणम् । व ल$_2$ अ—स्वराणाम् । ११. च—महृष्टानां । १२. फ च रा प्र व म ल$_1$ ल$_2$ अ—सः ॥ १३. फ रा प्र व म ल$_1$ ल$_2$ अ—दशयोजनविस्तारमायतं शतयोजनम् । च—दशयोजनविस्तारमायते शतयोज-नम् ॥ १४. रा ब प्र—वरदानात् । १५. फ—विधानाद्विषकर्मणः । रा—संविधानाश्च कर्मण । प्र—संविनादाश्च । १६. प्र—स्वेन । १७. प्र—वेलान्मूलात् । १८. फ च रा व म ल$_1$ ल$_2$ अ—स । १९. श्रा—श्रीमन्त । २०. फ रा व ल$_1$ ल$_2$ अ—नास्ति ॥ २१. प्र—विकृवत् । म—घ कृवत् । २२. च प्र म—मेरुः ।

N] मलयात् तु समा-रब्धो लंका-मूले प्रति-ष्ठितः ॥२२॥[1] [N
४२पू] सु-विशालैः[2] कृतः श्री-मान् सम-भूमिः[3] समा-हितः । [N
N] अदृश्यत तदा चित्रैः[4] खातैः पन्था इवाऽम्बरे[5] ॥२३॥ [४३
तस्य नाम[6] तदा[7] चक्रुर् वानरास् ते सुवि-स्मिताः ।
N] नलेनाऽयं[8] कृतो यस्मान् नल-सेतुर्[9] भविष्यति[10] ॥२४॥[11] [N
तं[12] नलेन कृतं सेतुं[12] सागरे सलिलाऽऽशये[13] । [७४पू
N] ददृशुः सर्व-भूतानि वि-स्मयं परमं ययुः ॥२५॥ [N
बद्ध्वा तु[14] तं[14] महा-सेतुं सु-ग्रीवो[15] वाक्यम् अब्रवीत् ।
N] एष सेतुर् महान्[16] बद्धः सागरे वरुणाऽऽलये ॥२६॥ [N
कृत-कृत्याः[17] स्मो[18] राजेन्द्र हता लंका न सं-शयः ।[19]
N] रावणश् च हतः शत्रुः साऽमात्यः[20] स-परिच्छदः ॥२७॥ [N
बद्धं[21] दृष्ट्वा[22] ततः सेतुं[23] रामो दशरथाऽऽत्म-जः ।

---

१. फ रा व म ल₁ ल₂—नास्ति । २. प्र—सुविशालकृतः । आ फ रा-०लः कृत । ३. रा प्र—समभूमि स० । ४. आ—चित्राः स्थानैः । च—तत्र स्वः । रा म—तत्र स्वस्थाः । प्र य ल₁ ल₂ अ—जत्र स्वस्थः । ५. प्र—इवाचले । ६. प्र—रामस्तदा । ७. प्र—समाहिताः । ८. फ—कृतस्तस्मान् । ९. प्र—०सेतु । १०. फ—भवष्यति । च रा व म ल₂ अ—भवत्वयम् । ११. अतः परमधिकः पाठः—फ च रा प्र घ म ल₁ ल₂ अ—सेतुपृष्ठं यतः सर्वं नलेन सुसमं कृतम् । नलसेतुरिति ख्यातस्तस्य कीर्तिर्व्यवर्धत । ल₁—नास्ति ॥ १२. च प्र घ अ—नलेन च कृतः सेतुः । रा म ल₁ ल₂—नलेन च कृतः सेतु । १३. आ—सलिलार्णवे । च रा प्र व म ल₁ ₂ अ—वरुणालये ॥ १४. फ—तं तु । १५. फ—सुग्रीवं । १६ आ—महाबद्धः । रा—महाबन्धः । य—महाबधः ॥ १७ च—कृतकृत्या । प्र—कृतकृत्यः । १८. प्र—स । १९ ल₁—अतः परं 'स नलेनेति' श्लोकाऽर्धं पुनः पठ्यते पाठक्रमभङ्गश्चापलक्ष्यते । २०. रा—सामात्य सः स० ॥ २१. ल₂—बद्धः । २२. च रा प्र य म ल₁ ल₂ अ—श्रुत्वा । २३. रा—सेतु ॥

N] अधि-रुह्य हनू-मन्तं पृष्ठं नीलस्य लक्ष्मणः ॥२८॥ [N
अग्र-तः सर्व-सैन्यानां श्री-मान् बल-समन्वितः ।
N] जगाम धन्वी धर्माऽऽत्मा सु-ग्रीवेण समन्व्-इतः ॥२९॥[८४
आ-प्लवन्तः प्लवन्तश् च गर्जन्तश् च प्लवं-गमाः ।[७७
N] बद्धे तत्र तदा सेतौ मध्ये नद्-नदी-पतेः ॥३०॥ [N
केचिज् जलेन धावन्ति सेतुना केचिद् एव तु ।
N] केचिद् आकाशम् आ-विश्य सेतुं नैव स्पृशन्ति च॥३१॥
अन्ये मध्येन गच्छन्ति पार्श्वे चाऽन्ये प्लवं-गमाः ।
N] सलिले प्र-पतन्त्य् अन्ये पन्थानं ये न लेभिरे ॥३२॥[८९
४३३] तानि कोटि-सहस्राणि वानराणां महौजसाम् ।
N] बद्ध्वा तत्र महा-सेतुं जग्मुः पारं महोदधेः ॥३३॥ [७९
घोषेण महता घोषं सागरस्य समुद्-थितम् ।
N] भीमम् अन्तर्-दधे भीमा तरन्ती हरि-वाहिनी ॥३४॥[८७

---

१. आ च प रा म ल$_{1}$ ल$_{2}$ अ–पृष्ठे । ब–पृष्ठे । २. च म ल$_{1}$–नीलम् । प्र रा ब ल$_{2}$ अ–नीलं च । ३. प्र–अन्यतः । ४. च रा प्र ब म ल$_{1}$ ल$_{2}$ अ–०सैन्यस्य । ५. रा–धन्व । ६. च ल$_{2}$–सुग्रीवेन । ७. ल$_{1}$–समंततः । ८. प्र–नास्ति ॥ ९. फ च रा ब म ल$_{1}$ ल$_{2}$–महासेतौ । प्र–समासेतौ । १०. अ–०पतौ ॥ ११. फ च रा प म ल$_{1}$ ल$_{2}$ अ–अवेन । प्र–जीवेन । १२. प्र–वानराः । १३. च ब म ल$_{1}$ ल$_{2}$ अ–केचिदेव । १४. फ–वे । १५. फ–अथ । रा–अन्योन्ये । १६. आ–अन्येन । रा ब ल$_{2}$ अ–मध्ये तु । च प्र म ल$_{1}$–मध्ये च । १७. च रा–च वानराः । प्र ब म ल$_{1}$ ल$_{2}$ अ–तु वानराः । १८. ब–सलिलं । १९. च–प्रपतत्यन्ये । रा प्र म ल$_{1}$ ल$_{2}$ अ–च प्रयांत्यन्ये । २०. रा–ते । २१. फ–कोटीस० । २२. आ–महोजसाम् । २३. आ–बद्धा । २४. फ–घोरेण । च–घोषेणं । २५. प्र–च महाघोषं । २६. रा–अन्तर्दधत् । २७. फ ल$_{1}$–हरिवाहिणी ॥

ततः पारे सम्-उद्रस्य गदा-पाणिर् वि-भीषणः ।
४५] परेषाम् अभि-घाताऽर्थम् अतिष्ठद् हरिभिः सह । [८१
यूथ-पानां सहस्रौघैः प्र-स्थितो लघु-विक्रमः ॥३५॥
४४उ] निष्-पाद्य हरयः सेतुं प्रतीऽताः सस्तुर् अर्णवम् । [N
यथा स्व-स्व-निवासेषु विषयेषु यथा-सुखम् ॥३६॥ [N
N] सा मुहूर्तेन सं-तीर्णा वाहिनी नल-सेतुना ।
तीरे विवेश रम्ये च बहु-मूल-फले शुभे ॥३७॥ [८८
१२पू] दश-योजन-विस्तारम् आ-यतं शत-योजनम् ।[13]
N] सेतुं ददृशिरे हृष्टा देवा ऋषि-गणास् तदा ॥३८॥ [७६
तद् अद्भुतं राघव-कर्म-दुष्करं
सम्-ईक्ष्य देवाः सह-सिद्ध-चारणाः ।
नि-शम्य रामं सहसा महर्षिभिस्
N] तम् अभ्य्-अनन्दंश् च वचोभिर् अ-व्ययम् ॥३९॥[८९

---

१. च रा प्र घ म ल$_{1}$ ल$_{2}$ अ—०घातार्थं चतुर्भिः सचिवैः । आ—०घातार्थमतिष्ठद्धरिभिः । २. ल$_{2}$—यूथपानं । ३. च—सहस्रौघैः । ४. च रा प्र घ ल$_{1}$ ल$_{2}$ अ—निधाय । म—निधाय (निष्पाद्य) । ५. रा—सेतु । ६. आ—प्रतीताः संप्रुसस्तुर् । फ—तीर्णास्तेनैवार्णवम् । च—सुप्रीताः सस्रुस्तुर् । रा प्र घ म ल$_{1}$ ल$_{2}$ अ—सुप्रीताः सस्तुर् । ७. आ म—अथायमुर्हरिश्रेष्ठा । फ—अथाथस्तु यत्रेषु । अ घ ल$_{1}$ ल$_{2}$ प्र रा—०निवासेस्वारम्य ०विस्तार० मित्यन्तः पाठस्त्रुटितः । ८. फ—०र्तेण । च—सुमुहूर्तेन । ९. च—सन्तीर्णा । रा प्र घ—नास्ति ॥ १०. फ च म—सु । ११. आ—०फलेप्सुभिः । च—०फलवाये । १२. घ—०वितीर्णे । १३. म—०निवास इति पादं आयतं शत० इतिपादं चैकीकृत्याधिकः श्लोकार्धः पठितः । मध्यगतः पाठस्त्रुटित इव प्रतीयते । १४. फ च रा प्र म ल$_{1}$ ल$_{2}$—सर्षिगणास् । १५. घ—दुस्करं । १६. ल$_{1}$ ल$_{2}$—०चारिणाः । १७. १६. च प्र—मुदिताः । रा घ ल$_{1}$ ल$_{2}$ अ—मुदितं । १८. अ घ ल$_{1}$ च प्र रा—सहर्षिभिस् । १९. आ—तमभ्यषिञ्चन्त शुभैर्जलैः पृथक् । फ—तमभ्यषिञ्चन् शुभैर्जलैः पृथक् ।

जयस्व शत्रून् नर-देव मेदिनीं
　　स-सागरां पालय शाश्वतीः समाः ।
इत्य्-एव रामं नर-लोक-सत्कृतं
N]　　शुभैर् वचोभिर् वि-बुधाः पुपूजिरे ॥४०॥ [९०

इत्यार्षे रामायणे सुन्दर-काण्डे समुद्र-सेतु-बन्धनो
नामाऽष्टनवतितमः सर्गः ॥[11] ९८ ॥



१. व—जयस्व शत्रुन् । २. व—ससागरा । ३. च—पालश । ४. आ फ—हर्षाव । ५. आ—नरदेवसत्कृतं । फ—नरलोकसत्कृतं । ६. फ रा म ल$_1$—वचो विबुधाः । आ—वचोभिर्विधाः । ७. फ—सुपूजिरे । रा व म ल$_1$ ल$_2$ प्र अ—अपूजयन् । ८. फ—आर्षे । ९. अ—नास्ति । १०. फ रा, प्र थ—सेतुबन्धो । ल$_2$ अ—समुद्रसेतुबन्धो ॥ ११. वं—इत्यार्षे रामायणे महर्षिवाल्मीकीये आदिकाव्ये चतुर्विंशतिसाहस्र्यां संहितायां सुन्दरकाण्डे सेतुबन्धनं नाम पंचनवतितमः सर्गः ॥ सुन्दरकाण्डं समाप्तम् ॥

[वं-N]= [नवनवतितमः सर्गः] =[दा-N]

ततो महाऽऽत्मा कृत-सेतुम् ईश्वरं
प्रतीत-रूपं विजयाऽभि-नन्दिनम् ।
पुनः सम्-उद्गो[2]ऽभि-जगाम राघवं
प्र-भावम् अस्मै वरदोऽभि-र्वर्धयन् ॥१॥

तम् आ-गतं लक्ष्मण-वानराऽधिपौ
वि-भीषणश् चौर्क्ष-पतिश् च जाम्ब-वान् ।
मुदा प्रतीऽता हरयो वरं-प्रदं
प्रणम्य रामाऽभि-मुखाऽव-तस्थिरे ॥२॥

स दिव्य-रूपाऽऽभरणो महा-द्युतिर्
नि-शम्य रामं मुनि-वेष-धारिणम् ।
शिरस्य् उपाऽऽघ्राय जयाय पुत्र-वत्
सम्-ईक्षमाणोऽनुशशास सागरैः ॥३॥

---

१. रा म-०नन्दनम् । म ल$_2$-०नन्दितम् । २. म-समुद्गोभि(पि) ज० । ३. पद्यार्धे चतुर्थीयमार्षी द्र० । ४. म-न देवभिवर्धयन् । घ-०भिवर्धयत् ॥ ५. म-विभीषणो ऋक्ष० । ल$_1$-०षणऋक्ष० । ६. फ रा प्र घ म ल$_1$ ल$_2$ अ-वीर्यवान् । ७. द्विः पठितः पाठः-प्र-समागतं लक्ष्मणवानराधिपौ विभीषणश्च नृपतिश्च वीर्यवान् । ८. फ-सुखाः । ९. घ-स्वरपदं । १०. घ-प्रणमु रामं सगरस्यात्मजम् । रा-प्रणेम्य रामं सगरस्य चात्मजाम् । प्र घ म ल$_1$ ल$_2$ अ-प्रणेमिरे तं सगरस्य चात्मजम् । विसर्गलोपे तत्पूर्वोत्तर-सवर्णसन्धिरार्षः द्र० । अथवा नात्र संधिः । उत्तरादिलोपस्याऽऽर्षस्येदमुदा-हरणं स्यात् ॥ ११. घ-०द्युति । प्र रा च ल$_2$-०द्युतिं । १२. अा-राम । १३. अा-समीक्षमाणो० । रा-समीक्ष्यमानोनुमशास । च ल$_2$-समीक्ष्यमानो० १४. रा-सागर ॥

न वत्से युद्धे मुनि-वेषं इष्यते
　　वि-मुच्य कर्माणि चरन्ति पार्थिवाः ।
स राम राजाऽऽभरणैर् अलं-कृतो
　　जयाय गच्छेति जगाद स-स्वरः ॥४॥
तथेति चोक्तो वचनान् महोदधेर्
　　वि-सृज्य चीराणि जटां नि-यम्य च ।
शुभानि राजाऽऽभरणानि चाऽऽददे
　　समुद्र-दत्तं कवचाऽऽयुधानि च ॥५॥
तथैव तेपे पुनर् अ-व्यतिक्रमं
　　मनो-वचः-काय-समाधिजं तपः ।
पिता यथैनं नि-युयोज कृच्छ्रे
　　स चाऽपि रामो ददृशे महीं गतः ॥६॥
स लक्ष्मणस्याऽपि तथा यथाऽऽत्मनः
　　चकार वर्माऽऽयुध-भूषण-क्रियाम् ।
तयोर् द्युतिः सं-ददृशे नराऽग्र्ययोः

---

१. च-वत्सा । २. प्र व-०वेश । ३. फ-विसृज्य । ४. आ फ म-चकार । ल$_1$-जगाम॥ ५. फ-चोक्ते । ६. आ रा म अ-वचनं । ७. म-०दधि । रा अ-०दधे । ८. च-यदा निरस्य । प्र रा व ल$_1$ ल$_2$ अ-जटा विरस्य । म-जयं निशम्य । ९. आ फ च प्र म-चाददे । १०. म-समुद्रदत्तानि । ११. प्र-कवचानि चाददे ॥ १२. आ-अप्यतिक्रमत् । प्र फ-अप्यतिक्रमन् । च रा म ल$_1$-अप्यतिक्रमन् । व-ओ व्यतिक्रमन् । ल$_2$ अ-अप्यतिक्रम । १३. फ-०कामः स० । रा-कायस........धिवं । १४. फ-तप । १५. आ-यदेवं । व-यथैवं । १६. फ-नियुयोज । ल$_2$-नियुयोज्य । १७.फ-कृच्छ्रः । च रा प्र व म ल$_1$ ल$_2$ अ-कृत्ये । १८. रा-०ददृशे । १९. च व-महीगतः ॥ २०. च-यथा । २१. आ-यथात्मना । च-तथात्मनः । २२. च-वर्मायुधभूषणः क्रियाम् । फ-०भूषणोत्करः । २३. रा-स ददृशे । २४. रा व-नराग्रयोः ।

सम्-एत्यं चन्द्रोशनसोर् निशास्व् इवं ॥७॥

ततस् तु रामं तपसा प्रं-दीपितं

वरैश् चं राजाऽऽभरणैर् अलं-कृतम् ।

अनुग्रहायोऽति-निनाय सांगरः

सुदुष्प्रं-वेशं वरुणस्य चाऽऽलयम् ॥८॥

स देव-रामं वरुणं वर-प्रदं

ज्वलन्तम् ऋद्ध्या समुदीर्ण-रूपयो ।

प्रतीऽतंम् आसीनम् उपेत्य राघवस्

तदा ववंदे शरणं जगाम चं ॥९॥

अथाऽभ्य्-उवाचाऽऽशिषम् आयुंषि ध्रुवं

नराऽधिपायाऽम्बु-पतिः प्रसन्न-वाक् ।

बले च वीर्ये च वि-वृद्धिम् आ-[14]दधे

त्वरेति चोवांच जयेति चेश्वंरः ॥१०॥

ततः सम्-उद्रः प्रविनीत-राघवं

पितेवं पुत्रं प्र-शंशास बुद्धि-मान् ।

भवाय कृत्वा भगवंतं-प्रदक्षिणं

१. रा-समेतच० । २. आ-निशास्वि वा । फ-निशामिव । रा-निसास्विव ॥ ३. च रा प्र-प्रदीप्तम । ४. फ-तथैव । म-वैरश्च । ५. आ-०प्रहायेति नि० । प्र घ रा य म ल$_2$ अ-०प्रहायाभिनि० । ६. फ अ घ व ल$_2$ प्र रा म-सागरम् । ७. आ प्र अ-स दुःप्रवेशं । फ-सुदुःप्रवेशं । च-सुदुप्रवेश । रा-स दुष्प्रवेश । ८. फ-वलस्य वुध्या । ९. रा अ-समुदीर्णरूपयया । १०. अ-प्रीतम् । ११. फ च प्र-त्रुटितः ॥ १२. आ-आशिषं ध्रुवन् । फ-आयुरे ध्रुवम् । १४. आ फ-आद्देद । १५. [illegible] ल$_2$-चोक्ताय । प्र य म ल$_2$ अ-चोक्तवाय । १६. प्र-वेश्वर ॥ १७. आ-प्रतिनीय रा० । च-प्रति[illegible] राघव । रा-प्रतनीय रा० । १८. अ-पितेव । १९. फ-प्रशशंस । २०. घ प्र रा य म-भगवान् प्र० ।

ततोऽत्स्ये-अयात् सोऽपि यथाऽऽगतोऽभवत् ॥११॥

ततः प्रभुः सुखम् उषितो विभावरीं
पुरोदयं सवितुर् उपेत्य राघवः ।
महा-बलैस् समभि-वृतो बलाऽग्रणीर्
महाद्-द्रुमं समुप-जगाम पर्वतम् ॥१२॥

इत्यार्षे रामायणे सुन्दर-काण्डे समुद्र-दायं नाम
नवनवतितमः सर्गः ॥ ९९ ॥



१. आ च रा प्र ब म $ल_1$ $ल_2$ अ-ततोऽभ्ययात् । २. आ फ-यथागतं प्रभुः । च रा प्र म $ल_1$ $ल_2$ अ-॰गतो सुखम् ॥ ३. च-सुखमुषितो ४. व-पुरोदयः । ५. आ-सेतुमुपेत्य । म-सवितुरुपेत्य । ६. फ-महाबलस् । ७. आ-स्वनिवृतो । च-स्वाभिवृवो । फ-स्वभिनिस्त्रवो । ८. च रा-बलाग्रणी । $ल_2$ अ ब-बलाय । प्र-बलायवर् । $ल_1$-बलीसुवर् । ९. फ-स ( म ) हद्द्रुमं । च रा प्र म $ल_2$ अ-महाद्भुतं । $ल_1$-सहाद्भुतं । व-महाद्भुत ॥ १०. अ-नास्ति । ११. फ रा व-समुद्रदायो । च- समुद्रदायवरणदर्शनं । प्र म $ल_1$ $ल_2$-समुद्रदायो वरणदर्शनं ॥

ततः शंखं-विमिश्रेण भेरी-शब्दाऽनुनादिना ।
राघवस्याऽऽगमत् सैन्यं नाना-प्रहरणाऽन्वितम् ॥१॥
सम-आसीनं ततस् तत् तु राघवस्य महद् बलम् ।
अशोभत तदा पूर्ण(र्णः)सागरस् स्तिमितो यथा ॥२॥
सभा-गतस् ततस् तत् तु दृष्ट्वा राजा दशाऽऽननः ।
मुहूर्तं ध्यानम् आ-स्थाय सचिवान् अभ्युद्-ऐक्षत ॥३॥
अथ तान् सचिवांस् तत्र बभाषे रावणस् तदा ।
वाक्यं वाक्य-विदां श्रेष्ठः शृणुध्वं मम राक्षसाः ॥४॥
न चोद्योगे मनो वोऽद्य अयं प्राऽऽप्तश् च राघवः ।
सहितः सर्व-सैन्येन वानराणां स-लक्ष्मणः ।
साम्प्रतं चैव यत् कार्यं तत् कुरुध्वम् अ-कालिकम् ॥५॥

---

१. आ-शंवि० । २. रा—०नुपादिना । प्र०—नुयायिना । ३. आ फ च–रावणस्या० ॥ ४. फ रा प्र व म $ल_1$ अ–त । ५ प्र च व म $ल_1$,$ल_2$ अ–राघवस्य महाबलं । आ फ–रावणस्य म० । ६ प्र च रा म $ल_1$,$ल_2$ अ–ततः पूर्णं स्तिमितः सागरो । फ–तदा तूर्णं स्तिमितः सागरो । च व–ततः पूर्णस्तिमितः सागरो ॥ ७. आ–समागमं । फ प्र व–समागत । रा म $ल_1$, $ल_2$ अ–समागतं । ८. च रा म $ल_1$, $ल_2$ अ–तं । ९ $ल_2$ अ–मुहूर्तं । १०. च–सचिवान्‌ः भ्युदैक्षत ॥ ११. फ–आगतान् । १२. प्र म $ल_1$–श्रेष्ठः । १३. रा प्र–राक्षसा ॥ १४. फ–न चान्यो वानरो चाद्य शौर्यं । रा–न चोद्योग-मनोऽत्रवोद्यमयं । व–न चोद्योगम........मय । प्र–न चेद्योगेऽस्ति भवता-मय । म–न चोद्योगो मनश्चाद्य सोयं । $ल_1$–रचोद्योगमसंभारद्य कद । 'मनो वोद्य अयं' इति सन्धाभाव आर्षः द्र० । १५. च रा प्र व म $ल_1$ अ–प्र सः स ॥

अव-ज्ञा नं चं कर्त्तव्या वानरेषु रणाऽजिरे ।
यैस् तृणी-कृत्य नः सर्वान सेतुर् बद्धो महोदधौ ॥६॥
भवन्तश् चैव रागाऽन्धाः सुख-भोऽऽसाः प्र-संगिनः ।
बध्यमानं तदा सेतुं यन् न वे(ऽवि)त्थ निशा-चराः ॥७॥
चारोऽत्र न प्र-युक्तश् च सर्वैर् मन्त्रि-पदे स्थितैः ।
हितं मन्त्रयते राज्ञस् तेन मन्त्री नि-गद्यते ॥८॥[15]
कार्याऽकार्याणि सततं राजा राज्ये करोति वै ।[16]
तानि सर्वाणि कार्याणि मन्त्रिभिः संततोद-थितैः ।
अन्विष्याऽन्विष्य चिन्त्यानि तेन राजा सहाय-वान्[21] ॥९॥
मन्त्रिभिः सर्व-कार्याऽर्थाः कार्या नित्यम् अ-संशयम् ।
एवं भवद्भिर् वि-श्रम्भाद् वंचितोऽहं निशा-चराः ।

---

१. रा घ-च न । २. फ-०त्थ । ३. आ-न । ४. रा प्र व म ल$_1$, ल$_2$ अ-महार्णवे ॥ ५. म-सुखासक्ताः । च प्र ल$_1$ ल$_2$ अ-सुखसुप्ता । व-सुसंप्रासाः । ६. च रा व म ल$_1$-सुसंगिनः । प्र ल$_2$ अ-सुगंधिनः । ७. च व म ल$_1$ ल$_2$ अ-तथा । ८. म अ-नः । ९.रा-चैहां ॥ १०. फ-द्वारा म ? । ११. आ फ-प्रयुक्तो वः । १२. रा व अ-सर्वे । १३. आ फ-मंत्रपदे । प्र-मंत्रिपदे । १४. रा प्र व म ल$_1$ ल$_2$ अ-मंत्रीति कथ्यते । १५. आ-इतोऽग्रर्धः श्लोको नास्ति ॥ १६. च व म ल$_1$ ल$_2$ अ-यानि कार्याणि । १७. फ रा- राज्यं । १८. आ प्र-नास्ति । १९. रा घ म ल$_1$ ल$_2$ अ-सततोद्यतैः । प्र-सततोदितैः । २०. घ-अन्विष्य चिन्त्यानि तानि । २१. च प्र रा घ म ल$_1$ ल$_2$ अ-राजो महोदयः । २२. घ-'निगद्यते' इति पूर्वश्लोकपाठस्य पुनरुल्लेखभ्रमेण 'तानि कार्याणि सततं' इति अस्याऽर्धस्य मध्य एव द्विर्लिखितः ॥ २३. आ फ-सह का० । २४. च-एक । अ-लं... .. । २५. ल$_2$ अ-मयादि......वि० । आ-मवद्भिर् विश्रंमा चितोहं । फ-भवद्भिर् विश्रम्भावद्चितो ॥

मामकं यदि वः कार्यं नास्ति कार्यं मतं हृदि ॥१०॥
अहम् एकः करिष्यामि शात्रवाणां प्र-शासनम् ।
चारं वाऽत्र नि-योक्ष्यामि सान्त्वं भेदम् अथाऽपि वा ॥११॥
रावणेनैवम् उक्तास् ते राक्षसा व्रीडिता भवन् ।
व्रीडितानां ततस् तेषां मेघ-नादोऽभ्यं-अभाषत ॥१२॥
किम्-अर्थं तप्यसे तात राघवाल् लक्ष्मणात् तथा ।
वानरेन्द्राच् च सु-ग्रीवाद् वानराणां बलाद् अपि ॥१३॥
मानुषो नृपती रामो राज्य-भ्रष्टस् तथैव च ।
कथं बिभेषि तस्मात् त्वं देवान् कृत्वा वशेऽनघ ॥१४॥
इहाऽऽनीतो मया शक्रो नाग-पाशै-(ऽशैर्) जितो रणे ।
वि-बुधा निर्-जिताः सर्वे स्वर्गं गत्वा त्वया पुरा ॥१५॥
प्रेताऽधि-पो जितः संख्ये वित्तेशोऽत्र परा-जितः ।

---

१. च–कार्ये । २. आ–कार्ये नम । फ–कार्यं तम । च प्र ब म ल$_1$ ल$_2$ अ–कार्यंतमं । रा–कार्यमतं । ३. फ च रा प्र म ल$_1$–शात्रवानां । ब–शत्रुवानां । ४. फ–प्रबाधनं । च प्र रा ब म ल$_1$–प्रसाधनम् । ल$_2$ अ–प्रणाशनम् । ५. प्र–चारात् । ६. फ रा प्र ब म ल$_1$ ल$_2$ अ–चात्र । ७. फ–नियोक्ष्यामि । च म ल$_2$–नियोयोमि । ८. आ च–शांत्वम् । फ–शान्तं ॥ ९. फ ब–तु । १०. आ–॰ताभवं । अडभावो वा सन्धिर्वाऽऽर्षः । ११. च–॰दो ह्यभाषत । आ–॰दो ऽभ्यभाषत ॥ १२. च–लक्ष्मणस् । १३. रा–वानरेंद्रात् । १४. च रा प्र ब म ल$_1$ ल$_2$ अ–तथा बलात् ॥ १५. प्र–मानुष्यो । १६. आ फ ब–नृपते । १७. ब–राम । १८. म ल$_1$–विभेष । १९. प्र–तस्माच्च । रा–कस्मात्त्वं ।२०. च म ल$_1$ ल$_2$ अ–स्थाप्य व॰। ब–स्थास्य व॰। रा–कृत्वास्य व॰। प्र–कृत्वाऽप्यव॰ ॥ २१. फ–॰पाशैश्चितो । च–॰पाशाऽसितौ । रा ब म ल$_1$ अ–॰पाशावृतो । प्र–॰पाशाश्रितो । ल$_2$ अ–रागपाशावृतो । २२. च–स्वर्गे । २३. फ रा प्र ब म ल$_1$ ल$_2$ अ–वित्तेशश्च । च–वित्तेन्द्रश्च ।

वरुणः काद्रवेयाश् च कालकेयाश् च दानवाः ॥१६॥
वसवो मरुतश् चैव तथा चन्द्र-दिवाकरौ।
पृथिव्यां सर्व-राजानो निर्-जितास् ते स्व-तेजसा ॥१७॥
किं करिष्यन्ति ते राजन् वानरा वन-चारिणः।
तौ वा मानुष-मात्रौ तु भ्रातरौ राम-लक्ष्मणौ ॥१८॥
व्ये-एतु ते सं-भ्रमो राजन् अहं हन्मि प्लवं-गमान्।
मम बाण-पथं माऽऽप्य न कश्चिद् अपि जीवति ॥१९॥
रामं च लक्ष्मणं चैव हतौ पश्य मया रणे।
हनु-मन्तं स-सुग्रीवम् अङ्ग-दं गन्ध-मादनम्।
सु-षेणं जाम्ब-वन्तं च तथाऽन्यान् वन-गोचरान् ॥२०॥
मेघनाद-वचः श्रुत्वा प्र-हस्तो वाक्यम् अब्रवीत्।
एवम् एतन् न सं-देहो यथा वदसि मान-द ॥२१॥
मुसलीऽऽयोधिने मह्यं कः स्थास्यति रणाऽजिरे।
वानरेषु न मे चिन्ता चल-चित्तेषु रावण ॥२२॥

---

१. प्र-वरुणः ॥ २. फ-नक्षत्राणि ग्राहश् । प्र-वसवो मारुतश् । ल$_{2}$ अ-वसवौ म० । ३. आ च व रा-प्रथिव्यां । ४. च-च रा० । रा प्र व म ल$_{1}$ ल$_{2}$ अ-ये च राजानो । ५. च-विर्जिताश्चैव तेजमा । व रा प्र म ल$_{1}$ ल$_{2}$ अ-विजितास्ते तेजमा । ६. फ-त्रुटितः पाठः । ७. च-मनुष० । ८. प्र व म ल$_{1}$ ल$_{2}$ अ-च । ९. आ-यतु । रा अ-वेतु । १०. आ फ च-राजन्नाहं । ११. च-वा । १२. ल$_{2}$-रणे मया । म-इत्यत आरम्य सर्गसमाप्तिं यावत् त्रुटितः पाठः । १३. आ-सुग्रीवमङ्गदं । रा ल$_{2}$-सुग्रीवं सांगदं । १४. फ-सुखेन । १५. आ-पुत्र । १६. रा-मुसलायोधिको । व-मुसुलायोधिनो । प्र-मुसलायुधेन । आ फ-०लायोधिनो । म च-मुसला० । ल$_{2}$-मुसुलायोधिने । १७. फ-मेव कः । च-मह्यंकः । रा-मह्य क । १८. च-स्यस्यति । १९. प्र-मानद ॥

मानुषेषु[1] च क्लीवेषु[2] भक्ष्य-भूतेषु[3] नित्य-दा ॥२३॥
अहम् एको वधिष्यामि[4] तत्र शत्रून् दशाऽऽनन[5] ।
सुखी भव महा-राज[6] यथेष्टं वि-चरस्व[7] च[8] ।
मुसलं[9] भ्राम-यानस्[10] तु रावणं[11] समुद्-ऐक्षत ॥२४॥
एवम् उक्ते[12] प्र-हस्तेन धूम्राऽक्षो[13] वाक्यम् अब्रवीत् ।
आ-गतौ[14] यदि तौ राजन् मानुषौ राम-लक्ष्मणौ ॥२५॥
बद्ध्वा सेतुं सम्-उद्रे तु वानरांश्[15] च तरस्-विनः[16] ।
लंका-मूले स्थितास्[17] तस्मात् सं-नह्यध्वं[18] निशा-चराः[19] ॥२६॥
गच्छामस् त्वरितं[20] तत्र यत्र तद् वानरं बलम् ।
सुख-सुप्तान् हनिष्याम[21] एतद् हि मम रोचते ॥२७॥
महोदरोऽथ निर्-भर्त्स्य[22] धूम्राऽक्षं[23] वाक्यम् अब्रवीत् ।
सु-रक्षितं च रामेण सु-ग्रीवेण च तद्[24] बलम् ॥२८॥
वानरैश् च महा-वीर्यैः[25] समन्तात् परि-चारितम्[26] ।

---

१. ल२ अ–मानुष्येषु । २. रा ब ल१ ल२ अ–दीनेषु । ३. फ–•रूपेषु । ४. फ–मे सदा । रा ल२–नित्यशः । फ–हनिष्यामि । ५. रा–दशानन ॥ ६. फ–महाश्रय । ७. आ– विरमस्व । ८. च रा प्र ब ल१ ल२ अ–यं । ९. आ–मुशलं । च–सुसलं । प्र ब–मुसुलं । १०. च–भ्रामभाणस् । रा अ–भ्राममानस् । ब–भ्रमसाणस्तु । ल२–भ्रामयाणस्तु । ११. फ–रावणाननमैक्षत ॥ १२. ल१–उक्तो । १३. च–धुम्राक्षो । १४. च–आगंतौ । १५. फ–........ खाश्च । १६. च–तपास्विनः । १७. प्र ब–स्थितस् । १८. आ–संनर्धमद्धं । १९. च–निशाचरः । २०. च रा ब ल१ ल२ अ–स्वरितास् । २१. रा–हन्याम । अ–हनिष्यामि । २२. फ–महोदरोपि निर्भेत्स्यं । रा–महोदये तु निमरस्य । च म–महोदरोप्यानिर्भर्त्स्य । २३. रा–धूम्राक्ष । २४. च–स्तुति । २५. रा म ल१ ल२ अ–महावीरैः । २६. च–परिचारित म ।

न तत्र गमनं युक्तं पुर-गुप्तिर् वि-धीयताम् ॥२९॥
पूर्वम् एतद् अभूत् कार्यं परे पारे महोदधेः ।
सेतौ वा बध्यमाने तु विघ्नः कार्यो निशा-चराः ॥३०॥
साम्प्रतं त्व् आ-गते सैन्ये पुरस्ताद् बलिनो वयम् ।
शस्त्राणां कवचानां च कृत्वा सम्यग् उपाऽर्जनम् ।
तेषां दास्यामहे युद्धं हनिष्यामश् च तान् मृधे ॥३१॥
एतस्मिन्न् अन्तरे वीरः प्र-गृह्य विपुलं भुजम् ।
अति-कायो महा-वीर्यो रावणं वाक्यम् अब्रवीत् ॥३२॥
रक्षितव्या प्रजा राज्ञा रक्षितव्या द्वि-जातयः ।
दस्यवश् च नि-हन्तव्याः परि-पाल्याश् च साधवः ॥३३॥
अ-न्यायेन न हर्तव्यं पर-स्वं राक्षसर्षभ ।
एवं यो वर्तते राजा [24]चिरं पाति वसुं-धराम् ॥३४॥
रामेण विनय-ज्ञेन व्य्-अलीकं [25]किं कृतं हि नः ।
जनस्थान-गता येन तस्य भार्या त्वया हृता ॥३५॥
पति-व्रता महा-भागा लङ्कां किं सा प्र-वेशिता ।

---

१. रा व ल₁—वनागमनं । २. आ—परगुप्तिर् । च—पुरं गुप्तिर् । रा प्र च ल₁ ल₂ अ—पुरे गुप्तिर् । ३. प्र—एवम् । ४. रा—पारे । ५. च—सेतो । प्र—सेतो । ६. प्र—बाधयमाने । च—बाध्यमाने । ७. रा व ल₁ ल₂ अ—च । ८. रा ल₁—विघ्न कार्यो । प्र—विघ्नकार्यो । ९. रा—निशाचरा । ल₁—निशाचरः । १०. फ—त्वागतं सैन्यं । ११. प्र—पुरस्तात् । १२. व—वालिनो । १३. च—कवचानां तु । १४. च—उपार्जितम् । १५. प्र—तेषामुपास्महे । १६. आ फ—हरिष्यामश् । १७. प्र ल₁ ल₂ अ—हवावीरो । १८. फ—राक्षेय । च प्र व ल₁ ल₂ अ—राजन् । १९. रा—दस्यवश् ॥ २०. रा प्र ल₁ ल₂ अ—हन्तव्यं । २१. प्र अ—परं स्वं । २२. रा प्र च ल₁ ल₂ अ—राक्षसेश्वर । आ—०र्षभा । २३. व ल₁—यवन्तरे । २४. च—चिरे । २५. रा—सुमेदनीम् । प्र च ल₁ ल₂ अ—स मेदिनीम् ॥ २६. रा व—विनियसेनं व्यलीकं हि । २७. फ—कृता ॥ २८. आ—०भाग । २९. रा व प्र ल₁ अ—लंकायां किं प्र० । ल₂— लंकायां किं स प्रवेपिता ।

यतः प्र-वेशिता सीता उत्-पाता दारुणा भृशम् ॥३६॥
कार्योऽकार्ये न जानीध्वं सर्व एव न सं-शयः ।
बलेन गर्विता यूयं वि-नाशाय कुलस्य नः ॥३७॥
तन् मैह्यं रोचते बुद्ध्या सीता रामाय दीयताम् ।
पर-भार्या न युक्ता तु बलाद् हर्तुं निशा-चराः ॥३८॥
सं-मान्य दीयतां तस्मान् मैथिली जनकाऽऽत्म-जा ।
एवम् उक्त्वाऽति-कायस् तु तूष्णीं-भूतो बभूव ह ॥३९॥

इत्यार्षे रामायणे सुन्दर-काण्डे राक्षस-मन्त्रणं नाम शततमः सर्गः ॥१००॥

समाप्तश्चाऽऽयं सुन्दर-काण्डः ।[13]

---

१. च–छन्दारुणा भृशम् । रा प्र ब ल$_1$ ल$_2$ अ–दारुणाखतः । २. च–कार्यं कार्यं न जानीध्वं । आ–कार्याकार्यविजानीध्वं । रा ब–कार्यकाल न जा० । प्र ल$_1$ ल$_2$ अ–कार्यकाले न जा० । ३. फ–मध्ये । ४. ब ल$_1$ ल$_2$–युक्तं । ५. आ–सम्मान्य । ब–समान्य । ६. ब–तस्माद् । ७. रा–०त्मजां । ८. अ–उत्तयाति० । रा–उक्काति० । ९. फ–तूष्णीं संस्थितं रावणं ॥ १०. फ–समुद्रतरणो । आ–लंकापर्वणि राक्षसमन्त्रण । च रा प्र ब ल$_1$ ल$_2$ अ–राक्षसमत्रो ॥ ११ रा ल$_1$ ल$_2$ अ–समाप्तोय । १२ ल$_2$–सुन्दर काण्डः पंचमः। ल$_1$–सुन्दरकाण्डः पंचम इति । १३. अत. परमाऽऽदर्शग्रन्थानां विशिष्टा उपसंहारा एवं भवन्ति । आ–शुभमस्तु कल्याणमस्तु सवत् १६४६ पौषसुदी ११ मंगळवारे श्री आगरा महाकोटे पातिसाह श्री अकबर जलालदीनराज्ये श्री धुंदोदास इदं श्रीरामायणपुस्तकं लिषापितं । श्री अगलपुरे श्वेतांबरकपूर-लिषतं यादृश्य पुस्तक दृष्ट्वा तादृश्य सु मम दोषे न दी० । रा–अतः परं युद्ध-काडो भविष्यति । यस्याऽयं प्रतिसन्धिः । श्रीरामाय नमः । सवत् १९०० ॥ प्र–अत. पर लंकाकाण्डो भविष्यति । अशीतितमे वर्षे सप्तम्या रविवासरे । ज्येष्ठे मासे सिते पक्षे सुन्दरो लेषितो भिपा(ष्या) । दयारामेण विदुषा कथा-व्याख्यानसिद्धये । शुभमस्तु ॥ ल$_1$–शुभमस्तु सर्वजगतां । अथातो लंकायां युद्धपर्व लिख्यते । जित भगवता तेन हरिणा लोकधारिणा । अजेन विश्वरूपेण निर्गुणेन महात्मना ॥ ल$_2$–शुभमस्तु सर्वजगता । शुभं लिखित देवीचंद अम-गोत्रा जसरोटे राज विर्चो सल्हणी दा पुरमण्डलवासी सं० १९१७ । देवीचंद अमगोत्रेण वन्थाया. करपीडने । वाल्मीकि पुस्तकं दत्त देविकाया तटे शुभे ॥ पुस्तक सुन्दरकांड पंडित देवकीनदन दा । शुभमस्तु सर्वजगतां ॥